ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]
माघमासः २०२१ वि०, जनवरी-फरवरी १९६५ ई०

ऋषिः—मेधातिथिः काण्वः। देवता – इन्द्राग्नी। छन्दः – गायत्री।

## इन्द्र और अग्नि को महान् बनाना

ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम्।
अप्रजाः सन्त्वत्रिणः ॥ ऋ. १।२१।५

(ता इन्द्राग्नी) वे तुम दोनों इन्द्र और अग्नि (महान्ता) महान् तथा (सदस्पती) शिर रूपी देवस्थान के स्वामी बनकर (रक्षः उब्जतम्) ज्ञान को आवृत करने वाले राक्षसों का वध करो। (अत्रिणः) हमें भक्षण कर जाने वाले शत्रु (अप्रजाः सन्तु) निःसन्तान हो जायें।

ये इन्द्र और अग्नि ज्ञान-विज्ञान को आवृत करने वाले तमःप्रधान राक्षसों का विनाश उसी अवस्था में कर सकते हैं जब कि ये महान् बन जायें और "सद" अर्थात् शिर रूपी देवस्थान के स्वामी बन जायें। मन्त्र में प्रार्थना की गई है कि ज्ञान को आवृत करने वाले मस्तिष्क में विद्यमान सब राक्षस विनष्ट हो जायें।

तेन सत्येन जागृतमधि प्रचेतुने पदे।
इन्द्राग्नी शर्म यच्छतम् ॥ ऋ. १।२१।६

हे इन्द्र और अग्नि! (प्रचेतुने पदे) प्रकृष्ट रूप से ज्ञान देने वाले दिव्य पद के (अधि) ऊपर तुम (तेन सत्येन) उस परम सत्य से (जागृतं) जागृत होओ। और हे इन्द्राग्नी! तुम (शर्म यच्छतम्) अपनी शरण व दिव्य सुख हमें प्रदान करो।

'प्रचेतुने पदे' वह परम पद है जहां कि पहुंच कर ब्रह्माण्ड का समग्र सत्य प्रकट हो जाता है। सामान्य मनुष्य का शरीरान्तर्गत सिररूपी परमपद तमसाच्छादित होता है। परन्तु जब इन्द्र और अग्नि जागृत हो जाते हैं तब वह परम पद मनुष्य के लिये उद्घाटित हो जाता है, और उस समय वे वहां कार्य करते हुए प्रतीत होते हैं। मनुष्य को वे दिव्य-सुख व दिव्य-गृह प्रदान करते हैं, उस अवस्था में मनुष्य सदा दिव्यता में निवास करता है।

पूर्वतोऽनुवृत्त —

# मैत्रायणीसंहितोक्तसूक्तिसंग्रहः

(४. ५. ७--४. ८. १०)

श्री पं. विद्यानिधिः शास्त्री व्याकरणाचार्यः

**२५८. हस्तादानमुखादानपशुभेदः --**

हस्तादाना अन्ये पशवो मुखादाना अन्ये। मर्कटः पुरुषो हस्ती ते हस्तादानाः। इतरे पशवो मुखादानाः॥ हस्तेन आददतीति हस्तादानाः। एवं मुखादानाः। मर्कटो वानरः।

**२५९. पशूनां सद्योजातानां, पुरुषस्य तु संवत्सरजातस्य प्रतिष्ठाने हेतुः--**

सद्यो जाताः पशवः प्रतितिष्ठन्ति। संवत्सरे पुरुषः। उपांश्वन्तर्यामौ वै अन्वन्ये पशवः। पुरुषस्त्वै यज्ञेन संमितः। उपांश्वन्तर्यामौ ग्रहविशेषौ। त्वै तु वै इति निपातद्वयसमाहारः।

**२६०. कौशिकशब्दनिर्वचनम्--**

चत्वारो वै पृश्नेः स्तना आसन्। ततस्त्रिभिर्देवेभ्योऽदुहत्। कुशीभिरेकोनुनद्ध आसीत्। तं वै इन्द्र एवापश्यत्। तेनेन्द्रायैवादुहत्। तद्वै अस्य कौशिकत्वम्। यदाह ब्राह्मण कौशिक इति॥ पृश्नेः गोरूपाया भूमेः।

**२६१. सूर्यग्रहणम्--**

स्वर्भानुर्वै आसुरः सूर्यं तमसाविध्यत्। अत्रत्यं रहस्यमाकलयितुम् ऋ ५,४०,६ मन्त्रोऽपि द्रष्टव्यः। वस्तुतस्तत्समस्तं सूक्तमेव प्रस्तुतं वस्तु संस्तवीति।

**२६२. मित्रावरुणयोः ब्रह्मक्षत्ररूपत्वम्--**

ब्रह्म वै मित्रः। क्षत्रं वरुणः। तस्माद् ब्रह्म च क्षत्रं च पयस्वितमे॥

**२६३. ब्राह्मणस्य पञ्च देवताः--**

पञ्च वै ब्राह्मणस्य देवताः। अग्निः सोमः सविता बृहस्पतिः सरस्वती। तस्माद् ब्राह्मणमन्ये मनुष्या उपधावन्ति। एतस्य हि भूयिष्ठा देवताः। तासां तिस्रोऽवान्तरं श्रोत्रियस्य। अग्निर्बृहस्पतिः सरस्वती। तस्मात् श्रोत्रियमश्रोत्रिया उपधावन्ति। एतस्य ह्यवान्तर भूयिष्ठा देवताः॥

**२६४. सवनत्रयदेवताः--**

आग्नेयं प्रातःसवनम्। ऐन्द्रं माध्यंदिनं सवनम्। वैश्वदेवं तृतीयसवनम्॥

**२६५ सरमाया वाग्रूपत्वम्--**

वाग् वै सरमा॥ इदं च प्रायिकम्। सहरमाणा अन्तःकरणवृत्तिरपि पुरुषस्य शक्या सरमेति व्यपदेष्टुम्। विदद्यदी सरमा रुग्णमद्रेः इत्यादि (यजुः ३३,५९) मन्त्रे खलवद्रेरात्मनो रुग्णं स्खलितं सरमारूपान्तःकरणवृत्तिरेव वेदितुं प्रभवतीति संगतेः।

**२६६. वाचस्त्रिविधमुच्चारणम् —**

त्रेधा हीयं वाग् वदति। शनैरुच्चैरथ सूच्चैः॥

**२६७. वाङ्मनसयोः श्रेयसि विवादः--**

वाक् च मनश्चावदेतामहं श्रेयानस्मि अहं श्रेयानस्मीति। तौ प्रजापतिं प्रश्नमैतां, सा वागब्रवीत्--नैव मया किंचनानभ्युदितं क्रियत इति। अथ मनोऽब्रवीत्--नैव मया किंचनानभिगतं क्रियत इति। स मनसेऽन्वब्रवीत्।

सा वागब्रवीत्-अहव्यवाडेवाहं तुभ्यमसानीति। यस्मादेषा प्रजापतयेऽहव्यवाट्। तस्माद् यत् किंचोपांशु क्रियते तदाहु कृतमेतत् क्रियत इति ॥

२६८. पुमान् दायादः स्त्री त्वदायादा—

यत् स्थालीं रिञ्चन्ति न दारुमयं, तस्मात् पुमान् दायादोऽथ स्त्री अदायात् अथ यत्, स्थालीं परास्यन्ति न दारुमयं, तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसम्। दायमत्तीति दायात्। न दायात् अदायात्।

२६९. यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः—

तस्मादेक श्रेष्ठ यन्तं बहवः पश्चादनुयन्ति।

२७० मरुतामर्थवादः—

ऋतवो वै मरुतः। पशवो वै मरुतः ॥

२७१. अग्नीन्द्रादित्यानामर्थवादः—

तेजो वै अग्निः। इन्द्रियमिन्द्रः। ब्रह्मवर्चसमसौ आदित्यः ॥

२७२. प्राणवानेव पश्यति, न त्वप्राणवान्—

योऽगतासुः स परिपश्यति। यो गतासुर्न स परिपश्यति। गतासुः गतप्राणः।

२७३. ब्रह्मद्वारेण सृष्ट्युत्पत्तिः—

ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत ॥

२७४. स्त्री निरिन्द्रिया पुमान् इन्द्रियवान्—

तस्मात निरिन्द्रिया स्त्री। पुमानिन्द्रियवान्। तस्मात् पुमांसः सभां यन्ति। न स्त्रियः।

२७५. प्रजापतेर्यज्ञरूपत्वम्

यज्ञो वै प्रजापतिः।

२७६. एकादशिनी स्वरूपम्—

कृष्णशीर्षा आग्नेयः। मेषी सारस्वती। बभ्रुः सौम्यः। श्यामः पौष्णः। शितिपृष्ठो बार्हस्पत्यः। पिशङ्गो वैश्वदेवः। वृष्णिरैन्द्रः। कल्माषो मारुतः। संहित ऐन्द्राग्नः। अधोरामः सावित्रः। पेत्वो वारुणः। स प्रजापतिरेतामेकादशिनीमपश्यत्। स एतानीन्द्रियाणि वीर्याण्यपश्यत्—आत्मा आग्नेयः। वाक् सरस्वती। इन्द्रियं सोमः। पुष्टिः पौष्णः। ब्रह्म बृहस्पतिः। बलं विश्वेदेवाः। वीर्यमिन्द्रः। ओजो मरुतः। सह इन्द्राग्नी प्रसवाय सावित्रः। निर्वरुणत्वाय वारुणः।

२७७. वैश्वदेवीः प्रजाः-

वैश्वदेवीरिमाः प्रजाः।

२७८. मनुष्येषु ब्रह्मक्षत्रयोर्भूयिष्ठभाक्त्वम्—

यदग्निश्चेन्द्रश्च भूयिष्ठभाजो देवतानां, तस्माद् ब्राह्मणश्च राजा च भूयिष्ठभाजो मनुष्याणाम्।

२७९. वरुणस्यार्थवादः—

समुद्रो वै वरुणः।

२८०. गुणकर्मणैव जातिर्भवति, न जन्मना—

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्। श्रुतं चेदस्मिन् वेद्यं स पिता स पितामहः ॥

२८१. स्त्रिया नामेरधोभागो वीर्यवान्—

अवाचीनं हि नाभ्याः स्त्रिया वीर्यवत्।

२८२. ब्रह्मशक्तेश्चक्षुषा नाशनसामर्थ्यम्—

अरातीयन्ति वै एते एतस्मै ददते। ईश्वरा ब्राह्मणा सोमपाश्चक्षुषापहन्तोः॥ अरातीयन्ति शत्रुवदाचरन्ति। एते सदस्याः। ददते दानं कुर्वते। अपहन्तोः अपहन्तुम्। ईश्वराः समर्थाः।

२८३. दक्षिणाशब्दनिर्वचनम्—

यद् दक्षिणा दीयन्ते यज्ञं वै एतद् दक्षयन्ति तद् दक्षिणानां दक्षिणात्वम्॥ दक्षयन्ति समुत्स

हयन्ति बलीयांसं सम्पादयन्ति ।

८४. बहुदानप्रशंसा—

बहु देयम् । सेतुं वै एतत् कुरुते स्वर्गस्य लोकस्य समष्ट्यै ।। समष्ट्यै व्याप्त्यै ।

८५. दत्ता दक्षिणा न पुनरादेया—

यत्तां पुनः प्रतिगृह्णीयात् व्याघ्री एनं भूता प्रच्छिनीयात् । अन्यथा सह प्रतिगृह्या । तथा हैनं न प्रच्छिनाति ।। प्रच्छिनीयात् हिंस्यात् ।

२८६. गोवासोहिरण्यादिदानप्रशंसा—

यद गां ददाति । वैश्वदेवी गौः । विश्वेषां देवानां तया प्रियं धामोपैति । यद् वासो ददाति । सर्वदेवत्यं वै वासः । देवता एवास्य तेनाभीष्टाः प्रीता भवन्ति । यत् कृतान्नं ददाति मांसं तेन निष्क्रीणीते । यदनो वा रथं वा शरीरं तेन यद् हिरण्यं ददाति आयुस्तेन वर्षीयः कुरुते । यदश्वं ददाति । प्राजापत्यो वै अश्वः । प्रजापतेरेव तेन प्रियं धामोपैति । अथो अमुष्यादित्यस्य लोकं जयति ।। वासः वस्त्रम् । अनः शकटम् । कृतान्नं संस्कृतमन्नम् । हिरण्यं सुवर्णम् वर्षीयः प्रवृद्धतरम् ।

२८७. आदित्ययानप्रशंसा—

एष वै अपरिपरः पन्था अरक्षस्यो येनासौ आदित्य एति ।। अपरिपरः शत्रुरहितः । अरक्षस्यः रक्षसामहितः ।

२८८. यज्ञविलोपे हानिः—

यद्वै यज्ञः संतिष्ठते मित्रोऽस्य स्विष्टं युवते । वरुणो दुरिष्टम् ।। संतिष्ठते विनश्यति । मित्रः सूर्यः । युवते पृथक् करोति । वरुणः क्रूरो देवो रात्र्यभिमानी । दुरिष्टम् दुष्टमीप्सितम् ।

२८९. ऋग्यजुः साम्नामुच्चारणक्रियाभेदः—

उच्चैर्ऋचा क्रियते । उच्चैः साम्ना । उपांशु यजुषा ।। उपांशु मौनितया ।

२९०. वैश्वकर्मणग्रहप्रशंसा—

इन्द्रो वै वृत्रमहन् । स इमं लोकमभ्यजयत् । अमुं तु लोकं नाभ्यजयत् । तं विश्वकर्मा भूत्वाभ्यजयत् । यद् वैश्वकर्मणो ग्रहो गृह्यते ऽमुष्य लोकस्याभिजित्यै ।

।। इति शुभं भूयात् ।।



**भारत के प्रधानमन्त्री श्री लालबहादुर शास्त्री का रेल उपभोक्ता सलाहकार परिषद् की चौथी बैठक में उद्घाटन भाषण ( २४ सितम्बर १९५८ )**

भ्रष्टाचार समाप्त करना बहुत मुश्किल काम है। पर मैं पूरी गम्भीरता कहता हूं कि यदि हम गम्भीरता और पूरे निश्चय से इस समस्या को नहीं सुलझाते हम अपने कर्तव्य से विमुख होते हैं।



# तत् सर्वं तपसा साध्यम्

प्राचार्यः—श्री दत्तात्रेय बालकृष्ण कालेलकरः

किं नाम तपः ?

संयमः, चिन्तनं, परिश्रमश्च— एते त्रयः खलु तपसः स्कंधाः । संयमेन शरीर-शुद्धिः चित्तशुद्धिश्च संपद्यते । तयोश्च सामर्थ्यं विवर्धते । देहे चेतसि च एकाग्रता उत्कटता च प्रादुर्भवति । सकलानि इन्द्रियाणि मानसिकाश्च शक्तयः संयमेन प्रकर्षतां यान्ति । तेनैव संयमेन चिन्तनं सत्त्वशालि परिश्रमश्च साफल्यं लभते ।

मानवस्य गौरवं तस्य मननशक्तौ निहितम् । चित्तवृत्तिं सन्नियम्य यदासौ तां कस्मिन्नपि एकस्मिन् विषये नियोजयति तदा आन्तरिकं बाह्यं च जगत् स्वीयान् सर्वान् रहस्यान् तत्-समक्षं आविष्करोति । संयम-सहितं मननमेव खलु योगस्य रहस्यम् । धारणा-ध्यान-समाधयः—एते तु सर्वे परवर्तिनः पदार्थाः ।

तपसस्तृतीयः स्कन्धस्तावत् परिश्रमः । परिश्रमेण विद्या-कला-कौशलादीनि वस्तूनि वशंवदीभवन्ति । ऋषयो ब्रुवते—ऋते श्रान्तस्य न सहाया वै देवाः ।

अस्मदीयैः पूर्वजैः नानाविधानि तपांसि तप्त्वा तपःक्षेत्रे प्रावीण्यं समधिगतम् । तैश्च अनुभूतं यत् तपोऽपि विधिपूर्वकमेव अनुष्ठेयम् । विधिवर्जितं तपो विफलं भवति । तपसः दुरुपयोगोऽपि पूर्वपुरुषैः विहितः । ततश्च तैरवगतं यद् अर्थशून्या तपस्या निष्फलैव भवति । आत्मशक्तेः विवर्धनार्थं नानाविधान् उपायान् परिचरता परिशीलयता मुनिसत्तमेन भगवता कृष्णद्वैपायनेन स्वकीयं अनुभवतत्त्वं इत्थं प्रस्तुतम्—

> यद्दुरापं दुराम्नायं—
> दुराधर्षं दुरन्वयम् ।
> तत् सर्वं तपसा साध्यं,
> तपो हि दुरतिक्रमम् ।।

यः खलु सामर्थ्यविकलः, यश्च क्षीण-संकल्पः, स वै कथं आत्मानं परिचिनुयात् । यश्च प्रमादी यश्च शिथिलः स केवलं यदृच्छया आपाततो वा आत्मशक्तिं न विन्दति । अथ च यो वै अर्थविहीनं तपस्तपति, सोऽपि आत्मदर्शनं न लभते ।

तपसा आत्मशुद्धौ सत्यां, योगेन च एकाग्रतायां सम्यक् संसाधितायां, ज्ञानमये च तपसि समाचरति, एवं च कर्मसु कौशलं आकलय्य मनुष्यः तपः पूतो भवति तपोधनश्च जायते । सर्वविधाँश्च पुरुषार्थान् समधिगच्छति । नूनं त्रिविधा तपस्यैव संस्कृतेः भूमिका । संयमेन, मननेन सर्वविधैश्च परिश्रमैः एवं मानवजातिः प्रगतिं चक्रे, उन्नतिं च लेभे ।।

भाषांतरकर्त्ता
श्री शंकरदेवो विद्यालङ्कारः



दिव्य उषा परमदेव का आगमन है । यह है सत्य और परम सुख की ज्योति जो कि हम पर ज्ञान और आनन्द के अधिपति की तरफ से बरस रही है—अमृतस्य केतुः स्वसरस्य पत्नीः ।

— 'वेद-रहस्य'



# भारतेऽणवस्त्रनिर्माणम्

श्री रघुवीरो मुमुक्षुर्व्याकरणाचार्यः, वेदविभागः काँगड़ीगुरुकुलम्

चिरकालाच्चीनदेशं प्रत्यस्माकं प्रेमपूर्णो व्यवहारो मैत्रीयुक्तः सम्बन्धश्चासीत्। परं साम्प्रतं स एव चीनदेशोऽस्माकं स्वातन्त्र्यं भुवि सुरत्वं चापहर्तुं नितरां कामयते। तदर्थञ्च निर्मीयते तेनाण्वस्त्रम्। प्रश्नोऽयं यत्--अण्वस्त्रसज्जितेऽपि चीनदेशे भारते तन्निर्माणं कर्तव्यं न वेति। 'मुण्डे मुण्डे मतिर्भिन्ना' इति न्यायेनात्रापि नैकमत्यं जनानाम्। घोषयन्ति केचन यद्भारतेऽण्वस्त्रनिर्माणं कर्त्तव्यम्। सत्वरमेव च कर्त्तव्यम्।

किन्तु तदपरे न सहन्ते। प्रेक्षावतां सुनिश्चितैषा धारणा यद्भारते ऽण्वस्त्रनिर्माणं न कर्त्तव्यमिति। कुत इति चेत्, सन्त्यत्र हेतवोऽस्मिन् विषये। तेषु हेतुषु प्रथमस्तावदस्माकं भारतीयपरम्परा। अस्माकं भारतं खलु शान्तिप्रियत्वेन जगति प्रसिद्धम्। अस्य शान्तिप्रियत्वेन त्वमरलोकवासिनो देवगणा अपि भारतभुवमवतरितुं कामयन्ते।

अस्मिन् विषये स्वामी विवेकानन्दः सरस्वती प्रोवाच--"प्रत्येकजात्या देशस्य च स्वराष्ट्रनिर्माणे विश्वनिर्माणे च किञ्चिद् विशिष्टं लक्ष्यं भवति। यत्र पाश्चात्यदेशा विज्ञानप्रधानाः, राजनीतिप्रधानाश्च, तत्र भारतं खलु धर्मप्रधानम्, अध्यात्मप्रधानञ्च वर्तते।" स्वामिनामिमानि वाक्यानि दीपवदेवास्माकं पथप्रदर्शनं कुर्वन्ति। यदि वयमपि युद्धलिप्सुना चीनदेशेन सह स्पर्द्धमाना अण्वस्त्रनिर्माणं करिष्यामस्तर्हि विलोपयिष्यामः स्वविशेषताम्। तदा तु "अन्धेनैव नीयमाना यथान्धाः" एव वयं सम्पत्स्यामहे।

अथ च द्वितीयो हेतुरत्र धनाभावो वर्तते। नेदमगोचरं चेतोवतां यदस्मिन् काले भारतदेशोऽन्येभ्यो देशेभ्यो धनं याच याचंमृणग्रस्तस्तिष्ठति। यत्र जठरपिटकपूरणार्थमन्नमपि न स्यात्, तस्मिन् देशे कुतोऽण्वस्त्रनिर्माणं साधुरिति न वेत्तुमुत्सहते मनः।

अस्मिन् विषये तृतीयो हेतुरस्य महाविनाशकारित्वम्। अनेन ह्यण्वस्त्रेण युद्धादुपरतानामपि मानवानां संहारः प्रतिपद्यते, न तु युद्धरतानामेव। भवन्तिस्म पुराकालेऽपि युद्धानि, परन्तु मल्लयुद्धानि मल्लयुद्धानि वा नत्वण्वस्त्रयुद्धानि। तेषु युद्धेषु सैनिका हस्ताहस्ति, भल्लाभल्लि, शराशरि चक्रिरे, परं न ते कदापि निर्दोषजनसमूहस्य वधमकार्षुर्यथाऽनेनाण्वस्त्रेण।

गतमहायुद्धे ऽमेरिकादेशेन नागासाखी तथा हीरोशीमा नामनगरयोर्यो विष्फोटोऽकारि, स्मारं स्मारं तद्दृश्यं भिद्यते हृदयम्, खिद्यते चेतः। लज्जामेव च विदधाति मनः। अण्वस्त्रेण यत्रानेकेषां मानवानां संहारः प्रतिपद्यते तत्रास्य रेणुनाऽपि दुःसाध्यरोगोत्पत्तिर्जायते। क्षत्रियास्तावद् दुष्कृतां विनाशाय जन्म लभन्ते न पुनः सुकृतां निर्दोषाणामपि वधाय। येनाण्वस्त्रेण प्रलयसदृशो महान् जनसंहारः प्रतिपद्यते पुनस्तन्निर्माणं कुतोऽभिनन्दनीयं, आदरणीयं वा स्यात्। उपदिशति हि वेदभगवान् 'अनागो हत्या वै भीमा।' अत आम्नायोपदिष्टां शिक्षां मनसि निधाय न करणीयमण्वस्त्रनिर्माणम्।

इदमेव कारणं यन्महता धनेनाण्वस्त्राणां निर्माणं तेषां प्रयोगेण जायमानां महतीं विनष्टिं जगतो हानिञ्च वीक्ष्य जिनेवासम्मेलने सर्वे देशा तन्निरोधनायैकमत्यमवापुः। केवलं दारुणदम्भघूर्णितचित्तः, अखर्वगर्वबर्बरितो दुराग्रही चीनदेश एव तामाज्ञामुल्लङ्घयाञ्चक्रे। किन्त्वनेन कर्मणा तस्य जाड्यम्, दुराग्रहः, अदूरदर्शिता च प्रतिभाति न तु राजनीतिपाटवम्, युद्धकौशलम् वा। तथा समेषां वदनाच्चीनदेशं प्रति धिक्धिगिति गर्हितनादो निःसरति। इतश्च स्वशान्तिप्रियत्वेन लब्धप्रतिष्ठाऽऽस्पदं भारतं भुवि चकास्ति। किं पुनरपि तस्य दुराग्रहग्रहग्रहिलस्य चीनदेशस्याचरणं वयमनुसरेम?

नेदं युज्यतेऽस्माभिः। 'अयसाऽयश्छिद्यते' इति नीतिर्नात्र घटते।

हिटलरप्रवर्तितस्य द्वितीयमहायुद्धस्य परिणामं वीक्ष्याधुना सर्वैरपि देशैर्मिलित्वा संयुक्तराष्ट्रसंघस्य निर्माणं कृतम्। तस्य निर्माणस्य प्रयोजनमपि तदैव सफलीभवति यदा सर्वेऽपि देशाः सर्वभूतरतिभावनया कार्यं कुर्युः। समेषामुत्थानञ्च विचारेयुः। अन्यथा तु महान् समुत्थितो युद्धाग्निस्फुलिङ्गो न केवलं भारतं चीनदेशं वा भस्मसात् करिष्यति, अपितु दावानलो भूत्वा स्वजाज्वल्यमानज्वालामालाभिः समस्तं संसारमेव धक्ष्यति। न वयं विश्वयुद्धं कामयामहे। अत एव चीनदेशस्यान्धानुकरणं न मनसाऽपि चिन्तनीयम्। कुतः पुनस्तन्निर्माणं प्रयोगश्च अत्रास्माकं प्रधानमन्त्रिणा श्री शास्त्रिणाऽप्यवोचि—अहन्तु मानवतानाशकमेव मन्य इति।

येऽपि मानवा विश्वासाद्भयमुत्पन्नम्, शठे शाठ्यं समाचरेत्, आर्जवं हि कुटिलेषु न नीतिरिति नीतिवचो मनसि निधायाण्वस्त्रस्य निर्माणं साधुं मन्यन्ते, तेऽपिभयाऽभिभूता न परमार्थविवेकिनः। प्रवृत्ते ह्यस्त्रसम्पातेऽमेरिका, ब्रिटेन, रूसाद्य देशा अप्यस्माकं साहाय्यं कर्त्तुमुद्यता इति न विस्मरणीयम्।

तथा देशरक्षा तु बुद्धिबलेन भवति न त्वण्वस्त्रबलेन। महामतिमान् कौटिल्यः स्वबुद्धिबलेनैव नन्दवंशं मूलमखनत्। अपरे च महात्मागान्धिसदृशा महापुरुषा बुद्धिबलेनैव स्वाधीनतां लेभिरे। चीनजापानयोर्युद्धे यद्यपि चीनदेशस्य महती चमूरासीत् परन्तु तनुरपि जापानदेशो बुद्धिबलेनैव चीनदेशं जिगाय। महानातङ्कस्तत्राद्यत्वेऽपि जापानदेशस्य वर्तते येन चीनदेशीया नार्यः स्वशिशून् "जापानमागतम्, जापानमागतम्" इति कथयन्त्यः शामयन्ति। तथा स्वाधीनतापश्चाद्भारतनायका बुद्धिबलेनैव स्वदेशं ररक्षुः। उक्तं हि यथा—बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलम्।

केचन श्रीमन्त आक्षेपं कुर्वन्ति यद्भयाभित्रस्ताः कापुरुषा एवाण्वस्त्रनिर्माणं न कामयन्ते। परं न तेषामिदं कथनं युक्तम्। न वयं भयाभिभूता न च कापुरुषाः। वयं भारतभूजन्मानः शोभनकर्माणो भारते किल जन्मलब्ध्वाऽऽत्मनः कृत् कृत्यतां मन्महे। यदि चीनदेशो युद्धमेव कामयते तर्हि वयमपि जागृयाम पुरोहिताः स्वराष्ट्रे। प्राणार्पणैरपि रक्षिष्यामः, स्वजन्ममेदिनीगौरवम्। प्रवृत्ते हि युद्धे वयमपिछेत्स्यामः भेत्स्यामः, घातयिष्यामो ऽरिदलम्। उपदिशति हि वेदभगवान्—यो नो द्वेषत् पृथिवि यः पृतन्याद् योऽभिदासान् मनसा यो वधेन तं भूमे रन्धय पूर्व कृत्वरि। (अथर्व. १४।३।१२)

वयं भारतरेणुधूसरगात्राः, मातृभूमिपुत्रा न मर्षयिष्यामः कस्यापि पराधीनताम्। किन्तु न वयं निर्दोषजनसंहारं कामयामहे। तथा चीनदेशस्तु प्रदर्शयति दीर्घं रूपम्। करोति स्वल्पं च कार्यम्। जागरूकाः साम्प्रतं भारतवासिनः। न क्षुद्रो दुराग्रही चीनदेशो भारतभुवं जेतुमीशः।

अयि विचारकाः! विचार्यन्ताम्। यत्रैकतोऽनेनाण्वस्त्रेण महान् प्रलयसदृशो जनसंहारः प्रतिपद्यते। तत्र द्वितीयपक्षे तन्निरोधेन सुन्दरसुखदनवविश्वनिर्माणकल्पनमनुभूयते। न वयं हिंसका आततायिनश्च। अत एतादृशं विनाशकारिणं प्रलयकारिणं बुद्धिरहितं दुराग्रहसहितमण्वस्त्रं वयं दूरत एव नमामः। वयं भारतवासिनस्तु कामयामहे—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥

# श्री रवीन्द्र-वन्दनम्

(निबद्धा—श्री चिन्तामणि द्वारकानाथ देशमुख महोदयः, दिल्लीविश्वविद्यालयस्य उपकुलपतिः)

[१९४१ तमे खीस्ताब्दे विदुषामवतंस श्री देशमुखमहाभागः कविगुरुं श्री रवीन्द्रनाथं द्रष्टुकामः शांतिनिकेतनाश्रमपदं ययौ। कविवरेण्याय किमुपाहरामि इति स्मारं, स्मारं काव्यकुसुमाञ्जलिरेव प्रकृष्टः उपहारः इति विचिन्त्य सुरभारत्यां इमान् श्लोकान् उपायनीचकार। मंजुलोऽयं काव्योपहारः शांतिनिकेतनस्य संग्रहालयेऽद्यापि सुरक्षितो विद्यते। बन्धुवर्यस्य शंकरदेवविद्यालंकारस्य सौजन्येन संप्राप्तोऽयं काव्योपहारः गीर्वाणवाणीप्रणयिनां सरस्वती विनोदाय भविष्यति—सम्पादकः]

राज्ञोऽन्तिकं रिक्तकरो न यायात्,
पुरो गुरूणां न विदाय-शून्यः।
न मन्दिरं विस्मृतगंधमाल्यो—
बन्धुर्न दृश्यश्च विनोपहारम्॥ १॥

राजा बृहद् वाङ्मय-संसृतेस्त्वं,
गुरु र्नरोद्धारविवर्धिषूणाम्।
नन्वीश्वरो भारत-भावनानां,
सर्वस्य बन्धुर्वसुधा-कुटुम्बः॥ २॥

उपस्थितोऽहं तव दर्शनाय,
कवीश किं ते गुरु कल्पयेर्घ्यम्।
मन्दप्रबोधस्तमसा वृत्तौजा,
रवीन्द्र मृत्पात्र इव प्रदीपः॥ ३॥

स्मरामि रामाय तु वन्यरामा
दन्तव्रणाङ्कानि ददौ फलानि।
मेघार्थमर्घ्यं कुटज-प्रसूनै,
र्यक्षेण क्लृप्तं कृपणे निवासे॥ ४॥

पूगीफलं मान्यमवित्त दत्तं,
भवेत् कदाचिद् विजयदशम्याम्।
शमाश्च चामीकर रूपि पत्रं,
दानार्थमाप्तु र्गणनावलम्बि॥ ५॥

तस्मात् कवे साहसमातनोमि,
कृताञ्जलिस्ते कवनोपहारम्।
समर्पयन् विस्खलितानुविद्धं,
विवक्षुरल्पं हृदयोत्थितं यत्॥ ६॥

धन्योऽस्मि यद् दर्शनमाप्तवांस्ते,
आर्यप्रथामर्मविचक्षणस्य।
वाग्-वैजयन्तीधर नायकस्य,
मनुष्य कल्याण धृतव्रतस्य॥ ७॥

त्वत्तः समिद्धा हृदये स्फुलिङ्गा,
ये ये जनानां विविधासु दिक्षु।
तेषां ज्वलत्यन्यतमो ममापि,
हृदि प्रविश्यात्मरतिं विनाश्य॥ ८॥

आशा ममैषा यदयं स्फुलिङ्गः,
संवर्धमानो ज्वलतु प्रकाण्डम्।
सैव प्रदेया गुरुदक्षिणा ते,
संदेशपूर्तिः कथमन्यरूपा॥ ९॥

अलं प्रलापेन न रुग्णकाया,
उद्वेजनीया गुरवः श्रमार्ताः।
शांतिः सदा शांतिनिकेतने ते,
विराजतां स्वान्तविशोधजन्मा॥ १०॥



# ज्ञानयोगी आचार्यः श्रीव्रजेन्द्रनाथ-शीलः

लेखकः—श्रीशंकरदेवो विद्यालंकारः
रूपांतरकर्ता—श्रीगणेशरामशर्मा, विद्याभूषणः

एकोनविंशत्याः शताब्द्या उत्तरार्द्धे लब्धजन्मनां येषां महामनीषिणां प्रज्ञया, सरस्वती-सेवया च समस्तैव भारतभूमिर्देदीप्यमानाभूत्, तेषु महापुरुषेषु प्रज्ञावत्सु-आचार्यस्य व्रजेन्द्रनाथशीलस्याभिधानमग्रगण्यमास्ते। विगतः ४ सितम्बर १९६४ दिनांकोऽस्य मनीषिप्रवरस्य जन्मशताब्द्याः शुभदिवसोऽभूत्। अस्य मेधाविनः पुरुषस्य प्रतिभैतावदधिकं तेजस्विनी तथा चास्याध्ययनमेतावद्विपुलमासीद्यद्धि डाक्तरविनयकुमारसरकारप्रभृतयोऽस्य शिष्यजनास्तमेतं प्राच्य-पाश्चात्यज्ञानस्य जङ्गमं विश्वकोषं कथयन्ति स्म। बंगप्रदेशस्य बौद्धिके, सांस्कृतिके, तथाध्यात्मिके च नवजागरणेऽस्यावदानं महत्त्वपूर्णमासीत्। अस्य शीलमहोदयस्य सहयोगिषु महापुरुषेषु गुरुदेवो रवीन्द्रनाथ-आचार्य प्रफुल्लचन्द्रराय-जगदीशचन्द्रवसु-स्वामिविवेकानन्द-सरगुरुदासवन्द्योपाध्याय-सर-आशुतोषमुखोपाध्यायादय आसन्।

उपर्यङ्कितानामावली भारतविख्याता बभूव, परन्त्वाचार्यशीलमहोदयस्याभिधानं बंगाभिजनान् मनीषिणः सुशिक्षितान् यावदेव मर्यादितं तस्थौ। अस्यैतदेव हि कारणं यदाचार्यः शीलमहाभाग एकान्तप्रियोऽभूत्तथा विचारशीलो योगीव स्वजीवनयापनं कुर्वाणो बभूव। मानवजातेरस्तित्वं किमर्थमास्ते तथा तस्या जीवनस्य मूलभूताः समस्याश्च काः? अमीषामेव विषयाणां गवेषणार्थं गम्भीराध्ययनार्थं च सः प्राच्याः प्रतीच्यास्तथार्वाचीनानां ज्ञानविज्ञानानां स्वाध्यायार्थं स्वजीवनं समर्पयामास। आचार्यः शीलमहोदयो विषयेऽत्र समधिकं श्रद्धाशीलोऽभूद्यदित्थं विधेनाध्ययनेनानुशीलनेनैव सत्यं ज्ञानं तथा विश्वव्यापिन्या मानवताया अभ्युदयो भावीति।

स हि यथा यथाऽध्ययनस्य गाम्भीर्ये निमग्नो भवति स्म तथा तथा तस्येदं प्रतिभाति स्म यत्तस्य ज्ञानमधुनाल्पाल्पमस्तीति। अस्मादेव कारणात् स स्वाध्ययनानुशीलनयोः परिणामान् सर्वजनसमक्षं प्रस्तुतीकरणं नामैकं महत् साहसपूर्णं कर्म मेने। यतः सः कमपि सुनिश्चितं निर्णयं नोपलेभे, ततस्तस्य ज्ञानस्यागाधो भाण्डारः शिक्षितजनानां समक्षं प्रादुर्भवितुं नो शशाक।

रविवासरे तथावकाशस्यान्येषु दिवसेषु तस्य परिमितसंख्यकाः केचनान्तरङ्गाः सुहृज्जनास्तन्निवासस्थाने खल्वेके च सङ्गता अभूवन्। तत्समक्षं वार्तालापप्रसङ्गे तथा चर्चाप्रकरणसमय एव तस्य ज्ञानसागरसमृद्धेः परिचयो भवति स्म। एषु तत्सुहृत्सु ज्ञानविज्ञानस्य विविधक्षेत्राणामधिकारिणो जना आसन्। विषयेष्वेषु तत्त्वज्ञान-साहित्येतिहास-समाजशास्त्र-ललितकला-गणितशास्त्र-धर्म-विज्ञान-अङ्कशास्त्र-भौतिकशास्त्र-राजनीति-प्रभृतीनां समावेशोऽभूत्।

तस्य निवासस्थानं प्राचीनमिश्रदेशस्य तत्त्वचिन्तकानां ज्ञान-परिषदिव (एकेडेमी) बभूव। आचार्यशीलेन साकं कृतानां ज्ञानचर्चाणामासां परिणामस्वरूपमिमे मित्रगणाः पश्चाद्वर्तिनिकाले स्व-स्वविषयाणां विशेषज्ञरूपे विख्याता बभूवुः। अनयादृशा देशस्य बौद्धिके जागरणे प्रकर्षे च शीलमहोदयस्यावदानं महत्त्वपूर्णमास्ते। केषांचित् पुस्तकानां तथा प्रकीर्णलेखानामतिरिक्तमाचार्यः शीलमहोदयो नाधिकं लिलेख। परन्तु स्वविषयाणां पारगामिनां विदुषाम् सम्मतौ तस्य प्रत्येका कृतिरुदात्तकोटिका निष्पेदे। मुख्यतया तस्येमाः

कृतयो विद्यन्ते—

१. क्वेस्ट एटरनल (एकं काव्यपुस्तकम्)
२. न्यू एस्सेज़ ऑन क्रिटिसिज्म एण्ड न्यू रोमेण्टिक मूवमेण्ट इन लिट्रेचर।
३. वैष्णविज्म एण्ड क्रिश्चियानिटी।
४ महिशूर-संविधानम्।
५. रेसकांग्रेस।
६. सिलेबस् ऑफ इण्डियनफिलोसोफी।
७. पोजिटिव साइन्सेज ऑफ एन्शिएण्ट हिन्दूज।

एषु सप्तमस्य पुस्तकस्य समस्तस्य विश्वस्य विद्याक्षेत्रेषु समादरो महान् समभूत्। अनेन हि ग्रन्थरत्नेन प्राचीनभारतस्यर्षिमुनीनां चिन्तन-मनन-योर्भव्या कीर्तिर्देशे विदेशेषु च पुनः प्रतिष्ठापितास्ते। गुरुदेवस्य रवीन्द्रनाथस्याचार्यं शीलं प्रत्यपूर्वा श्रद्धा समादरश्चाभूताम्। अस्मादेव हेतोर्विश्वभारत्याः स्थापनामहोत्सवस्य प्रधानपुरोहितरूपे गुरुदेवस्त मिममाचार्यं शीलं नियुयोज। गुरुदेवोऽस्य ज्ञान-गरिम्णो विषये किलैकमतीव सुन्दरं रमणीयं प्रशस्तिकाव्यमपि लिलेख। एवमेव विज्ञानाचार्यः प्रफुल्लचन्द्ररायः स्वकीये विश्वविश्रुते 'भारतीय-रसायनशास्त्रस्येतिहासः' इत्याख्ये ग्रन्थेऽस्याचार्यस्य शीलस्य ग्रन्थस्यानेकेषां प्रकरणानामुद्धरणान्यप्युप-स्थापयामास।

अथाचार्यस्य शीलस्य जीवनमतीवसरलमना-डम्बरं चाभूत्। तत्स्वभावो विनम्रः सर्वथाऽभिमा-नशून्यश्च बभूव। अस्या विनम्रतायाः सरलतायाश्च कारणमिदमासीद् यत्स श्रद्धापूर्वकमेतन्मेने यन्मनुष्यस्य ज्ञानमतिपरिमितमास्ते। स कथयति स्म वयं मनुष्याः ज्ञानमहोदधेः कैवलं लघुलघूनां विभागानामेव विषये स्वल्पाल्पं किमपि जानीमहे।

पूर्वं स बंगप्रदेशस्यैकस्य लघोर्नगरस्य विद्यालये प्राध्यापको बभूव। तत्र भवतः प्रखरपाण्डित्यस्य, ज्ञानगौरवस्य च परिचयप्राप्तेः समकालमेव कालि-काता-विश्वविद्यालयस्य तत्कालीनो गुणज्ञ उपकुप-लतिः सर-आशुतोषमहोदयस्तं तत्राकृष्यानिनाय स च तमात्मनो विश्वविद्यालये मानसिक-नैतिकतत्त्व-ज्ञानस्य प्राध्यापकपदे प्रतिष्ठापयामास। तत्पश्चात् स महीशूर-विश्वविद्यालयस्योपकुलपतिर्व्यधीयत। प्रसिद्धः शिक्षण-शास्त्री सरमाईकेलसैडलरमहाशयो विश्वविद्यालयायोगस्याध्यक्षपदाय-इंगलैण्डतो भार-तमाहूयत। आचार्यः शीलोऽप्यस्यायोगस्यैकः सद-स्योऽभूत्। तेष्वेव दिनेषु सरमाईकेलसैडलर आचा-र्यशीलस्य निकटपरिचयमाससाद। स शीलाचार्य-स्य विविधविषयगामिन्या प्रतिभया, पाण्डित्येन च प्रभावितो बभूव। स एव हि शीलमहाभागं महीशूर-विश्वविद्यालयस्योपकुलपतिं व्यधापयत्। सैडलर-महाशयोऽस्य योग्यताविषये लिलेख——

"ज्ञानस्य विशालताया, गाम्भीर्यस्यापूर्वतायाश्च दर्शनं यथा ममाचार्ये शीले जातमस्ति, न तथा पूर्व-पश्चिमयोरन्यस्मिन् कस्मिंश्चनापि जने बभूव।"

भारतभूमेरस्य महर्षिकल्पस्य प्रज्ञापुरुषस्य जन्मशताब्द्याः स्मृतावस्माकं प्रणतिपुष्पाञ्जलयः समर्पिताः सन्ति।



# श्री परमानन्दवर्यस्य जीवन-चरितम्

रचयिता श्री जगन्नाथरिवूशास्त्री, भट्टयार आलीकदल श्रीनगर (२) काश्मीर

प्रकृतिनटयाः क्रीडास्थल्यामृषिमुनिकविवराणां तपोवनभूमावस्यां पवित्रतमायां श्री कश्यपमुनिनिर्मितायां श्री काश्मीरवाटिकायामनेकानेकसाहित्यकार दार्शनिककविप्रभृतीनां च समये समये प्रादुर्भावः समभवत् । यैस्तपस्विभिः स्व स्व समये तपस्यां परिश्रमं च कृत्वा वाङ्मयसरस्वतीसाहित्यकोशाभिवृद्धिं संपाद्य सांसारिक साधारणजीवानां कृते मार्गप्रदर्शनं संपादितम् । यस्यानुसरणेन संसारतापतप्तस्य मानवस्य शोकमोहादिभिस्तप्तं व्याप्तं च मनः स्वच्छशान्तवातावरणे प्रविश्यानन्दभरितं संजायते । नात्र काप्यत्युक्तिः प्रतिभाति ।

तथा ह्यस्यां परमपावनीयायां काश्मीरवाटिकायामनेकानेकप्रकाण्डपण्डितैः प्रातःस्मरणीयभूतैराचार्यपदारूढैः काश्मीरगौरवभूतैः श्रीमद्भिरभिनवगुप्तकैयटमम्मटोत्पलमंखकरत्नाकरशिवस्वामी कल्हनविल्हनप्रभृतभिर्यथा स्वप्रखरप्रतिभायाः परिचयः सुसंस्कृतभाषायां प्रदत्तः आसीत् ।

तथैवात्र श्रीकाश्मीरदेशे रहस्यवादिकविवरैः कवयित्रीभिश्च स्व स्व समये भावव्यञ्जनामयकाश्मीरभाषायामपि स्वप्रतिभापरिचयः स्वगीतिकाकाव्येषु प्रदत्तः । येषां भावः साधारणजनानां कृते ज्ञातुं दुरूहः ।

एते पूर्वोक्ता महात्मानस्तपस्विगणाः कविवराश्च स्वसाधारणजीवनं वेषभूषां चात्मसात्कृत्य श्रमिकगणा इव निरहंकारेण स्वसाधारणगृहस्थे कालयापनं विधाय सदात्मचिन्तने विलीना बभूवुः ।

तेष्वेव महामनस्विषु श्रीपरमानन्दवर्यस्य नाम काश्मीरदेशे स्वर्णाक्षरैरङ्कितं शतचतुष्टयाब्दापगमेऽप्यद्यावध्यमरतामावहति । भविष्यत् कालेऽपि तथैव स्यात् ।

एष महानुभावो मार्तण्डतीर्थप्रवरे (मटनग्रामे) निवसति स्म साधारणगृहस्थे स्थितोऽसौ कृषिकर्मणा स्वजीविकामर्जति स्म । स्वयमपि श्रीपरमानन्दवर्यः स्वरचितगीतिकाव्ये स्वश्रीमुखेनाभिहितवान्—

क० भा०—"परमानन्द आोस अख जमीनदार ।"

स० भा०—"भूस्वामी परमानन्द आसीदेको महामनः ।"

श्री परमानन्दवर्यः काश्मीरभाषायामध्यात्मरहस्यवादनिपुणः काश्मीरिकायाः कवयित्र्याः लल्लादेव्या इव भावव्यञ्जनामयस्वप्रतिभापरिचयं दत्त्वा काश्मीरिकगीतिकाकाव्यस्यैकां नवीनतमामाभां प्रसारितवान् ।

श्रीमतो गीतिका दैनिकसाधारणधर्मकार्येषु गायन्ति । ताश्च साधारणशब्देषु प्रयुक्ताः ॥ परन्त्वेतेषामध्यात्ममयो रहस्यवादः साधारणजनानां कृते ज्ञातुं दुरूहो ज्ञायते ।

एतासां गीतिकानामनुवाद आंग्लभाषायां संपादितोऽध्यापकवर्येण श्रीमताजिन्दकौलेन । तस्यैवानुवादस्य किञ्चिन्मात्रं सहायं लब्ध्वा मया श्रीपरमानन्दविरचितकतिपयगीतिकानां संस्कृतभाषायां पद्यानुवादसंपादने दुःसाहसो विभावसोर्खद्योतप्रकाशदर्शनतुल्यः कृतः । यद्यप्यत्र त्रुटिबाहुल्यमस्ति तथापि गुणग्रहिणो विद्वद्वर्याग्रगण्या महानुभावा भावुका रसिकगणाश्च मदीयत्रुटिषु ध्यानमदत्वा केवलं मामकीयचाञ्चल्यपूर्णमानसिकोत्प्लवंगताया रसास्वादमवश्यं करिष्यन्ति । येन

मदीयमानसिककृतार्थता विदुषां संतोषश्च संभविष्यतीति निवेदयति विनीतः—

श्रीसुदर्शन स्वपितृनामधन्यः
रविकुलसमुद्भूतो जगन्नाथः शास्त्री

( १ )

परानन्दाम्बोधेरुदयति पराख्या शशिकला,
प्रवृद्धा तन्वङ्गी हृदयगगने पञ्चदशभिः ।
प्रनीता सर्वाङ्गी हिमगिरिगुहावासनिरतैः,
सहस्रारेऽह्नोभि गजवदनधाम्नश्शमपरैः ।।

( २ )

प्रभाते योगीन्द्रैः शमदमपरैर्योगनिरतैः,
क्रियासक्तैर्विप्रैर्व्रतनियमयुक्तैश्च यजने ।
व्रजे गोपैर्गोभिर्व्रजयुवतिभिश्चन्द्रवदनः,
वृतो देवैर्दैत्यैरमृतमथने सोऽमरपतिः ।।

( ३ )

पथि श्रान्तैः पान्थैर्बहुविधश्रमैर्मार्गणपरैः,
महादुर्गे मार्गे विविधबहुबाधापरिवृतै ।
नमो यस्मै कस्मैचन भवतु देवाय महसे,
मनः स्थैर्ये प्राप्तो यतिभिरिव योगेऽमरपतिः ।।

( ४ )

अनाकारं तुर्यं गजवदनबिम्बात्समुदितं,
पराख्यं नादं गणपतिविहारे श्रुतिगतम् ।
चतुष्पत्रात्पद्मात्सहजविमलो ऽमाख्य कलया,
गतो मूलाधारादनुविधिपदं सोऽमरपतिः ।।

## अमरनाथ ( देह-गुहा ) यात्रा

मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।
मन्त्रात्मकं शिवं शम्भुं महामृत्युञ्जयं जप ।। १ ।।
देहगुफामणिपीठे सच्चिदानन्दरूपिणम्,
निःसङ्गं वर्तमानं त्वं प्रभुं पूजय प्रत्यहम् ।
लौकिके व्यवहारेऽत्र प्रभोः कैलासवासिनः,
प्रतिमाऽमरनाथस्य यात्रिभिः पूजिता सदा ।
मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।। २ ।।
सरस्वती समाम्नाति श्रुतिगोचरतां गतम्,
महात्मभिः समाख्यातं तथापि त्वं न बुध्यसे
नामरूपात्मकाद्विश्वाद्भिन्नं भावय स्वं प्रभुम् ।
मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।। ३ ।।
स्तुतिरमरनाथस्य देहेऽहंभाववर्जितैः,
शमदमसमायुक्तैः पठनीया समाहितैः,
एकान्ते हृद्गुहावासे यत्र शान्ति लभेन्नरः ।
मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।। ४ ।।
कुरु यात्रां पर्वकाले त्राहि मां च जप सदा,
हरमुखे स्वमात्मानं सर्वतो वरणं कुरु ।
गुफा हृदयनाथस्य सा गुफा सं विभावय,
मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।। ५ ।।
प्रथमा श्रीगणेशस्य प्रतिमा शुभलक्षणा,
गणपतिविहारस्था ऋद्धिसिद्धिप्रदा सदा ।
मूलाधारे महेशस्य द्वारपः दारकः स्थितः
मनः स्थैर्यं समादाय प्रभुं पूजय प्रत्यहम् ।। ६ ।।
सृष्टिकर्ता स ब्रह्माख्यो विहारे षोडशाख्यके,
षण्मुख इव षट्पत्रे स्वाधिष्ठाने सरोरुहे ।
संस्थितः सर्ववेदात्मा सर्ववित्सर्वकर्मकृत्,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।। ७ ।।
जलावर्ते शिवपुरे सार्धत्रिवलयात्मिका,
कुण्डलिनीतिविख्याता कुण्डलाकारवत्स्थिता ।
जलानीव विवर्तन्ते यत्र प्राणाः समन्ततः,
समुद्रसप्तकं तत्र निम्नोन्नतपदं गतम् ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।। ८ ।
अष्टदलमयैः पद्मैः पूरितं प्रकृतेः सरः,
निवर्तय स्वमात्मानं संसाराद्दुःखसागरात् ।

संयोजय विचारेण ध्रुवे शुद्धे शिवे पुनः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥ ९ ॥

ऊर्ध्वं गच्छन्सत्वनिष्ठः शिवसायुज्यभाग्भवेत्,
किमर्थं पतितो दूरे कर्मपाशैः वशीकृतः,
निर्मलां मुक्तिदां वाच श्रृणु मानवसत्तम ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१०॥

प्रणवरहितो मन्त्रस्तीर्थहीनः स्थलः क्वचित्,
न भवेत्परमात्मानं जीवन्मुक्तिर्विना क्वचित् ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥११॥

नाभिदेशे दशदले सरोजे सत्समागमे,
चराचरमयमत्र श्री हरेः सङ्गमं स्थितम् ।
यमासाद्य जनाः सर्वे मुच्यन्ते सर्वकिल्विषैः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१२॥

मन्दिरं विजयेशस्य कृष्णचन्द्रविराजितम्,
दृष्टवा तत्र भवेत् मित्रं हरिश्चन्द्रो महामनः ।
मुच्यते सर्वपापेभ्यः पारं प्राप्नोति मानवः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१३ ।

संकल्पेच्छे परित्यज्य थज्यवारेति नामके,
ग्रामे शिवजटा तत्र परितः राजते सदा,
अनाहतसमाम्नातं मण्डलं संविशेत् पुनः ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१४॥

यथा तथा विशुद्धाख्ये चक्रे छुण्डबलोपमे,
जीवभावमतिक्रम्य देवपूजां समाचरेत् ।
पच्यते जीवलोकोऽत्र सस्यवत् जायते सदा,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१५ ।

तिले तैलं यथा व्याप्तं देहे आत्मा तथैव हि ।
स्वयमेवात्मनात्मानं संयोज्य परमात्मनि,
जीवब्रह्मैक्यज्ञानाय क्रीडन्गच्छेच्छिवालयम् ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१६॥

शक्तश्चेत् मार्गगमने रहस्यपरिपूरिते,
वीराः यत्र निवर्तन्ते सरिण्ये वायुनिर्भरे ।
वात्या यत्र प्रकम्पन्ते बलवीराः सहस्रशः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१७॥

मनसो लयविक्षोभं परित्यज्य स्वदूरतः,
स्वप्रकाशं महादीपं गणेशं निर्मलाकृतिम् ।
निश्चल रत्नदीपं तं धारये स्वे हृदि स्थिरं,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥१८॥

मामलेश विहारस्थं पावनं परमेश्वरम्,
परिक्रम्य तमात्मानमर्पयेद्देवपूजने ।
त्यजेदज्ञाननिर्माल्यं सोहं भावेन पूजयेत्,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् । १९॥

भर्गतीर्थोपरिस्थाने स्वर्गद्वारं मनोहरम्,
अर्घ्यपुष्पमयैः प्राणैः सारवित्सुसमाहितः ।
भावयेत्तत्र तं देवमहंकारविवर्जितः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥२०॥

कण्ठदेशगतो योसौ भुवनानि चतुर्दश,
व्याप्य स्थितो महाविष्णुः प्राणवाहः सदा स्थितः।
आनीलगंगा संस्थानात् वावजन समीपतः,
वहति पवनस्तत्र दिवारात्रमनर्गलम् ॥
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥२१॥

अधिकं दुर्गमं मार्गं मध्ये मध्ये प्रतिष्ठितम्,
सारगर्भं समासेन बुद्धिमान्सुविचारयेत् ।
अक्रियैव समाम्नाता देहद्वारगता क्रिया,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥२२॥

शेषनागस्य पर्यङ्के उत्तमः पुरुषः स्थितः,
निद्रां तन्द्रां परित्यज्य विरक्तमनसा सदा ।
दिवारात्रं समाराध्यः रागमुक्तैर्विवेकिभिः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥२३॥

चित्तसमुद्रसमुद्भूतं पञ्चेन्द्रियतरङ्गकम्,
पञ्चीकृतं महाभूतैस्त्याज्यं तद्धीमता स्वयम्
पद्मनाभः शेषशायी नानारूपधरः स्थितः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२४।।

शनैः शनैः समारुह्य पञ्चालाख्यं महानगम्,
रक्षेत् रत्नं स्वमात्मानं सोऽहं भैरवपर्वते ।
पशुभावमतिक्रम्य स्वात्मस्थं चिन्मय स्मरेत्,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२५।।

समाहितमनो योगी भवेज्जीवन्नपि मृतः,
गर्भयात्रां समासाद्य पारं गच्छेत् महामनः ।
शक्तिरूपा सती तत्र शिवेन सह मोदते,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२६।।

संकल्पहीनमनसा रागद्वेषविवर्जितः,
देशकालविभागज्ञः प्रशान्तमनसा पुनः ।
नैवेशत्वं नानीशत्वं कामयेद्बुद्धिमान नरः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२७।।

परा पश्यन्तीद्वारेण पश्यन्त्यात्मनि तं विभुं,
वैखरीमध्यमाभ्यां च प्रवेशो नात्र योगिनः ।
तामवस्थां प्रपद्यन्ते ऋषयः क्षीणकल्मषाः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२८।।

भावयामृतनद्यां भावं स्नात्वा भूतिविभूषणः,
गृहस्थमलनिर्मुक्तः शिवपत्सु स्वमर्पयेत् ।
यं प्राप्य न निवर्तन्ते नराः संसारवर्त्मनि,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।२९।।

शुद्धो बुद्धः स्थितस्तत्र गुहायामष्टसिद्धिभाक्,
आकाशवत्स्थितः सोऽयं वृद्धिक्षयविवर्जितः ।
नवनिधिपतिश्चैवमीशानः शाश्वतः शिवः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३०।।

आश्चर्यचकितस्तत्र नग्न उन्मत्तवच्चर,
ईश्वरदर्शनाज्जातं शब्दं श्रुतिमनोहरम् ।
ध्यानगम्यं देवगृहे कुर्यात्ताललयाश्रितम,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३१।।

गुफामध्ये स्थितं देवं हृद्बिले भावयेच्च तम्,
तोषणात्तस्य देवस्य प्रीणन्ति सर्वदेवताः ।
निस्सारा नात्र तिष्ठन्ति पाषाणा भूतिभूषिताः
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३२।।

मनः पाषाणगं देवं स्वप्रकाशं मणिमिव,
नूपुराकाशवत्सन्तं शब्दब्रह्ममयं विभुम् ।
भावयेत्तपसा नित्यं देहारण्ये मुनिरिव,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३३।।

प्रणवप्रियशब्दोऽयं सोऽहमात्मा जपेन्नरः,
आज्ञाशिखरनामानं पदं न्यसेत्प्रयत्नतः ।
नेत्रकपोतयुगलं कुरु नीराजनाविधिः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३४।।

निष्कले निर्मले शुद्धे स्वभावपरिपूरिते,
सहस्त्रारे ब्रह्मरन्ध्रे लयं नीत्वा निजं मनः ।
उत्प्लुवन् स्वविकासेन स्वानन्दमदघूर्णितः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३५।।

ज्ञानामृतनदी नित्यं वहति द्वारमर्दिनो,
प्रशस्त स्थानमाख्यातं स्वतन्त्रा यत्र संस्थिति,
समाधौ योगिनो नूनं व्युत्थानेऽपि समाहिताः ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३६।।

स्वयमेव स्वमात्मानं ज्ञात्वा धीरः प्रमुच्यते,
यद्भावनं तदा दानं तत्रैव शमनं पुनः ।
यत्रोदेति प्रमा प्रेम्नस्तत्रैवास्तं गमिष्यति,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।।३७।।

स्थानमेतद्यमेनापि न प्राप्तं जन्मशतैरपि,
प्राप्तं तैर्मुनिभिर्नूनं येषामापतितं पुरः ।
प्रत्यक्षानुभवमात्मानं ज्ञात्वा धीरः प्रमुच्यते,
मनः स्थैर्यं समधाय प्रभुं पूजय प्रत्यहम् ।।३८।।

यत्र प्रस्फुरति नादमनाहतमनर्गलम्,
स्वप्नान्ते च सुषुम्नादौ तुरीयातीतयोः सदा ।
समाधौ मुनिभिर्ज्ञातं तन्निष्कलं निरञ्जनम्,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥३९॥

इडया पुनरावृत्य प्राप्य स्थानं सुसङ्गमम्,
आरुह्य रसपूर्णेन मनसावतरणं कुरु ।
श्रद्धया पितृभ्यः दानं दद्यात्तत्र यथाविधिः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४०॥

त्यक्त्वा गुफां भजेच्छम्भुं यं विना नैव चेतनम्,
समर्पय स्वमात्मानं चैतन्याय परात्मने ।
यद्गत्वा न निवर्तन्ते धीराः शान्ताः महामनाः
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४१॥

शिवोऽसि शिवध्यानं त्वं मनागपि न विस्मर,
पञ्चभूतमयं देहं पुरुषाद्विद्धि त्वं पृथक् ।
चित्रितं मायया रूपं रज्ज्वां सर्पभ्रमो यथा,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४२॥

आगमापायन जीवं विद्धि चिन्मात्ररूपिणं,
ज्ञानामृतेन तृप्तस्य यात्रा भवति ज्ञानिनः ।
अभिव्यक्तिर्निजातत्र पुण्यवार्ता स्मृता बुधैः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४३॥

नवद्वारं निरुद्ध्यैवं स्थानं नवदलाभिधम्,
गच्छेत्यत्र पुनर्जन्म न प्राप्नोति नरः पुनः ।
सफला भवति यात्रा देहकर्मसमुद्भवा,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् । ४४॥

संसारवनगो देहो देवदारुतरूपमः,
देवानां द्वारमाख्यातं मानुष्यं जन्म दुर्लभम् ।
देहनिर्वाणदं प्रोक्तं दानज्ञानादिभिर्बुधैः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४५॥

पुनरागमनं नैव भुवनत्रयभूमिषु,
प्राप्य विष्णुपदं सम्यक् पुरागमनं कुतः ।
यमलः कमल स्तत्र भवनश्च सरस्त्रयः,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४६॥

भर्गपादार्चनं कृत्वा स्वयं संसर्गतो मनः,
मोचयेत्स्वात्मज्योतिस्थं भावयेदन्धतापहम् ।
जन्म क्लेशविनिर्मुक्तः प्राप्स्यसि परमं पदम्,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४७॥

भर्गरूपां नवदुर्गां विद्धि त्वं भयहारिणीम्,
स्वर्गलोकगता देवा नमन्ति प्रत्यहं च ताम् ।
स्वेष्ठदेवी समाम्नाता प्रमाणा मोक्षदायिनी,
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४८॥

शिवशक्तिमयं विश्वं नामरूपविभेदतः,
नानाकारं समाभाति स्ववर्णे कटकादिवत् ।
स्व संवेद्यमिदं सर्वं रहस्योद्घाटनाच्च किम्,
नाथं तं परमानन्दं जगदानन्ददं परम्,
स्वयमासाद्य यत्नेन परमानन्दभाग्भवेत् ।
मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ॥४९॥



# अभिनन्दन-पत्रम्

(रचयिता--श्री रत्नाकरः शास्त्री एम. ए.

( १ )

सत्यव्रतेऽनवरतं निरता यदीयाः,
सर्वे गुणा गुरुतरा गुरुगौरवेण ।
तस्माद् गुरोर्गुरुकुलस्य सुगीयमानो,
भावाञ्जलिः प्रभवतात् त्वरितं मुदेऽयम् ।।

( २ )

यः शैशवे शिथिलयन् मनसो विकारान्,
मुक्तात्मनां विगतभीतिमुदं समेत्य ।
लोकैषणां विकलयन् कलयन् बलेन,
भक्ति प्रभो र्जयति तस्य गुणान् भजामः ।।

( ३ )

दाक्षिण्यपूर्णहृदयो दिशि दक्षिणस्यां,
श्रद्धास्पदेन गुरुणा गुरुणादरेण ।
नुन्नोऽनयज्जन मनांसि नवोन्नतानि,
वेदोदितानि मननानि स नो नमस्यः ।।

( ४ )

कारां विकाररहितः सहितो हितेन,
गत्वा स्वदेश जननीचरणे निबद्धे ।
निर्बाधयन् बुधगणैर्विविधैर्नतो य--
स्तस्मै कृताञ्जलिरयं भवतां विधेयः ।।

( ५ )

पुण्यानि शास्त्रनिवहानि सुखावहानि,
प्राभ्येत्य योऽभ्युतां प्रणिनाय पुण्यः ।
नाद्यापि यस्य रचना-व्यसनं पुराणं,
चेतो जहाति जयते स जनेषु नित्यम् ।।

( ६ )

योऽधिष्ठितो गुरुकुलं विपुलं पुनीतं,
चाद्यापि यो द्युतिमतां द्युतिदीपितान्तः ।
विद्योतते स्वमहसां महतां प्रभावाद्,
भावाञ्जलिर्भवतु तस्य कृते मदीयः ।।

( ७ )

मामा वरेरकरभाषित साक्षिभूतं,
एम० पो० पदं मुदित राष्ट्रपते – निर्देशात् ।
योऽलङ्करोति विमलं विमलं तमेव,
पुण्यं स्मरामि नतमस्तक एष मूर्त्तम् ।।

**गुरुकुलस्योपकुलपतिमहोदयानां श्री सत्यव्रतसिद्धान्तालङ्काराणां**

**राज्यसभायां मनोनीते सति ।**

# साहित्य-समीक्षा

(समालोचनार्थ प्रत्येक पुस्तक की दो प्रतियां पत्रिका कार्यालय में आनी चाहियें)

## व्याकरण कारिका प्रकाशः
### (काशिकास्थ कारिका व्याख्या)

व्याख्याता—श्री सुदर्शनदेवः शास्त्री व्याकरणाचार्यः, सम्पादकः—श्री वेदव्रतः शास्त्री व्याकरणाचार्यः, प्रकाशकः—आर्यकुमार सभा, गुरुकुल जज्झर, रोहतक। पृष्ठ संख्या १४४ मूल्यम् १.२५।

जज्झरगुरुकुलं प्राक्तनार्षप्रणाल्याः पुनरुज्जीवनाय बद्धपरिकरं सत्यं विद्यापीठं विद्यते। न केवलं पुस्तकवाचकानामेव तत्र संघट्टः परमार्यत्वस्य विकासाय प्रसाराय च स्वजीवनान्यपि तत्रत्यैश्छात्रैः समर्पितानि। नानाविधपरीक्षणाय च स्वशारीरयन्त्रं प्रवर्तितमिति विचिन्त्य नूनं साफल्यमेष्यति महान् प्रयास एतेषामिति मे दृढो विश्वासः। अन्यच्च विद्याध्ययनाध्यापनातिरिक्तमार्षसाहित्यप्रकाशनायापि तेषां सत्प्रयत्नोऽवलोक्यते। व्याकरणमहाभाष्यादिविशिष्टग्रन्थास्तैः प्रकाशिताः। अधुनाऽस्माकं हस्ते गुरुकुलात् प्रकाशितं 'व्याकरणकारिकाप्रकाश' नामकं पुस्तकं विद्यते। अस्य पुस्तकस्याखिलं मुद्रणव्ययं तत्रत्यैरार्यकुमारैः सोढमिति साधुवादार्हास्ते विनेयाः पटुवटवः। पूर्वं तावत् संस्कृतव्याकरणमेव सुगूढगह्वरमिव दुष्प्रवेश्यमपक्वप्रज्ञानां शिशूनां धीवृत्तिभ्यः। यदि कश्चिदुत्साहशक्तिसम्पन्नो मतिमान् धीरो वटुस्तत्र प्रवेशाय पन्थानमवाप्नुयात् तदसौ किं पश्यति यत् पदे पदे कारिका मार्गमवरुध्य संस्थिता। तत् व्याकरणस्य सुखावाप्तये प्रावृतकारिकान् मार्गावरोधान् सरलायाः भाषाऽर्चायाः प्रहारेण व्यपोहतुं साधु प्रयत्नो व्यधायि श्रीमता विदुषा सुदर्शनदेवशास्त्रिणा। धन्यवादार्होऽयं शास्त्रिमहोदयः। यदि छात्राणां सुखावबोधाय व्याकरणस्य गूढग्रन्थप्रकाशनसमकालमेव सरला ग्रन्था अपि प्रकाशिताः स्युस्तन्महानयमुपकारः स्यात्। व्याकरणशास्त्रस्याध्येतृभिरिदं पुस्तकमवश्यं ग्राह्यं पठनीयं च।

## पारिषद्यम् शब्दार्थशारीरम्

सम्पादकः—आयुर्वेदाचार्यः श्री पं. दामोदरशर्मा गौडः ए. एम. एस., हिन्दुविश्वविद्यालयः, काशी। भूमिकाकारः—आचार्यः श्री रघुवीरप्रसाद त्रिवेदी बी. ए., ए.एम.एस, आयुर्वेदमहाविद्यालयः, जामनगरम्। प्रकाशकः—श्री वैद्यनाथ आयुर्वेद भवन प्राइवेट लिमिटेड, कलकत्ता। पृष्ठ संख्या २१२। मूल्यम् ४.५०।

पुस्तकमिदमस्माभिः समालोचनार्थं समुपलब्धम्। श्री वैद्यनाथ-आयुर्वेदभवनस्य प्रबन्धसंचालकानां वैद्यराज श्री पं० रामनारायणशर्ममहाभागानां 'प्रकाशकीय' स्तम्भेन ज्ञायते यत् प्रस्तुतपुस्तकं विद्वत्त्रय्याः श्रमसङ्कलितं सन्दृब्धञ्च। अतीव प्रशंसार्होऽभिनन्दनीयश्च साधुश्रमोऽयं यतो ह्यस्मिन् विषयेऽस्माकं सुनिश्चितमतमिदं यत् परब्रह्मोच्छ्वसितवेदादिरत्नाकरेषु सन्निहितानि रत्नान्युद्धर्तुं महनीयकीर्तिभिर्ऋषिभिश्च संवलितेषु ग्रन्थेषु बहिर्मुखवृत्तिभ्योऽपक्वप्रज्ञेभ्यः गोपितं तिरोहितमन्तर्गूढरहस्यं समुद्घाटयितुं यद्यस्ति किञ्चित् सर्वोत्कृष्टं साधुसाधनं तत् शारीरक्रियापरिचायकं शारीरशब्दार्थावधारणकरं प्रयत्नजातमेव विद्यते। यतो हि "यथा ब्रह्माण्डे तथा पिण्डे" इति न्यायात् शारीरज्ञानं समग्रविश्वज्ञानमित्यनर्थान्तरमित्यूह्य गुह्यविद्भिः शारीरकोविदैः। योगस्य प्रोच्चभूमिकायां संरोहायापि शारीरक्रियाविज्ञानमावश्यकम्। मन्ये योगक्षेत्रेऽङ्गानामाभ्यन्तरिकी क्रियाऽनुवैभकवेद्या सूक्ष्मतमा च विद्यते। अत्राभ्यन्तरंगेषु दिव्यशक्तिसमुत्थानं विना शारीरज्ञानं

पूर्णतां नावाप्स्यति । अहं तु मन्ये शरीरिण: समग्राया: शारीरक्रियाया अवरार्घ्यमायुर्वेदीय शारीरक्रियाविज्ञानायत्तं परार्ध्यं चाध्यात्मशक्तिसमुत्थम् । अतोऽस्माभि: शारीरकोविदानां विद्वन्मूर्धन्यानां समक्ष जिज्ञासारूपेण प्रस्तूयते यदस्मिन् विवेच्यवस्तुविनिर्णये वेदा ब्राह्मणग्रन्थादय: कुतो न सगृहिता: ? तत्रापि शारीराङ्गानां बहुशो वर्णनमुपलभ्यते । यदि वेदब्राह्मणादिपूर्ववर्तिग्रन्थेभ्योऽप्यवचित्य सूक्तिपुष्पाणि साधुसम्पन्नायामस्यां मालायां मध्ये मध्ये समचैष्यन्त तत् सर्वा च तां साहित्यसीमामग्रहीष्यदेष साधु समारम्भ एवमस्त्यस्माकं सामान्यजनावलम्बिनी मानसी जिज्ञासा । अस्तु ! पुस्तकस्याध्ययनेन प्रतीयते यत् सन्ति नैकानि विवादपदभाञ्जि शारीराङ्गानि येषां सर्वसम्मतोनिर्णयोऽद्यावधि न समजनि । हृदयक्लोमादिशारीराङ्गानां निर्धारणविषयेऽद्यापि विदुषां द्विविध: सम्प्रदायभेदोऽवलोक्यते । परमस्मिन् प्रस्तुतपुस्तके पूर्वोत्तरपक्षौ प्रदर्श्य तत्रोहापोहविधया यस्तु निर्णयो समन्वयो वा लेखकमहोदयै: प्रादर्शि स तु भूरि परिश्रमं विवेचनाशक्ति च संसूचयति । पुस्तकस्यान्ते च "शारीरशब्दसंग्रह:" इति शताधिकसहस्रप्रायान् शब्दविशेषान् वर्णक्रमेण संकलय्य तत् समकक्षान् एलोपेथीप्रयुक्तपर्यायान् प्रदर्श्य हिन्दीभाषायां च विवरणं प्रदाय साधु समपादि ग्रन्थोऽयं श्री वैद्यनाथ आयुर्वेद भवनसञ्चालकै: प्राक्तनार्षदृष्टिषु बद्धादरैर्महाभागै: । अतस्ते भृशमभिनन्दनीया: । वयमस्य पुस्तकस्य प्रभूतं प्रचारं कामयामहे । अन्ते वयं परमपितरं प्रभुं प्रार्थयामो यत् तेषां श्री: भृशं प्रवर्धताम् येन ते प्राक्तनार्षग्रन्थानां प्रकाशने समर्था: भवेयु: ।

## वैदिक-साहित्य में नारी

लेखक:—श्री प्रशान्तकुमारो वेदालंकार: एम. ए., प्राध्यापक: हिन्दीविभाग:, पी जी. डी. ए. वी. कालिज, नई देहली । प्रकाशक:— वासुदेवप्रकाशन माडल टाउन, दिल्ली-९ । पृष्ठसंख्या १७२, मूल्यम् ७) ।

श्री प्रोफेसरप्रशान्तकुमारवेदालंकारद्वारा हिन्दीभाषायां लिखितं "वैदिक साहित्य में नारी" नामकं पुस्तकमवलोकितम् । वैदिकयुगे नार्या: कि स्वरूपमासीत् कीदृग् उच्चासनं तस्यै प्रदत्तमासीत् कथं वीरप्रसविनी स भवितुमर्हतीत्यादिविषयाणामत्र दिग्दर्शनं जायते । नारीसम्बन्धे या: समस्या: सन्ति तासां सर्वासां साधुसमाधानं वेदादिशास्त्रेषु कथं विहितं तत् सर्वमत्र पुस्तके एकादशाध्यायेषु विभज्य प्रदर्शितम् । तदित्थम्—

१. नारी कन्या रूप में ।
२. गृहस्थाश्रम में प्रवेश ।
३. पत्नी और घर ।
४. पत्नी और पति ।
५. नारी जननी रूप में ।
६. विधवा और उसकी स्थिति ।
७. नारी और उसके सम्बन्धी ।
८. शृङ्गार तथा वेषभूषा ।
९. नारी और यज्ञ ।
१०. नारी और उसकी स्वतन्त्रता ।
११. अपना वक्तव्य ।

प्रस्तुतपुस्तकस्याधारभूता सामग्रीं गुरुकुल एवाध्ययनं कुर्वता लेखकमहोदयेन समपादि । यथा प्र वक्कथने स्वीकृतमेतत्—प्रस्तुत पुस्तक की रचना आज से ६-७ वर्ष पूर्व सन् १९५७-५८ में गुरुकुल कांगड़ी विश्वविद्यालय से वेदालङ्कार प्रतिष्ठि (आनर्स) उपाधि प्राप्त करने के लिये एक ग षणात्मक लघुनिबन्ध के रूप में की गई थी ।

वेदमन्त्राणां व्याख्याने प्राय: विद्वत्सु वैम जायते । एवमेव नारीसम्बन्धिमन्त्राणां स्पष्टीक ऽपि स्वमत्यनुसारं विविधा: विचित्रा: कल्प पाश्चात्यविद्वद्भिरुद्भाविता: । ता: सर्वा: समुत्त रिता विदुषा लेखकेनेति तु वक्तुं नोत्सहे परं तथ

बहूनां सुसमाधानं विहितं प्रतीयतेऽस्मिन् पुस्तके । लोके पुरुषस्य पुनर्विवाहस्याधिकारः सुरक्षितस्तथैव नार्या अप्यक्षुण्ण एव स मन्तव्य इति नात्र वेदानां निषेधांकुशः कथमपि पतति । सतीप्रथाया मनागपि सत्ता नावलोक्यते शास्त्रेष्विति सुष्ठु प्रतिपादितं विदुषा महाभागेन । ये पुरुषाः याश्च नार्यः स्त्रीसम्बन्धे वेदादेशमवबोद्धुं कामयन्ते तेभ्यः पुस्तकमिदं महदुपकारकारि भविष्यतीति नात्र संशीतिलेशोऽपि । तैः सर्वैः संग्राह्यमिदं पुस्तकम् । नारीसमाजस्य समुत्थाने साहाय्यभूतस्यास्योत्तमस्य पुस्तकस्य विरचनाय विदुषो लेखकस्याभिनन्दनं कुर्मः ।

—भगवद्दत्तो वेदालङ्कारः

### चिन्तनाश्च चिदुन्मेषाः

प्रकाशकः—श्री अरविन्दाश्रमः, पाण्डिचेरी २ पृष्ठसंख्या ५५, मूल्यम् रूप्यकद्वयम् ।

पुस्तकमिदं श्री योगिराजाऽरविन्दस्य, 'थॉट्स ऐण्ड ग्लिम्प्सेज' नामककृतेः पद्यबन्धात्मकं संस्कृतभाषान्तरम् । मूलकृतौ लेखकेन The goal, Delight of Being, Man : the Purusha, The End, The chain, Thoughts and glimpses इति शीर्षकैर्भावमया मञ्जुला विचारा उपनिबद्धा, येषामत्र 'लक्ष्यम्, सद् आनन्दमयम्, पुरुष, परिसमाप्तिः, बन्धनशृङ्खलं, चिन्तनाश्च चिदुन्मेषाः' इति शिरोलेखैः सरलया गीर्वाणगिरा सरलैरेव च वृत्तैरनुष्टुप्प्रायैरभिप्रायो विशदीकृतो भाषान्तरकारेण । एकैको विचारः सुरूपं दिव्यसौरभमयं प्रसूनमेकैकम् । तादृशैश्च सुविचार कुसुमैर्गुम्फितेयं रचना पुष्पमालायते नूनम् । चेतश्चमत्कृतिमातन्वतीयं सर्वैरेव हृदये निधेया । वामपृष्ठे मूलम् आंग्लभाषा, तत्सम्मुखमेव दक्षिणपृष्ठे संस्कृतानुवादः इति साधुः सरणिरत्र स्वीकृता, येन भावपरिज्ञानेऽपि न किञ्चन काठिन्यमनुभूयते । एतेषां पद्यानां रसमास्वादयन्तु पाठकाः—

मनुष्यत्वमतीत्यैव 'मनवः' स्याम सत्यतः ।
पशुभावः सहायोऽभूत् पशुभावोऽस्ति बाधकः ।।
आनन्द एव विश्वस्य रहस्यं परमोत्तमम् ।
जानीहि शुद्धमानन्दं ज्ञास्यसे परमेश्वरम् ।।
प्रेमस्वरः प्रधानोऽत्राऽऽनन्दः संगीतमस्ति च ।
शक्तिस्तानस्तथा ज्ञानं गायकं वर्तते किल ।।

अरविन्दसाहित्यस्य सर्वेषामेव प्रमुखग्रन्थानां संस्कृतभाषानुवादं कामयामहे वयम् ।

—श्री रामनाथो वेदालंकारः

## सम्पादकीयटिप्पराय:

### राष्ट्र-भाषा हिन्दी

महत् प्रमोदस्थानमेतत् यत् जनवरीमासस्य २६-१९६५ दिनाङ्कादारभ्य हिन्दीभाषा राष्ट्रभाषा पदमलङ्करोति । उत्तरप्रदेशविहारप्रदेशमध्यप्रदेशहिमाचलप्रदेशराजस्थानादिप्रदेशानां त्वेषा राजभाषा भविष्यति । अस्माद्दिनाङ्कादारभ्य सर्वमपि व्यवहारजातमेषां सर्वकाराणां हिन्दीभाषायामेव भविष्यति । अद्ययावत् भारतीयसंस्कृतिसाहित्यादीनां भारतमातुश्च सर्वमपि शरीरमाङ्गलभाषापटेन प्रावृतमासीत् । अहो ! कियदाश्चर्यं यत् सर्वभाषाजननीयं दैवी वागपि आंगलमुखेन पाठ्यते । आंगलज्ञा एव सभ्याः सुसंस्कृता विद्वांसो मन्यन्ते भारतीयभाषासेवाव्रतिनस्तु हीनाः अल्पज्ञा उच्चासनाऽयोग्या गण्यन्ते । भोः भारतीयाः ! दत्तावधानेन शृणुत ! किमाङ्गलभाषायाः शासनं भारतीयभाषाणामुपर्युपयुक्तं विद्यते? आंग्लाः गताः परं न तेषां भाषा गता । महदाश्चर्यं यत् राजगोपालाचार्यादयो नीतिविज्ञाः भारतीया अपि भारतीयत्वस्याधारभूतां भाषां न सहन्ते । एषा हिन्दीभाषा तु सुव्यक्तिस्पष्टत्वसारल्यादिगुणैः राष्ट्रभाषापदवीं सम्ब-

न्धभाषापदवीं (Link Language) वाऽवाप्ता। भारतस्य सर्वप्रदेशप्रतिनिधिभिः प्रतिनिधिसभायां सर्वसम्मत्या करोत्तोलनसाहाय्येनोच्चासने उपवेशिता। अतस्तत्र मन्तव्यं यदन्यासां भारतीयभाषाणामुपर्यस्या बलादारोपो विधीयते। अतिपुरातनकालात् मिथो विवदमानानां संघर्षरतानां भारतीयानां मध्ये इयं प्रेमसम्बन्धं जनयिष्यति। अस्मिन् भारते यावद् भाषैक्यं लिप्यैक्यं समानाचारविचाराश्च वा न प्रथयिष्यन्ते तावदैक्यं न दृढीभविष्यति। पूर्वयुगे संस्कृतभाषया तदेकत्वं संसाधितमासीत् परमस्मिन् युगे तदैक्यसम्बन्धं हिन्दीभाषैव सम्पादयितुमर्हति। अस्मन्मते तु संस्कृतभाषायै तदुच्चासनं प्रदातव्यं परं यावन्न साऽर्हति तां स्थितिं लब्धुं तावत् हिन्दीभाषैव तदासनमधितिष्ठतु। न जाने कुतो बालवद् बिभ्यति राजगोपालाचार्या द्रविडमुन्नेत्रकडगमस्यान्ये दाक्षिणात्या जनाश्च ? किं हिन्दीभाषा प्रदेशीयभाषामाक्रमितुमर्हति ? कदापि न। प्रश्नस्त्वयं समेषां समक्षमुपस्थितो यत् स्वदेशविदेशभाषयोर्मध्ये कस्य निर्वाचनं कर्तुमभिलषन्ति भारतीयाः, भोः भोः भारतीयाः ! उत्तिष्ठत जाग्रत दासता निहत्य निबोधत।

## नागा-समस्या

अद्यापि नागासमस्यायाः समाधानं न सञ्जातमिति महत् खेदास्पदम्। न केवलं युद्धभाषाऽत्र सफलतामवाप्स्यति स्नेहसंसिक्ता परिचर्यात्मिका वृत्तिरप्यत्रावलम्बनीया। राष्ट्रियताविघातकानां वैदेशिकपादरीणां निष्कासनमप्यस्मात् प्रदेशाद् विधातव्यम्। मन्ये धर्मनिरपेक्षता भारतराष्ट्रस्य परमोद्देश्यत्वेन स्वीकृता परं सेवाधर्मस्तु न कथमपि हातव्यः। सर्वकारस्य सर्वनियुक्तिषु त्वस्य समावेशोऽवश्यं विधेयः।

## श्री विन्स्टन चर्चिलमहोदयस्य निधनम्

द्वितीय विश्वयुद्धस्य विजेता तथा इंगलैण्डराष्ट्रस्य च गोप्ता नीतिनिपुणः श्री विन्स्टनचर्चिलमहोदयो जनवरीमासस्य २४-१९६५ तारिकायां स्वायुषो नवतितमे वर्षे निधनं गतः। निजपूर्वपुरुषाणां नीतिबलेन पादाहतानामुपनिवेशादीनां स्वातन्त्र्यमसहमानस्याऽनुदारदलस्य प्रकृष्टनेतुः श्री चर्चिलमहोदयस्य निधनं युगसमाप्तिसूचकं विद्यते। अस्माकं देशस्य राष्ट्रपतिः डा. राधाकृष्णमहोदयः "सुमहत्तम अंग्रेजः" इति शब्देन स्मृतवान्। बृटिशसाम्राज्यसंस्थापकेष्वन्तिमोऽयं चर्चिलः स्वप्रयाणसमकालेमेवोपनिवेश स्वाङ्कं समादाय दिवं प्रयात इति मन्तव्यम्। एष चर्चिलमहोदयः शूरवीरः प्रत्युत्पन्नमतिः नीतिकुशलः धीर आपत्स्वपि न मन्दोत्साह आसीत्। इंगलैण्डदेशस्य तु सत्यं नररत्नमासीत्। तद्देशवास्तव्यानां दुःखेषु वयमपि दुःखितास्तथाऽस्य महापुरुषस्यात्मशान्त्यै भगवन्तं परमपुरुषं प्रार्थयामो वयम्।

## श्री ला लाजपतराय महाभागानांजन्मशताब्दी

अस्मिन् वर्षे २८।१।६५ दिनांके स्व. लाला लाजपतरायमहाभागानां जन्मशताब्दीमहोत्सवः सर्वकारनिदेशेन भारतवर्षे सर्वत्र ससम्मानं समजायत। ला. लाजपतरायोऽग्निकल्पः शूरवीरः साधुवक्ता निर्भीकः साहसी शिक्षाशास्त्री परमदेशभक्त एवमनेकेषां गुणानामाकर आसीत्। "अग्निना अग्निः समिध्यते" इति वेदोक्तिन्यायात् परमतेजस्विनः प्रदीप्तज्योतिषो दिव्यस्वरूपस्य स्वामिदयानन्दमहाभागस्य सम्पर्कादयं लालप्रदीपोऽपि प्रज्वलितो बभूव। स्वदेशस्वभाषास्वसंस्कृतिसंरक्षणक्षमसंकल्पस्तस्य महाभागस्य हृदि सततं संज्वलति स्म। कारागारनिगडितायाः दासतापाशबद्धायाः मातृभूमेः समुद्धाराय महान् त्यागोऽनेन महापुरुषेण व्यधायि। शिक्षासमुन्नत्यै अपि महान् प्रयासोऽनेन विहितः। 'वीरभोग्या वसुन्धरा' इति सूक्तिरत्रैव चरितार्था जायते। अयं महोत्सवः कल्लोलबहुले नानाविपत्संकुलेऽस्मिन् जगदम्भसि प्लवमानाय भारतीययानाय ज्योतिः स्तम्भ इव सततं पथप्रदर्शकः सर्वेभ्यश्च प्रेरणाप्रदो भवत्वित्याशास्महे।—भगवद्दत्तो वेदालङ्कारः

# ऋषि दयानन्द और बोधोत्सव

( लेखक—प्रो० सत्यव्रत सिद्धान्तालङ्कार, संसद् सदस्य )
उपकुलपति, गुरुकुल कांगड़ी विश्वविद्यालय

उन्नीसवीं शताब्दी के मध्य तथा अन्तिम चरण में भारत का भाग्य एक नया मोड़ ले रहा था। सदियों से सुप्त पड़ी इस देश की चेतना अव्यक्त से व्यक्त की तरफ़, सुषुप्ति से जागृत की तरफ़, प्रगति की तरफ़ अग्रसर हो रही थी। इस जागृत चेतना की अभिव्यक्ति का क्या रूप था? सदियों से सोई पड़ी यह चेतना जब भारत के नवप्रभात में अङ्गड़ाई लेकर आंख खोलने लगी, तब १७७२ में बंगाल में राजा राममोहन राय ने और १८३४ में रामकृष्ण परमहंस तथा उसी काल के आस-पास स्वामी विवेकानन्द ने जन्म लिया, १८२४ में गुजरात में महर्षि दयानन्द ने जन्म लिया, १८६३ में मद्रास में थियोसोफ़िकल सोसाइटी ने जन्म लिया, १८८४ में महाराष्ट्र में प्रार्थना-समाज ने और दक्खन एजुकेशन सोसाइटी ने जन्म लिया और इसी काल में मुसलमानों में चेतना का संचार करने के लिए सर सय्यद अहमद ने जन्म लिया। ये सब भारत की विभूतियां थीं और देश के नवनिर्माण का सपना लेकर गंगा और हिमालय की इस देव-भूमि का सदियों का संकट काटने के लिए प्रकट हुई थीं।

उन्नीसवीं शताब्दी में भारत में जिन विभूतियों ने जन्म लिया उन में से ऋषि दयानन्द का बोधोत्सव-पर्व हम आज मना रहे हैं। ऋषि दयानन्द आये, वे समय के दास बन कर नहीं आये, समय को अपना दास बनाने के लिए आये। महापुरुष यही कुछ करते हैं। हम समझते हैं कि हमें जमाने के अनुसार चलना है, महापुरुष जमाने की गर्दन पकड़ कर उसे अपने अनुसार चलाते हैं। वे खुद नहीं बदलते, जमाने को बदलते हैं। एक समाजशास्त्री ने कहा है कि यह जीवन एक ललकार है, एक चैलेन्ज है, एक आह्वान है। साधारण लोग इस ललकार को सुनकर, इस चैलेन्ज और इस आह्वान को देख कर जीवन-संग्राम से भाग खड़े होते हैं, जमाने का रंग पकड़ लेते हैं, महापुरुष जीवन की ललकार का, जीवन के आह्वान का उत्तर देते हैं, वे इस चैलेंज का जवाब देते हुए जीवन की समस्याओं के साथ जूझ जाते हैं, जूझते हुए प्राणों की बाजी लगा देते हैं, परन्तु इस संघर्ष में पीठ नहीं दिखाते, जमाने का रङ्ग पकड़ने के स्थान में ज़माने को अपने रंग से रंग देते हैं, ज़माने को पलट देते हैं।

ऋषि दयानन्द जब इस देश के रणांगन में उतरे तब उन्हें चारों तरफ़ से ललकार ही ललकार सुनाई दी, चारों तरफ़ से चैलेंज ही चैलेंज नजर आये सब से बड़ा चैलेंज था विदेशी राज्य का। उन के सामने ललकार उठी—क्या विदेशी—राज्य को बर्दाश्त करोगे? ऋषि दयानन्द की आत्मा ने जबाब दिया—विदेशी-राज को बर्दाश्त नहीं करूंगा। उन्होंने राजस्थान के राजाओं को अंग्रेजी शासन के प्रति विद्रोह करने के लिए तैयार करना शुरु किया। ऋषि दयानन्द के जीवन का बहुत बड़ा भाग राजस्थान के राजाओं को संगठित करने में बीता।

ऋषि दयानन्द ने अपने जीवन की गतिविधियों का उल्लेख करते हुए सिर्फ १८५६ तक

# चलचित्राणां गुणदोषाः

लेo श्री नृसिंहदेव शास्त्रि: व्याकरणसर्वदर्शनाचार्य:

**भो भारतीया युवतयो युवकाश्च चलचित्रेऽपव्ययं मा कुरुत ।। चलचित्रेषु गुणदोषान् उद्घाटयामि—**

पूर्वं तु चलचित्रनिर्मात्रे सहस्रकृत्वो साधुवादान् दद्मः । येन च महता समाहितेन चेतसा मूकीभूतानि चित्राणि चलनवादनात्मकानि कृतानि । स तु सर्वथैव सम्मानार्हः । तत्र चलचित्रविषये हिताहितचिन्तकाः सन्ति तेषां कृते फलप्रदत्तमपि भवति चलचित्रम् । किन्तु ये च सुकुमारमतयः सामान्याश्च जनास्तेषां कृते दोषदमेव न हि गुणदमिति चिन्त्यम् । ते तु यथा मृगास्तृषिता अपां धाराः पश्यन्ति यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते तद्वत् चलचित्रं पश्यन्ति । यथा शुक्तौ चाकचिक्यदोषात् रजतार्थी पुरुषः प्रवर्तते तथैव तेऽपि प्रवर्तन्ते । यथोत्तरकाले रजतार्थी शुक्तौ रजतलाभाभावान्निवर्तते तथैव मनोरञ्जनमन्तरा लाभराहित्यात्तेऽपि निवर्तन्ते । जनानां प्रवृत्तिः कारणत्रयेण जाजायते यथा—

इष्टसाधनत्वं कृतिसाध्यत्वं बलवदिष्टाननुबन्धित्वञ्च एष्वेकमपि न भवेत्तत्र प्रेक्षवान् पुरुषो न प्रवर्तते । यथा चन्द्रमण्डलानयने इष्टसाधनता हेतुर्वर्तते किन्तु कृतिसाध्यत्वहेतुर्नास्ति । जलादिताडने कृतिसाध्यता हेतुर्विद्यते परञ्च तत्र ताडने मनोरञ्जनमन्तरा फलाधिक्यं किमपि न इति दशायां कोऽपि विवेकी जनस्तत्र न प्रवर्तते । एवञ्च विषसम्पृक्तान्नभोजने कारणद्वयं प्रवर्तते परं—बलवदिष्टाननुबन्धित्वविकलतायां प्रेक्षावतां प्रवत्तिर्न दृश्यते । इत्थञ्च प्रकृतेऽपि मनोरञ्जनमात्रफलं वीक्ष्य भूयांसो जनास्तत्र चलचित्रदर्शने प्रवर्तन्ते । किन्तु पूर्वजै रागद्वेषादिवशान्नान्यथा वादिभिः शास्त्रकृद्भिर्निवृत्तिरेव प्रदर्शिता । यथा—लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र प्रेरणा । व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा । अर्थात् व्यवायो मैथुनं स्त्रीसंगः, आमिषं मांसः, मद्यम्—एषां सेवा जन्तोः प्राणिमात्रस्य नित्यारागतः प्राप्ताः, अतस्तत्र प्रेरणा विधिर्नास्ति, अतोऽत्र विषये नियम एव मन्तव्यः । ब्रह्मचारि, गृहि, वानप्रस्थ परिव्राजकानां मध्ये त्रयाणां तु सर्वथैव चलचित्रादिषु निषेधः केवलं गृहिणो गच्छेयुस्तत्र यतो हि—स्मरण कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं संकल्पोऽध्यवसायश्च क्रियानिवृत्तिरेव च । इत्यष्टप्रकाराणि मैथुनानि भवन्ति, एषु प्रायेण चलचित्रेषु सर्वाणि भवन्ति, इति मन्तव्यम् ।

जगतीतले सर्वाणि भूतानि वस्तूनि वा त्रिगुणात्मकानि सन्ति । तत्र च गुणदोषान् विविच्य निःश्रेयसाभ्युदयेच्छुभिः प्रेक्षावद्भिः प्रवर्तितव्यम् नेतरथा । यतो हि 'मन एव मनुष्याणां कारणं बन्धमोक्षयो' रिति रीत्या नीत्या च महर्षिपतञ्जलिपीयूषवचनं 'योगः चित्तवृत्तिनिरोध' इति स्वान्तीकृत्य चित्तवृत्तिः सर्वैरपि मानवैः सर्वथा सर्वदा स्वकल्याणेच्छुभिर्निरोधव्या । येनइहा मुत्र च लोकद्वये भद्रतामयो मार्गो भवेदिति । वस्तुतस्तु चलचित्रादिषूपभोगविषयेषु यदि वरिष्ठराजशासनं भवेत्तर्हि केऽपि नीचकर्मणि न प्रवर्तेरन् । सन्मार्गप्रवर्तकस्तासां प्रजानां राजैव जनकः केवलं पितरस्तु तासां जन्ममात्रकर्तारः । तथा प्रोक्तं कविशिरोमणिना श्री कालिदासेन—प्रजानां विनयाधानाद् रक्षणाद् भरणादपि, स पिता पितरस्तासां केवलं जन्महेतवः । इत्थं राजशासनं समाचरेत्तर्हि क्वापि जनसमाजे धृष्टता, बर्बरता-धूर्तता-

उच्छृङ्खलता च न प्रसरेदिति सदैव ध्येयमिदम्।

अत्रैव प्रपञ्चे भगवान् श्रीकृष्णोऽपि वर्णयाञ्चकार--

कामममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद् गृहीत्वा सद् ग्रहान् प्रवर्तन्तेऽशुचि व्रताः॥

इति भगवद् वचसाऽपि भोगविलासजनकचलचित्रेषु वैराग्यमापादनीयं भारतभाविभव्यजनैरिति। भारतेहि स्वल्पियांसो जनाः शिक्षिताः सन्ति तत्रापि च स्वल्पियस्तमा दीक्षितास्ते तु–गुणदोषान् वीक्ष्य तत्र चलचित्रेषु प्रवर्तन्ते--निवर्तन्ते च। अस्य चलचित्रस्यायमेव भूयान् प्रभावो वीक्ष्यते-भारते–यथा यत्र–तत्र राजमार्गेषु वीथ्यादिषु च धावन्तः प्रचलन्तश्चाबोधा बालका अश्लीलगीतिं चलचित्रश्रुतां सोत्साहं सहर्षञ्च गायन्ति। तच्छ्रुत्वा तेषां जननीजनकौ प्रसीदतः तेषां समुत्साहञ्च परिवर्ध्य तेषु दुश्चारित्र्यमेवापादयत इति महाकष्टम्। इदानीं तु कलियुगस्य स्तुतिपाठकस्य बृहस्पतिमतानुसारिणो नास्तिकशिरोमणेः चार्वाकस्य चेष्टितं प्रायेण सर्वप्राणिनोऽभिमन्यन्ते सेवन्तेऽनुभूय च मोदन्ते किं बहुनेति। तथा हि 'यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः। भस्मीभूतस्य देहस्य पुनरागमनं कुतः'। अर्थात् लोकगाथामनुरुन्धानाः, नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्तमानाश्च नक्तं दिवं चलचित्रादिकर्मसु परिभ्रमन्ति स्वास्थ्यञ्च न लभन्ते। भारतीय संस्कृतिः शिक्षा दीक्षा च चार्वाककल्पपाश्चात्यसंस्कृतिशिक्षादीक्षातः सर्वथा भिन्नैव मन्तव्या। परञ्च स्वतन्त्रराष्ट्रे सति चलचित्रद्वारा रेडयाद्युपायेन च सर्वाऽपि स्वतन्त्रभारतेऽविरलगत्या स्वच्छन्दभावेन च नैजं साम्राज्यं स्थापितवती। भारतीयवेशभूषासु भोजनादिषु सामान्यकर्मसु च सर्वत्रैव विंशतिवर्षतः परिवर्तनं समागतम्–यद्येवमेव कार्यप्रवाहो भविष्यति तर्हि बहुकालतः स्थिरीभूता अपि भारतीयसंस्कारा झटिति जलबुद्बुदावत्–लयं यास्यन्ति। यथा अक्षराणां परिवर्तनेन साक्षरा अपि राक्षसा भविष्यन्ति किमधिकेन। कालक्रमेण पुरातनतमां भारतीयसंस्कृतिमपि भारतीया विस्मरिष्यन्ति यदि चलचित्रादिषु तथ्यातथ्यविमर्शो न भवेत्–अतो हेतोः प्रातस्मरणीयस्य भगवतो मनोर्महावाक्यं विचिन्त्याग्रे पादसञ्चारो विधातव्यः। मनोर्महावाक्यञ्चेत्थम् 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥' अर्थाद् इन्द्रियग्रामनिरोधमन्तरा समुपभोग्येन कामानां कामशान्तिर्जन्मशतेनापि न भवितुमर्हति।

यथा घृताहुत्याऽग्निः प्रज्वलितो भवति न तु शान्तमेति। अस्माकं राष्ट्रसंचालका वरिष्ठाधिकारिणो यत्र तत्र राष्ट्रे राजमार्ग, सेतुबन्धादिस्थूलकार्याणि सम्पादयन्ति किन्तु जनचरित्र–निर्माणविषये लेशमात्रमपि कार्यं न विदधति। अधुनातने तु कूपे भंगविनिपातो जात इति कृत्वा तज्जलं पीत्वा मदान्वितीभूय च कामक्रोधपरायणा दैवीं सम्पदं परित्यज्य निबन्धायाऽऽसुरीं सम्पदं सेवन्ते सर्वेऽप्युच्चावचाः किमधिकेनेति।

चलचित्र दर्शनेनैव–एवं गतिका जनाः संजाता अत एव अन्वयव्यतिरेकाभ्यां चलचित्रस्यैव तत्र परिवर्तने प्रधानकारणत्वमवसेयम् यतो हि कर्णच्छेदकेन सुवर्णेन किं फलम्–अर्थात् सर्वथा हेयतैव तत्र श्रेयसीति मन्तव्यं सांसारिककुटुम्बभरण–क्रयविक्रयादिव्यवहारचतुरैरिति।

त्रिकालकल्याणेच्छवः पश्यन्तोऽपि चलचित्र–नग्नताण्डवं कण्ठप्राणगता अपि भवन्तः स्वदेशोत्पन्न वेशभूषादिकं स्वसंस्कृतिञ्च कदापि न मुञ्चेयुः।

# श्रीमतामुपकुलपतिमहोदयानां तन्त्र-सम्मेलन-सम्बन्धि वक्तव्यम्

**वक्ता—श्रीसुरतिनारायणमणित्रिपाठी, उपकुलपतिः वाराणसेयसंस्कृतविश्वविद्यालयः**

एकस्याः सुविस्तृतायाः सांस्कृतिकपरम्परायाः उत्तराधिकारो भारतीयैः प्राप्तो विद्यते । अतो देशस्य जागरणसमकालमेव साम्प्रतिक-सांस्कृतिक-स्थितेः परीक्षणसंशोधनपरिष्कारादिषु सावहितमनुध्यानं स्वाभाविकम् । अस्मिन् प्रसंगे वैदिकपौराणिक-बौद्धादिसाहित्यसंरक्षणेन सह बह्वीनामन्यासामपि संस्कृतीनां परिशीलनस्य प्रशस्तः प्रयत्नो विधीयते । आगमसंस्कृतिरपि भारतस्य बहुमूल्यो निधिः । भारतस्य बाह्याभ्यन्तरजीवनं चिरात् तन्त्रसंस्कृति-प्रभावेणाप्लावितमासीत् । वैदिकतान्त्रिकभेदेन श्रुतिद्वैविध्यं सर्वसम्मतम् । तन्त्रचेतनया न केवलं साधनभूमिरेव प्रभाविता, अपितु एकं गभीरं दर्शनमपि प्रस्तुतम् । किं बहुना, कलाविज्ञानादिव्यावहारिकक्षेत्रस्यापि तन्त्रोपकृतत्वं सर्वविदितम् । तन्त्रेषु योगज्ञानयोर्गभीरं रहस्यं निहितम् । अस्य महतो देशस्य भाविनीमभ्युन्नतिमभिलक्ष्य आगमानामपि समुद्धारः कस्मैचिन्महते कल्याणायैव कल्पेत ।

एतान् मूर्तिमतः शुभसंकल्पानास्थायैव वाराणसेयसंस्कृतविश्वविद्यालये देशस्य प्रकाण्डविदुषां महामहोपाध्यानां श्रीमतां पण्डितश्रीगोपीनाथ-कविराजमहोदयानामाध्यक्ष्ये योगतन्त्राख्यस्यैकस्य स्वतन्त्रस्य विभागस्य स्थापना संजाता ।

समस्ते देशे तन्त्राणामागमानां च शतसहस्रं ग्रन्थाः परम्पराश्च स्वीयसंकुचितसीमाभिराबद्धाः विकीर्णा उपेक्षिताश्च सीदन्ति । परम्पराणां विच्छिन्नतया प्रचारालपत्वेन च तन्त्राणां विभिन्नाः शाखा अद्यत्वे परिचिता अज्ञाताश्च संजाताः । एषां समुन्नयनायेदमावश्यकं यद् विभिन्नेषु प्रदेशेषु निवासिनां तन्त्रशास्त्रविदुषां प्रयोगज्ञानवतां च विपश्चितामेकं सम्मेलनमायोज्येत, ज्ञानकेन्द्रभूतायाः काश्या ऋतेऽन्यत्र एतादृशस्य विद्वत्सम्मेलनस्य नोपयुक्तं स्थानमिति निश्चप्रचम् । काश्यामपि महत्वपूर्णस्यास्य आयोजनस्य कृते संस्कृतविश्वविद्यालय एव उत्तमं स्थानं यत्र सर्वाङ्गशालिनी भारतीयसंस्कृतिरनुक्षणं पूजिता बहुभिः प्रकारैः सम्मानिता च समुल्लसति इमाः सत्प्रेरणास्तन्त्र-सम्मेलनस्य बीजम् ।

अधिवेशने समामन्त्रितैर्विद्वद्भिर्लुप्तप्रायाणां तन्त्रविज्ञानशाखा-प्रशाखाणां प्रामाणिकी सूचना प्राप्ता स्यात्, एषां विदुषां शास्त्रीय-विचार-विनिमयेन परस्परं चर्चितसाधकबाधकयुक्त्यादिभिश्च उत्तरकालेऽस्य प्रत्यक्षविज्ञानस्य परिशीलनदिङ्-निर्धारयितुं शक्येत्, संरक्षणसंवर्धनप्रचारोपायाश्च स्थिरीकर्तुं शक्येरन् । तन्त्रसाहित्यं सुविस्तृतम् । दर्शनसाधनयोः प्रत्येकं क्षेत्रयोर्विपुलो ग्रन्थराशिः सर्वत्र देशे विकीर्णः । यथा बाह्याभ्यन्तरभेदेन साधनाया विभिन्ना भागाः, तथैव द्वैत-द्वैताद्वैत-अद्वैत-परमाद्वैतादिभेदेन दर्शनस्यापि बहवो विभागास्तन्त्रेषु विलसन्ति । अस्य बृहतो वाङ्मयस्य सम्यग् अनुसन्धानाय समुन्नयनाय च सुमहान् समारम्भोऽपेक्षितः । अतः प्रथमेऽस्मिन् प्रसंगे मा भूदन्यत् किंचित् किन्तु सामान्यतया किमप्येतादृशं लक्ष्यं तु निर्धारणीयमेव येन लुप्ततां लुप्तप्रायाणां च ग्रन्थानां ग्रन्थांशानां वा समुद्धारो दर्शनसाधनयोर्विभिन्नचिन्तनस्रोतसां समुद्भावनं च स्यादिति । एतादृशोऽपि प्रयत्न आयती-कार्यो येन कलासु विद्यासु च अभिनवा ज्ञानधारा आविर्भवेयुः । गवेषणायाश्चाविच्छिन्नप्रयासेन ज्ञानक्षेत्रमुत्तरोत्तरं प्रसरेत् । संकलपजातस्यास्य साफल्यं विद्वदायत्ताम् ।

तन्त्रविदुषामिदं सम्मेलनं संकेतितदिशि एको लघुः, किन्तु अपेक्षितः प्रयासः। परम्परागतानां विद्याव्रतसम्पन्नानां विदुषां परस्परं सहयोगेन, ज्ञानवृद्धतन्त्रविदामाचार्याणां परिचयसम्पर्कादिभीरुचिसम्पन्नेषु नूतनेषु तन्त्रजिज्ञासुष्वभिनवोत्साहसंचारणेन, अपूर्वं किमपि जिज्ञासातृप्तिकरं फलं भविष्यति। एतावदेवात्रेदानीं फलतया परिकल्पनीयम्।

इत्थमेतादृशैरायोजनैर्वयं स्वोद्देश्यसिद्धौ अग्रेऽधिकं शुभोदकमधिगच्छेमेति ध्रुवमाशास्यते।



# अनन्तता में मृत्यु

**स ( प्रजापतिः ) कामो भूत्वानन्तोऽभवत्।**
**अनन्तो भूत्वा मृत्युरभवत्। जै. ब्रा. १।३१४**

प्रजापति काम का रूप धारण कर अनन्त रूपों वाला होगया। क्योंकि काम का कहीं अन्त नहीं है। जब वह अनन्त रूपों वाला होगया तो फिर मृत्यु रूप बना। अनन्त रूपों में बहुरूपी बनने में मृत्यु है। अतः अमरता प्राप्त करने के लिये अनन्ता व बहुत्व का परित्याग करना चाहिये।

# दो धुराएं

अथो द्व एव धुरौ मनश्चैव वाक् च। मनसो हि वाक् प्रजायते। सा मनोनेत्रा वाक् भवति। तन्मनो वाचमभिप्रवहति। वागु पुनर्मन एवाभिप्रवहति स यो मनसश्च वाचश्च स्वरो जायते स इन्द्रः। इन्द्रः सर्वे देवाः। स हैव देवलोकं गमयति य एवं विद्वान् उद्गायति। जै. ब्रा १।३२०, ३२१

मन और वाक् ये दो धुराएं हैं। मन से ही वाक् की उत्पत्ति होती है। मन से उत्पन्न यह वाक् 'मनोनेत्रा' मन की ओर ले जाने वाली अथवा मन जिसका नेता है। यह मन वाक् की ओर प्रवाहित होता है और फिर वाक् मन की ओर प्रवाहित होती है। यह मन और वाक् की आन्तरिक गति है। इस गति के आश्रय से जो स्वर उत्पन्न होता है वह इन्द्र है। इन्द्र में सब देवता आश्रित हैं इस तत्व को जानकर जो उद्गान करता है वह देवलोक को प्राप्त करता है। परन्तु शर्त यह है कि मन और वाक् इन दो धुराओं के मध्य में ही स्थित रहे बाहिर न जावे।



# तत्त्वमसि

विद्यार्थी श्री खोमराजशर्मा नेपालः

एवं किलानुश्रूयते यदारुणस्य सूनोरारुणेरुद्दालकस्य श्वेतकेतुनामैकः पुत्र आसीत् । तस्य द्वादशपर्यन्तं यावदायुः क्रीडनादिव्यापारसक्तमेव व्यतीतम्। पिता स्वस्य मनसि चिन्तयन्नेवमासीत्--यदयं स्वयमेव विद्याधिगमं समीहमानस्तत्र प्रवर्तेत चेत्तदुत्तमम्' । परन्तु श्वेतकेतुस्तथा नाकरोत् क्रीडनव्यापारमन्तरा । तदा तदीयः पिता नाशकत् तदीयं तथाविधव्यापारं पश्यन् स्थातुम् । स एकदा पुत्रं स्वसमीपमाहूय प्रावोचत्--'हे वत्स श्वेतकेतो ! गच्छ त्वं सुयोग्यं ब्रह्मविदं गुरुमुपगम्य ब्रह्मचर्यं पालयन्नुपवस । हे सौम्य ! मम वंशे कोऽपि नैतादृशः समुदपद्यत यो हि परित्यक्तवेदार्थानुसन्धानो ब्राह्मणोचित-गुणाचाररहितः केवलेन नाम्ना ब्राह्मणः स्यात् । अतोऽयं तव व्यापारो न समीचीनः वेदमधीत्य ब्रह्मभावस्त्वया प्राप्तव्य एवेति ।'

तथाविधं पितुः कटुसत्यं सदुदर्कमुपालम्भमुपलभ्य श्वेतकेतुः द्वादशवर्षमिते वयसि गुरुगृहमुपगम्य तत्र चतुर्विंशतिवर्षपर्यन्तं यावत् अधितिष्ठन् व्याकरणादिषडङ्गसहितान् चतुरो वेदानधिजगे साङ्गोपाङ्गम् । तदनन्तरं गुरुपादाज्ञापितो गृहं प्रत्याजगाम। तदा स मनस्येवं व्यचिन्तयत् व्यावाहार्षीच्च तथा—'यदहं पूर्णतया वेदस्य ज्ञाताऽस्मि । मया समः कोऽपि नान्योऽस्ति पण्डितः । अहं सर्वोपरिविद्वान् बुद्धिमांश्चास्मीति ।' तथाविधविचारैरङ्कुरितमनोऽभिमानो विनयविहीनो न प्रणमन् पितरं निकषा समागम्योपविवेश । महर्षिरारुणिः तस्य विनयरहितमौद्धत्यपूर्णमाचरणं पश्यन् अवेदीदिदम्—यदयं वेदाध्ययनेनाहम्मन्यतयाऽभिभूतोऽस्ति । तथापि ऋषिस्तस्योपरि नाकुप्यत् अवदच्च तम् ''श्वेतकेतो ? किमेतादृशमधीत्यागतोऽसि येन त्वमात्मानं महान्तं पण्डितं मन्यसे? महाभिमानसमुद्रे च निमग्नोऽसि? विद्यास्वरूपं तु खलु विनयेन राजते । अभिमानिनः पुरुषस्य हृदयात् सर्वे गुणाः दूरमपयान्ति तथा समस्ता दोषाश्च तं स्वयमावृण्वन्ति । गुरोः सकाशादवगतं चेत्त्वया विज्ञापनीयं तत् मां प्रति यत्– किं तद्वस्तु विद्यते जगति यस्मिन् एकस्मिन्नेव श्रुते मते ज्ञाते सति अन्यत् सर्वं अश्रुतं श्रुतं भवति अमतं मतं अज्ञातं च ज्ञातं ज्ञायते ? इति ।''

तदा पितुरारुणेस्तथाविधं वचनं श्रुतवान् श्वेतकेतुः गलितगर्वोऽजायत,अचिन्तयच्च-यत्—''अहं तु किमप्येतादृशं वस्तु न जानामि, मिथ्या खलु ममाभिमानम्'' ततः स सविनयं पितृचरणयोः पतितः बद्धकरसम्पुटः प्रार्थयामास--'भगवन्! यस्य एकस्य वस्तुनः श्रवणेन मननेन ज्ञानेन च अन्येषां समस्तवस्तूनां श्रवणं मननं ज्ञानं च भवति तत्किल वस्तु नाहं जानामि । प्रभो ! मां तद् वस्तूपदिश्य अनुगृहाणेति ।''

तदा आरुणिरवोचत्—''सौम्य! यथा मृत्पिण्डे घटशरावादिरूपस्य कारणे ज्ञाते मृण्मयं घटशरावादिकं समस्तं वस्तु ज्ञातं भवति तथा इदमपि निश्चितं भवति–यत् घटादिकार्यभूतं वस्तु असत्यं केवलं वाचो विकारमात्रं सत्यं तु वस्तुतः मृत्तिकैव । सौम्य ! यथा वा कारणतयाऽवस्थिते सुवर्णरूपे ज्ञाते तन्मयं कटककुण्डलादिकं कार्यं सर्वं विदितं भवति तथा इदमपि निश्चितं भवति यत्–सुवर्णमेवात्र सत्यं तत्कार्यभूतं कटककुण्डलादिकं तु मिथ्या वाचोविकारमात्रमिति, तथैव तज्ज्ञानमपि यस्मिन् एकस्मिन् अन्यत्सर्वं ज्ञानं परिसमाप्यते अश्रुतं श्रुतं अमतं मतं अविदितं च विदितं भवतीत्यर्थः ।''

ततः परं पितृवचनमिदमाकर्ण्य श्वेतकेतुरवादीत्--''पितः ? निश्चप्रचं मे गुरुस्तद् वस्तु नाधिगच्छति, अज्ञास्यच्चेत् मामवश्यमज्ञापयिष्यत् । अतो भवानेव मां तद्वस्तूपदेशेन अनुगृह्णातु, यस्मिन्

एकस्मिन् ज्ञाते अन्यदज्ञातं भवति ज्ञातमेव । ततः आरुणिरभ्यधात्--"ओम् शृणु समाहितमना इति ।

स उपदिदेश इत्थम्--"प्रियदर्शन! नामरूपात्मकमिदं जगत् प्राक्सृष्टेः सदेकमेव आसीत् । तद्ब्रह्म ऐक्षत—"एकोऽहं बहु स्यां प्रजायेय" इति । ईक्षणानन्तरं तत् तेजोऽसृजत, पुनस्तस्मात् जलमसृज्यत तदनन्तरं च अन्नमसृजत् । अस्मादेव तत्त्वत्रयात् सर्वे पदार्थाः उदपद्यन्त । जगति यावन्ति वस्तूनि सन्ति तेषां सर्वेषामपि मूलं तदिदं तत्त्वत्रयमेव । यत्र प्रकाशः, उष्णता वा विद्यते तत्र तेजस्तत्त्वस्य प्राधान्यम् । यत्र द्रवत्वमस्ति, तत्र जलस्य एवं यत्र काठिन्यं तत्र अन्नस्य यद्वा पृथिव्याः प्रधानता । अग्नौ ये श्वेतत्वकृष्णत्वरक्तत्ववर्णाः सन्ति तेषां श्वेतत्वं जलस्य, रक्तत्वं तेजसः, कृष्णत्वं च पृथिव्याः । तथा सूर्यचन्द्रविद्युत्स्वपि वेदितव्यम् । यदि वह्नि-सूर्य-विद्युद्भ्यः तेजो जलपार्थिवांशाः पृथक् क्रियन्ते तदा अग्नौ अग्नित्वं, सूर्ये सूर्यत्वं, चन्द्रे चन्द्रत्वं, विद्युति विद्युद्भावश्च न विद्यते । तथा अन्यत्रापि अनुसन्धेयम् । भुक्तस्य अन्नस्यापि त्रिधा रूपाणि जायन्ते--स्थूलभागो मलं, मध्यमभागो मांसं, सूक्ष्मभागश्च मनोरूपमिति, एवं जलस्यापि स्थूलभागात् मूत्रं, मध्यमभागात् रक्तं, सूक्ष्मभागाच्च प्राणो जायते । एवं तैलघृतादितैजसपदार्थानां स्थूलभागात् अस्थि, मध्यमभागात् मज्जा, सूक्ष्मांशाच्च वाणी उत्पद्यते । अत एव मनोऽन्नमयं, प्राणो जलमयः, वाक् च तेजोमयी अस्ति इति व्यवह्रियते ।

तदनन्तरं श्वेतकेतुः पुनर्न्यवेदयत्--"पितः विषयमिमं भूयोऽपि मां स्पष्टतयाऽवबोधयेति । आरुणिरुद्दालको जगाद-- "सौम्य ? यथाहि दधिमथनात् तस्य सूक्ष्मं सारतत्त्वमुपरि आयाति तथैव यदन्नमद्यते तस्य सूक्ष्मसारांशो मनोरूपं भवति । जलस्य सूक्ष्मांशः प्राणः तेजसश्च वाक् । वस्तुतस्तु इमानि मनः प्राणवाणीरूपाणि तत्त्वानि तथा तेषां कारणानि अन्नादीनि च कार्यकारणभावपरम्परया मूलात् एकस्माद् सद्वस्तुनोऽभिन्नानि अर्थात् सर्वेषां मूलं कारणं सद्वस्तु तदेव परमाश्रयः अधिष्ठानञ्चास्ति । सतस्तस्य कार्यभूता नानाविधा आकृतयो वाचोविकारमात्राणि नाममात्राणि च सन्ति । सदिदं अणुवत् सूक्ष्मं समस्तजगत आत्मभूतमधिष्ठानं चास्ति । श्वेतकेतो! तत्सत् त्वमेवासि । 'तत्त्वमसि' ।

अपि च सौम्य ! यथा मधुमक्षिकाः वृक्षेभ्योऽनेकप्रकारान् रसान् सञ्चित्य तान् मधुरूपे परिणमयन्ति, किन्तु मधुरूपं प्राप्तो रसो नैतज्जानाति यदहं अमुकवृक्षस्य रसोऽस्मीति, तथैव सुषुप्तौ जीवः सता एकीभावमापन्नोऽपि नैतज्जानाति यदहं सदस्मीति । सुप्तोत्थितः पुनः स स्वकीयानि पूर्वाणि व्याघ्रसिंहादिशरीराणि प्राप्नोति । तदिदं यत्सूक्ष्मं तत्त्वमस्ति तदेवात्मा तदेव सत्, श्वेतकेतो तदेव त्वमसि । 'तत्त्वमसि' ।

श्वेतकेतुर्न्यवेदयत्-- "भगवन् पुनर्मामवबोधय ।" आरुणिरवोचत् सौम्य ! यथा समुद्रजलेभ्यो मेघैः परिपुष्टा गङ्गाप्रभृतयो नद्यः अन्ते समुद्रमासाद्य स्वकीयं नामरूपं च परित्यज्य समुद्ररूपा एव भवन्ति नैतच्च जानन्ति यत् अहं गङ्गास्मि, अहं यमुनास्मीति । किन्तु सर्वथा समुद्ररूपमापद्यन्ते, पुनर्मेघैर्वृष्टिरूपेण समुद्रात् निःसृता नैतत्स्मरन्ति वयं समुद्रात् निःसृता इति तथैव इमे जीवा अपि सतो निःसृताः अन्ते च सत्येव लीयन्ते पुनस्तस्मात् निर्गच्छन्ति किन्तु सतो निःसृता सत्स्वरूपा वयमिति न जानन्ति ते संसारे च व्याघ्रसिंहादिरूपा एव भवन्ति । इदं तत् सूक्ष्मं तत्त्वं सर्वेषामात्मा तदेव सत् तदेव आत्मा । श्वेतकेतो ! तदेव त्वमसि । 'तत्त्वमसि' ।

श्वेतकेतुः पुनः प्रार्थयामास--'पुनर्मामवबोधयेति ।' मुनिरारुणि 'तथास्तु' इत्यभिधायः प्रारभत बोधयितुम्--

"सौम्य ! यथा कस्यापि महतो वृक्षस्य मूल-माहन्यात् यदि कश्चित् तदा स वृक्ष एकेन प्रहारेण न शुष्यति जीवति, किन्तु छिद्रात् रसः केवलश्च्यवति । तथा अग्रभागे प्रहारेऽपि न शुष्यति जीवति छिद्राच्च रसः च्यवति, मध्यभागे प्रहारेऽपि न शुष्यति जीवति रसश्च च्यवति । यावद्धि तत्र जीवात्मा व्याप्नोति तावत् स शतशः प्रहारेऽपि मूलेन जलं गृह्णन् सानन्दं जीवति यदा तस्य वृक्षस्य शाखासु कुतश्चित् शाखातो जीवो निःसरति तदा सा शुष्यति । अन्यतोऽपि जीवनिःसरणे अन्या अपि शाखा शुष्यति, एवं यदा सम्पूर्णवृक्षमेव आत्मा परित्यजति, तदा तस्य सर्वावयवः शुष्यति । तथैव भौतिकमिदं शरीरमपि यदा जीवरहितं भवति, तदा मृत्युं प्राप्तमिति व्यपदिश्यते । जीवस्तु न कदापि म्रियते जायते वा इदं जीवरूपं सूक्ष्मतत्त्वमेवात्मा । तत्सत् तदेव आत्मा । तथा श्वेतकेतो तत्सत् त्वमेवसि । "तत्त्वमसि" ।

श्वेतकेतुरुवाच—'भगवन् ! पुनः बोधय माम ।" पित्रारुणिनाऽभिहितम्—तर्हि एकं महत्फलमत्रानय । ततस्त्वां बोधयिष्यामि ।" श्वेतकेतुः फलमानयामास । पिताऽवादीत्—"खण्डयित्वा पश्येदं किमस्त्यत्र" । फलं सशकलं विधाय श्वेतकेतुः विज्ञापयामास—"भगवन् अत्र सूक्ष्माणि बीजानि सन्ति । तदनन्तरं ऋषिर्जगाद—एकं बीजं पुनश्छित्वा पश्य किमस्ति तत्र । श्वेतकेतुः पुनः एकं बीजं खण्डयित्वाऽभिदधे—अत्र तु किमपि न दृश्यते ।" तदनन्तरं मुनिः समुदीरयामास—'सौम्य ! त्वमस्य बीजस्य सूक्ष्मभागं न पश्यति, यस्मात् हि नितान्तसूक्ष्मतत्त्वात् स महान् वटवृक्षो निष्पद्यते । यथा हि इदमत्यन्त-सूक्ष्मं वटबीजं महतो वटवृक्षस्य आधारोऽस्ति तथैव सूक्ष्मसदात्मा अस्य समस्तस्य स्थूलजगत आधारोऽस्ति । सौम्य ! सत्यमहं कथयामि श्रद्धेहि मद्वचनम् । यदिदं सूक्ष्मं तत्त्वमात्मा तत्सदस्ति तदेव च आत्मा श्वेतकेतो तदेव त्वमसि । "तत्त्वमसि" ।

श्वेतकेतुरुदीरयामास—'भगवन् निदर्शनान्तरेण पुनर्मामुपदिशेति ।" ततः एकं लवणलवं तस्य हस्ते निधाय उद्दालको व्याजहार—"वत्स ! इदं लवणशकलं जलपूर्णपात्रे निधेहि, श्वः प्रातः तत्पात्रमादाय मत्समक्षमागन्तव्यमिति ।" श्वेतकेतुस्तथैवाकरोत् । अन्यस्मिन् दिवसे प्रातः जलपात्रमादाय पितरमुपागच्छत् । तदा स मुनिरब्रवीत्—"सौम्य ! रात्रौ यल्लवणशकलं जलपात्रे त्वया निहितं तदन्विष्य जलात् पृथक् कुरु, येन तदहं पश्येयम् ।" श्वेतकेतुः तथा कर्तुं प्रायतत परं स तच्छकलं नालभत, यतो हि तत् जले गलितं जलरूप एव परिणतमासीत् । तत आरुणिः प्रोवाच—"तज्जलं किञ्चित्पीत्वा विज्ञापय मां तत्कीदृशमस्ति" तदाचम्य तेनाभिहितम्—"पितः ! जलं क्षारमस्ति ।" आरुणिरवोचत्—"इदानीं मध्यात् तदाचम्य कथय ।" पीत्वा श्वेतकेतुना विज्ञापितं—पितः इदमपि क्षारमस्ति ।" अन्यतोऽपि किञ्चित्पीत्वा कथय कीदृशः स्वादोऽस्ति इत्यादिष्टः श्वेतकेतुस्तथा कृत्वा निवेदयामास—"भगवन् इतोऽपि रसः क्षार एवास्ति ।" अन्ततश्च मुनिः पुनरादिदेश—"साम्प्रतं सर्वतः पीत्वा जलं प्रक्षिप्य भूमौ मामुपगच्छेति ।" श्वेतकेतुः तथा विधाय उपागम्य पितरमुवाच—"प्रभो ! यल्लवणशकलं मया जले निहितं यद्यपि तदहं चक्षुषा न पश्यामि तथापि रसनया अनुभवामि—यत् जलेऽस्मिन् सर्वत्र सर्वदा तदस्तीति ।" ततः पितोवाच—'सौम्य ! यथा त्वया तत्प्रसिद्धं लवणशकलं चक्षुषा द्रष्टुमशक्यमपि तदस्तित्वमनुभूयते तथैव इदं सूक्ष्मं तत्त्वमात्माऽप्यस्ति । तदस्ति सत्, तदेवात्मा । तथा सौम्य !

स आत्मा त्वमेवासि । "तत्त्वमसि" ।

श्वेतकेतुः भूयोऽपि प्रोवाच—"गुरो ! पुनरुपदिश मामिति ।" ततो मुनिरुद्दालकः कथयामास—"श्रृणु, यथा किल कश्चित् पुरुषो गान्धारदेशवर्ती वस्त्रावृतनयनः स्तेनैः अपहृतः कुत्रचित् निर्जनेऽरण्यप्रदेशे परित्यक्तः स च चतस्रः दिशः पश्यन् सहायतार्थं विलपेत् यत्—अहं वसनावृतलोचनोऽत्रानीय परित्यक्तोऽस्मीति । तत् तदानीं श्रुत्वा तदीयं करुणक्रन्दनं कश्चिद् दयालुः पुरुषः तस्य नयनावरणं अनावृत्य कथयेत् तं प्रति यत्—"गान्धारदेशोऽस्यां दिशि वर्तते, अनेन पथा गच्छ तत्र प्राप्स्यसि" इति । तदा स बुद्धिमान् अधिकारी पुरुषः दयावतस्तस्य वचनं श्रद्दधानः तद्दर्शितपथा चलन् ग्रामाद् ग्रामान्तरं च पन्थानं पृच्छन् अन्ततः स्वकीयं गान्धारदेशं प्राप्नोति तथैव भो सौम्य ! अविद्यावृतज्ञानचक्षुः कामक्रोधादिभिः चौरैः संसाररूपभयानकमरण्यमापादितो जीवः ब्रह्मनिष्ठेन करुणावता सद्गुरुणा निर्दिष्टेन पथा गच्छन् अविद्यापाशात् मुक्तः स्वकीयं वास्तविकं सत्स्वरूपं प्राप्नोति । यदिदं सूक्ष्मं तत्त्वं तदात्मा । तत् सत् । श्वेतकेतो ! तदेव सदात्मा त्वमसि । "तत्त्वमसि" ।

श्वेतकेतुरवदत्—"भगवन् कृपया पुनर्मामुपदिशेति ।" ततः मुनिरब्रवीत्—"श्रृणु यदा कस्मिंश्चित् पुरुषे रुग्णे मरणासन्ने जायमाने तस्य संबन्धिनः अपरे—परितः तं समावृत्य पृच्छन्ति—"भोः ! त्वमस्मान् परिचिनोषि न वा ? के स्मो वयमिति ।" यावन्तं कालं तस्य रोगिणः पुरुषस्य—वाचो मनसि मनसः प्राणे प्राणस्य तेजसि तेजसश्च ब्रह्मणि लयो न भवति तावन्तं कालं स सर्वान् परिचिनोति, परं यदा तस्य वाक् मनसि मनः प्राणे प्राणस्तेजसि तेजश्च ब्रह्मणि विलीयते तदा स कमपि परिचेतुं न शक्नोति । यदिदं सूक्ष्मं तत्त्वं स आत्मा तत्सत् । श्वेतकेतो ! तदेव त्वमसि । "तत्त्वमसि" ।

श्वेतकेतुना पुनरप्युपदेशाय निवेदितो मुनिः एवमुवाच—"श्रृणु यथा कश्चित् पुरुषः स्तेयाभियोगेऽभिगृह्यते, पृच्छ्यते च त्वया चौर्यं कृतं नवा ? इति । यदि स न स्वीकरोति—तर्हि राज्याधिकारिणः प्रज्वलितपरशुमादाय तस्य हस्ते निधापयितुमादिशन्ति । ततः प्रज्वलितः परशुः आनीयते तस्य हस्ते च निधीयते । यदि स वस्तुतश्चौरोऽपि मिथ्याभाषणेन आत्मानं मोचयितुं समीहते तदा तस्यात्मनोऽसत्यसम्पर्कात् परशुना स्पर्शमात्रे जायमाने तस्य हस्तं ज्वलति ततः स तदपराधस्य कृते दण्डभाग् भवति, किन्तु यदि सः अचौरः सत्यमेव भाषते तदा आत्मनः सत्यसंबन्धात् तस्य हस्तं दीप्तपरशुना ईषदपि न ज्वलति, दण्डनाच्च स मुच्यते ।

तदित्थं सत्यप्रभावात् प्रदीप्तपरशुनाऽपि सत्यवक्ता मुच्यते । तदनेन इदं सिद्धं भवति—यत् जीवः सत्स्वरूपः । स एवात्मा । श्वेतकेतो तदात्मा त्वमेवासि । "तत्त्वमसि" ।

तदमुना प्रकारेण पितुः सकाशात् आत्मतत्त्वोपदेशलाभेन श्वेतकेतुः लब्धात्मसाक्षादपरोक्षबोधः कृतकृत्यतामगमत् ।

( छान्दोग्योपनिषदः आधारेण ) इति शिवम् ।

———

# रूसीय कवितायाः विहगावलोकनम्

श्री डॉ० हरिदत्त पालीवालः 'निर्भयः'

कस्यापि देशस्य जातेर्वा काव्यसाहित्यस्य स्वरूपं तस्य भूगोले, इतिहासे, संघर्षे, जीवनपद्धतौ, राजनीतौ, राष्ट्रीये आदर्शे, राष्ट्रधर्मे, दर्शने, संस्कृतौ च निर्भरं भवति। रूसोपि अपवादो नास्ति ।

भूमिविस्तारदृष्टया रूसः संसारस्य महत्तमो देशः । पृथिव्यामुपलब्धस्य स्थलभागस्य प्रायः षष्ठांशः केवलं रूसस्यान्तर्गतः अस्ति । नारवेदेशं स्वीडनदेशञ्च विहाय यूरेशिया महाद्वीपस्य सम्पूर्णे उत्तरीये भागे रूसस्य प्रसारोऽस्ति । दक्षिणीये भागेऽपि मध्यैशियायाः शृङ्गमेखलावधि विस्तृतोस्ति । रूसे एकः प्रवादः प्रचलितोस्ति यत् रूसो नास्ते एकः देशः प्रत्युत सः एकः संसारोस्ति ।

यदा उत्तरीयध्रुवतः हैमनाः पवनाः संचरन्ति, तदा सर्वं देशं शीतलीकृत्य तत्रैवावरोधं लभन्ते यत्र मध्यैशियायाः पर्वतश्रेणीषु अवरुध्यन्ते । रूसः शीतलो देशः । सः हिमाच्छादितविस्तृतभूभागानां, हरितशाद्वलसम्पन्नगोचराणाम्, सघनवनानाम्, अत्यायतमरुस्थलानाम्, अनुर्वरोषराणाम्, तथा सर्वशस्याढ्यकृषि कर्मसंपन्नविस्तृतक्षेत्राणाञ्च भूमिरस्ति ।

यस्मिन् च प्रदेशे रूसस्य विशिष्टसंस्कृतेः विकासोऽभूत् स प्रदेशस्तु विस्तारापेक्षया लघीयानेवास्ते । तस्य पूर्वदिशि यूरालनामकः गिरिवरः दक्षिणस्यां दिशि कारपेशियन, काकेशस गिरिमालाः सन्ति तथा कैस्पियन-कृष्णसागरौ स्तः । मध्यमार्गेण योरोपस्य महत्तमा बोल्गा नदी मन्दं स्वच्छन्दञ्च प्रवहति । यस्याः सांस्कृतिकः सम्बन्धः महात्मना राहुलसांकृत्यायनेन गङ्गया सह कारितः ।

ईशवीयाब्दस्य शतसः वर्षाणां पूर्वं बृहत्तरस्य अस्य भूभागस्य दक्षिणप्रान्तेषु साथियायिनां, समरेशियायिनां, गाथहूणादीनां युद्धप्रियाः बर्बराः यायावराः जातयः स्वं स्वं प्रभुत्वं स्थापयितुं परस्परं संघर्षं कुर्वते स्म ।

ईसवीय वत्सरस्य प्रथमे द्वितीये च शतके अस्मिन् रंगमञ्चे पश्चिमतः दक्षिणतश्च तस्याः साहसपूर्णायाः स्लावजातेः प्रवेशः प्रारब्धः, यां जातिमाश्रित्य आधुनिकानां रूसवासिनां प्रतिशतं पञ्चसप्तति पुरुषाः आत्मनः पूर्वजां कथयितुं शक्नुवन्ति । इमे वीरा प्रथमतः उपर्युक्तानाम्, अर्धसभ्यानाम्, भ्रमणशीलानां जातीनां पराभवं कृतवन्तः । अनन्तरं पूर्वीयतुर्कस्थ तातारैः सह योद्धुं संघटितवन्तः । ताताराणां पराभवाय स्कैण्डेनेवियास्थितरूसनामकजातेः सहायतां लेभिरे । संभवतः तानेवाश्रित्य अस्य देशस्य रूस इति नाम प्रसिद्धम् । महाकवेः पूश्किन महोदयस्य मनसि संभवतः एषामेव संघर्षाणां स्मृतयः जागरूका अभवन् अतएव तेन लिखितम्——

स्लाव, फिन्, तुंगुसादीनां
गर्विताः सूनवो वयम् ।
येषां गौरवगाथाभिः
गुञ्जिता रूसमेदिनी ।।

इमाः एव रूस-स्लाव जातयः मिलित्वा ईसवीसंवत्सरस्य दशमे शतके प्रथमं रूसीयराजवंशस्य

मूलमारोपयन् । आसां राजधानी कीएव नाम्ना प्रसिद्धा तथा आभिः यूनानवासिभिः यवनैः सह व्यापारिकः सम्बन्धः स्थापितः । अस्यैव वंशस्य राजा ब्लादिमीरः प्रथमः ९८९ ईसाब्दे ईसायि, कट्टरपंथि चर्च-धर्मं स्वीचकार ।

एवं न मन्तव्यं यत् अस्य राजवंशस्य प्रभुता समस्ते रूसदेशे मान्याऽभवत् । स्लावीयजातीनां केचन अन्येपि राजवंशाः आसन् ये कीएव राजधान्याः परस्परं च विरुद्धाः आसन् । अस्य पारस्परिकवैमनस्य लाभं गृहीत्वा पूर्वीयाः तातारा: मंगोलाश्च त्रयोदशके शतके कीएव राजधानीं समूलामुत्खातवन्तः; वोलगायाः सरितः तटे सरायनामके स्थाने स्वां राजधानीं निर्ममुः । पञ्चदशे शतके तान् अपदस्थान् कर्तुं पुनः स्लावराज्य परिवाराः संघं विदधुः; तस्य संघस्य नेतृत्वं मास्को राजवंशः कृतवान् । तेन वंशेन न केवलं मंगोलाः हताः प्रत्युत उत्तरे, पश्चिमे, दक्षिणे, सर्वत्र राज्यविस्तारः कृतः । अस्यैव वंशस्य चतुर्थः इवानः क्रूरकर्मा १५४७ तमे वत्सरे आत्मानं समस्तदेशस्य जारं घोषितवान् तथा आत्मनः समस्तप्रतिद्वन्द्विसामन्तान् क्षीणबलान् महत्वहीनान् समपादयत् ।

इवानस्य उत्तराधिकारिणां समये सामन्ताः पुनः शक्तिसंचयं प्रारभन्त । तदैव दास प्रथापि सुदृढा जाता । यदनुसारं भूस्वामी भूवासिनामपि स्वामी भवतिस्म । सः तेभ्यः दासवत् कार्यं कारयितुं समर्थः अभवन् तेषां भृत्यानां अयमप्यधिकारः नासीत् यत् ते एकस्मात् स्थानात् अन्यं सामन्तस्थानं गन्तुं शक्नुयुः ।

क्रूरकर्मणः इवानस्य पुत्रः सन्तान-हीनः एव मृतः अतः जारस्य संचयने सामन्तानां भीषणः संघर्षः समजनि, आन्तरिकाः क्रान्तयः बभूवुः, बाह्याः आक्रमणाश्च संभूताः,अन्ततोगत्वा रमानोवपरिवारस्य मिरवाइल रमानोवः जारपदवीमध्यतिष्ठत् । यस्य वंशधराः त्रिशतवर्षाणि यावत् रूसे राज्यमकुर्वन् । तदैव जारपदवी अपि समाप्तिमगात् ।

मध्ययुगे 'यथा राजा तथा प्रजा' इति नियमः प्रचलतिस्म । रमानोवः रूसे एकं नवीनं दृष्टिकोणं प्राचारयत्, येन रूसीय सामाजिकस्य सांस्कृतिकस्य च विकासस्य नवीना भूमिका रचिता, तस्याः चर्चामग्रे करिष्यामि ।

यथा वयं पूर्वं दृष्टवन्तः स्मः, यत् रूसदेशः तदा प्रभृति आत्मानं सुव्यवस्थितं कर्तुं संघर्षेषु एव रतः आसीत् । एताः परिस्थितयः विशिष्टसाहित्यिकान्दोलनस्य उपलब्धेः वा रचनार्थम् उपयुक्तं वातावरणं नोपस्थापयन्ति । ईसायिधर्मस्य प्रवेशात् पूर्वं रूसस्य साहित्यं लोकगाथासु एव सीमितम् आसीत् । यासां क्षीणाः प्रतिध्वनयः अद्यापि लब्धुं शक्यन्ते । ईसायि मतेन सहैव धार्मिकः लेखनपाठनारम्भः प्रवृत्तः, तथा राज्यस्थापनेन साकम् इतिहासलेखनकार्यमपि संपन्नम् । षोडशशतकस्य समाप्तिपर्यन्तम् विशुद्धसाहित्यस्य रचनायां केवलमेकस्याः एव रचनायाः नाम गृह्यते; इगोरस्याक्रमणम्, सभवतः इयं रचना द्वादशशतकस्यास्ति या स्लावतातारारणाम् संकुलं समरमुपवर्णयति । किन्तु नास्त्यत्र सन्देहलेशोऽपि यत् जीवनसघर्षस्य,यवनचर्चस्य भाषासम्पर्कात् यवनानीतः बहुलधार्मिकसाहित्यस्य च अनुवादः रूसीयभाषायां भूत ओजस्विनीं शक्ति समचिनोत् ।

रमानोवस्य नवीनदृष्टेर्या चर्चा पूर्वं कृतास्ति, तस्याः उद्देश्यमासीत् रूसदेशस्य पश्चिमीययोरो-

पाभिमुखीकरणम् । सा प्रणाली इङ्गलैंडेन हालैंडेन च सह व्यापारमवर्धयत्, तया विदेशीयाः कलाकाराः चिकित्सकाश्च समाहूताः, सा योरोपीयप्रभावस्य च संस्थापनाय सहस्रशः जर्मनपरिवारान् समानीय मास्कोनगरे आवासयत् ।

पश्चिमीय योरोपमुखावलोकनस्य ततः प्रेरणाग्रहणस्य च प्रवृत्तिः सप्तदशे अष्टादशे शतके च प्रचलिता आस्ते स्म । रमानोवस्य उत्तराधिकारिषु प्योत्रमहान् तथा महाराज्ञी कैथरिन, अनयोः नाम प्रसिद्धमस्ति । प्योत्र महाराजः प्राचीनां रूसीयां पद्धतिं परित्यज्य जीवनस्य समस्तेषु क्षेत्रेषु योरोपीयपरिपाट्याः प्रचारमकरोत् अकारयच्च । एवं कथ्यते यत् आत्मनः समस्तसामन्तान् आहूय सः स्वहस्तेनैव तेषां क्षौरकृत्यमकरोत् दाढिकाश्चाकर्तयत् । अनन्तरं दाढ़िकासहितान् मानवान् करदान् अकार्षीत् । इदं सर्वं केवलं प्रतीकात्मकमासीत् ।

कैथरीना महाराज्ञी रूसदेशे फ्रांसीयां संस्कृतिं साहित्यञ्च प्रावेशयत्, सामन्तपारिवारेषु नवयुवकानां शिक्षादीक्षादिविषयेषु विशेषध्यानं दत्तवती परं कृषकप्रज्ञायाः स्तरः यथापूर्व एव स्थितोऽभवत् ।

सप्तदशे अष्टादशे च शतके शान्तिस्थापना न संजाता, अस्मिन्नपि समये रूसस्य राजनीतिः पश्चिमाभिमुखी वर्धमानासीत् । पूर्वीयशक्तीनां ह्रासं विदधाना प्रायः फिनलैन्ड, एस्तोनिया, लातविया, लिथुआनिया, स्वीडेन, पोलैण्ड, उक्रइनकज्जाकैः सह तुर्कीक साम्राज्येन साकं संघर्षाः प्रचलन्तः आसन् । अष्टादशशतकमध्ये एकस्मिन् जर्मनी-रूससंग्रामे प्रायः त्रिलक्षरूसीयाः मृत्युमुखमापन्नाः ।

एतेषु शतकेषु जनतायां लोकगीतानां, लोककथानां, धार्मिकवार्तानाञ्च सृष्टिः संजाता, परन्तु एतेषां गणना सत्साहित्ये नासीत् । साहित्यकोटिकक्रियाकलापानां केन्द्रं राजद्वारमासीत् । तत्र यत् किंचित् लिखितम् तत् सर्वं राजद्वारीयं, कृत्रिमं, फ्रांसीयसाहित्यस्यानुकरणं चासीत् । तदनुकरणमपि एतादृशस्य फ्रांससाहित्यस्य आसीत् यत् स्वयमेव यूनान-रोमयोः पुरातनप्रणालीपथिकम्, अतिकृत्रिमं, निर्जीवं, रूढ़िबद्धं चासीत् ।

अष्टादशशतकस्य अन्तिमे समये पश्चिमयोरोपस्य रूसस्य च मानसिकस्तरेषु बृहदन्तरमासीत् । योरोपो मध्ययुगात् निर्गत्य नवजागरणस्य नवसुधारस्य च सांस्कृतिक-धार्मिकयोः आन्दोलनानां विप्लवान् अनुभूय, कंचित्कालं प्राचीनमनीषिणां संरक्षणे अनुशासने च व्यतीत्य, रूसीय संस्कृतेः रहस्यमयं द्वारमाससाद । रूसः अधुनापि मध्ययुगे एवातिष्ठत् । सः नवजागरणस्य नवसुधारस्य च किमपि समानान्तरमान्दोलनम् नाज्ञासीत् । तस्य सामन्तवर्गः अवश्यं किंचित् शिक्षितो भूत्वा तैरेव नियमैः जटिलानाम् साहित्यस्वरूपाणामनुकृतिमुपस्थातुं प्रवृत्तः येभ्यः तदानींतनः योरोपः निर्विण्णोऽभवत् । परन्तु ध्यानदा वार्ता इयमस्ति यत् इयं प्रवृत्तिः रूसाय उच्चकोटिकं साहित्यं नाम न दत्तवती भवेत्, किन्तु रूसीयां भाषामेवविधां, परिमार्जितां, परिष्कृतां, गरिमामयीं, प्रगतिशीलां च कृतवती, यत् सा जातिः सर्वथा जीवनसंबद्धानां भावानां विचाराणां च सहजवाहिका संजाता । इमामेव भाषामाश्रित्य पूश्किनमहाशयः एकोनविंशे शतके स्वस्यासाधारणप्रतिभया रूसीययुगस्य संवेगबलेन च प्राञ्जलं प्रभावपूर्णं च साहित्यं व्यरचयत् ।

रूसीयां भाषां साहित्यञ्च योरोपीय भाषायाः

साहित्यस्य च समं कर्तुं श्रेयः पुश्किनः एव अलभत। रूसस्य समीपे नवजागरणस्य प्रसादः रोक्शपियर कविः, नवसुधारस्य प्रसादः मिल्टन महोदयः, पुरा-साहित्यानुशासनस्य प्रसादः डाइड्रेन सदृशः नास्ति, तथापि तस्य पुश्किनः महाकविः रूमानियुगस्य प्रतिनिधेः वाइरन कवेः सहजां समकक्षतां बिभर्ति। साहित्यमार्गे रूसेन अवश्यमेव विलम्बेन प्रस्थितम्. तथापि रूमानियुगे सः पश्चिमीय योरोपेन सह बद्ध-स्कन्धो बभूव। ततः प्रभृति अद्यावधि रूसीयं काव्यं योरोपीय काव्येन सह युगपत् चलन्नास्ते। ऊन-विंशशतकारम्भे तस्मिन् शैलिनः कीट्सस्य रूमीयः उच्छ्वासः अस्ति, मध्ये उपान्ते च टेनिसनतुल्या आभिजात्याभिव्यक्तिः ततो विरतिश्चास्ति। विंश-तितमे शतकारम्भे विकसिता व्यक्तिवादित्वसम्पन्ना, तदनन्तरमैतिहासिककारणैः योरोपीयकाव्यविघट-नस्य कालः आपतति, रूसीयक्रान्तेः पंक्तिबद्धताया-श्च समयः समाविर्भवति, सांप्रतन्तु उभाभ्यामपि प्रवृत्तिभ्यां मुक्तिप्राप्तेः प्रयासः येन केन प्रकारेण प्रचलति।

स्थूलदृष्ट्या बाह्यरूपरेखायाः समतायाः अस्तित्वे एतत् न मन्तव्यं यत् शतकद्वये रूसीय-काव्यस्य कापि स्वीया विशेषता नासीत्। अमुमेव विषयमुद्दिश्य संक्षेपेण निम्नपंक्तीनां ध्येयमस्ति।

अष्टादशशतकस्य द्वादशतमे वत्सरे यदा वीर-वरो नेपोलियनः रूसं प्रति आक्रमणमकरोत् तदा रूसदेशस्य अतीव महती जनधनहानिः अभवत्, परन्तु तदनन्तरं मध्यशताब्दीपर्यन्तं क्रीमियायि-युद्धं यावत् देशस्य शक्तिः प्रभुता च अजस्रं वर्ध-माना अभवत्। क्रीमियायाः समरे सः अवश्य पराजितो बभूव। नेपोलियनं विजेतुं इङ्गलैंड प्रशा, आस्ट्रियारूसदेशानां यः शक्तिसंघ. संघ-टितः, तस्मिन् रूसः महत्वपूर्णां भूमिकामगृह्णात्। दक्षिणे पूर्वे च सः स्वराज्यं वितस्तार। देशस्यान्त-श्च ऊनविंशतिशतकस्य व्यावहारिकविज्ञानेन समन्वितो भूत्वा सर्वतोमुखस्य औद्योगिक विकासस्य मूलमारोपयत्। अस्मिन्नेव समये स शासनव्यवस्थां च योरोपीयां स्वीचकार कृषकप्रजानां बन्धनानि किंचित् शिथिलानि चकार। जनतायां या अधि-कारचेतना जागरूका अभवत्। तस्याः प्रमाण-मिदमस्ति यत् १८२५ तमे वत्सरे एकः विद्रोहः अभवत् यः दिसम्बरविद्रोहनाम्ना प्रसिद्धोस्ति।

साहित्ये अयं समयः पूश्किन, त्यूतसेव, लेर-मेन्तोव, कोल्तसोव, खोम्याकोव, सदृशां महाकवीनां गोगोलसदृशां कथाकाराणां, नाट्यकलाविदां च युगम् अस्ति। यं समयं रूसीयसाहित्यस्य स्वर्णयुग मन्यन्ते। महाकविः पूश्किनस्तु तस्य निश्चित प्रतीकः प्रतिनिधिश्चास्ते।

( क्रमशः )



# अति भोजने पञ्चदोषा, हेयाश्चैव मिताशिभिः

श्री स्वामिनाथपाण्डेयः सिंहपुरम् (नरसिंहपुरम्)

## १. तत्र पञ्चदोषाः

( १ )

मात्राविचारतो भेदा, भोजनस्य त्वनेकशः ।
मितं चैवाऽमितं चैव, न्यूनं चैव तु मुख्यतः ।।

( २ )

अमितं भोजनं चैव, ह्यतिभोजनमेव तु ।
न्यूनं चापि सदा ध्येयं, ह्यतिभोजन एव तु ।।

( ३ )

अमितं भोजनं नित्यं, क्रियते धनिना नरा ।
न्यूनं तु भोजनं नित्यं, धार्यते ऽधनिनैव हि ।।

( ४ )

कदाचित्कृपणा लोका, धन–धान्य–प्रपूरिताः ।
कुर्वन्ति भोजनं न्यूनं, निर्धना अमितं कदा ।।

( ५ )

कुर्वाणा भोजनं न्यूनं, कृपणा यान्ति निश्चितम् ।
असन्तुष्टिं निराशाञ्च, निन्दां शोकं सुदीनताम् ।।

( ६ )

निर्धना जनता नित्यं, कुर्वाणा अमितं कदा ।
न्यूनं नित्यं च यान्त्येव, क्षुधं भीमां विनाशिनीम् ।।

( ७ )

भोजनानान्तु सर्वेषां, मितभोजनमेव तु ।
श्रेष्ठं स्वास्थ्यं शुभं चैव, युक्तं सर्वगुणैः सह ।।

( ८ )

क्षुधो निर्वृतये नित्यं, प्रसन्नं सुपचं सुखम् ।
परिश्रमेण धार्यन्तु, हितं स्वादु सुनिर्भयम् ।।

( ९ )

ईर्ष्या-द्वेष-विनिर्मुक्तं, सहजं दुःख-नाशनम् ।
शान्तं प्रियं च भोग्यं च, सत्व-शुद्धि-प्रदायकम् ।।

( १० )

अमिते भोजने नित्यं, दोषाः पञ्च वसन्ति वै ।
ज्ञेया हेयाश्च लोकैस्तु, मनुना कल्पिता यथा ।।

'अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोक-विद्विष्टं, तस्मात्तत्परिवर्जयेत्।।''
(मनु. २।५७)

## २ व्याख्या च तेषां

(११)

मन्द क्षुधायां य उ भोजनन्तु,
करोति जिह्वा-वशगोऽश्रमी वै ।
आलस्ययुक्तश्च सदा सुखार्थी,
मन्दाग्निना गच्छति रोगमेव ।।

(१२)

आरोग्य-हीनः स हि लोक एव,
शरीर-शक्त्या क्रमशो विहीनः ।
शतादधो जीवति मृत्युमेति,
चायुष्य-हीनः स हि कथ्यते वै ।।

(१३)

आयुष्यमेकं शत-वर्ष-जीवनं,
सामान्यमेतत्प्रतिपादितं सदा ।
वेदेषु योगाच्छरदः शतान्नरो,
जीवेच्चिरं स्वामि-पदे प्रतिष्ठितः ।।

(१४)

आयुष्यहीनः स हि स्वर्ग-हीनः,
स्वर्गः प्रयत्नैर्ननु लभ्य एव ।
महा-प्रयत्नोऽलघु-जीवि-साध्यः,
सुखं स्वरे वाऽस्ति मतं मुनीन्द्रैः ।।

(१५)

रोगादिमग्नो न चिरं हि तिष्ठति,
यत्नैर्महद्भिर्य उ सौख्य-वञ्चितः।
पापेषु मग्नो हि विलोक्यते ऽसौ,
क्षीणा नरा निष्करुणा भवन्त्यतः ।।

(१६)

सर्वाणि पापानि मतानि सर्वशः,
कृतानि लोकैर्निबलैः पुनः पुनः ।
तान्येव पापानि वदन्ति सज्जना,
अपुण्यकर्माणि सुनिश्चितम्भुवि ।।

(१७)

नाऽरोग एवास्ति न दीर्घ-जीवी,
न दीर्घ-जीवी सुख-यत्नवांश्च ।
यत्नादि-दूरो नहि पुण्यकर्मा,
विद्विष्यतेऽसौ भुवि लोक-वर्गैः ।।

३. करणीयन्त्विदानीम्

(१८)

आरोग्यमायुष्यमथा हि पुण्यं,
स्वर्ग्यं तथैव प्रिय-लोकमेव ।
गम्येत नित्यं वर-जीवनन्तु,
मिताशिभिः पञ्च विहाय दोषान् ।।

---

# वन्दे दयानन्द-महामुनीन्द्रम् ।।

रचयिता—ब्र. योगेन्द्रार्य्यदर्शनाचार्यः ( प्रथमवर्षः ) झज्जरगुरुकुलम्

( १ )

श्रेष्ठा नरा ये वरणीयश्रेण्याम्,
जाताः समाजे सकलैः सुपूज्याः ।
तेभ्योऽपि मान्यं विदुषं द्विजेन्द्रम्,
वन्दे दयानन्दमहामुनीन्द्रम् ।।

( २ )

केचित्तु कायाभरणे सुरत्नैः,
केचिच्च भोगेषु समोदलग्नाः ।
केचिच्च विज्ञाः पठनेषु रक्ताः,
प्रीतिं परित्यज्य शरीरपुष्टेः ।।

( ३ )

केचित्तु स्वार्थे निरता दिवान्धाः,
केचिच्च पुष्टौ धनपुत्रपत्नेः ।
केचिद्विरुद्धाः परमात्मशक्त्याः,
जातानुपूर्व्याः कृतकार्यभोग्यैः ।।

( ४ )

तं कामभोगेषु विरक्तचित्तम्,
योगेन्द्रदेवं समशक्तिविद्यम् ।
संसारकल्याणहितेषु लग्नम्,
वन्दे दयानन्दमहामुनीन्द्रम् ।।

( ५ )

कौपीनवन्तं खलु भाग्यवन्तम्,
दिव्यं व्रणीन्द्रं भुवनेशभक्तम् ।
वेदस्य भाष्यस्य सुकर्तृकं तं,
वन्दे दयानन्दमहामुनीन्द्रम् ।।



# साहित्य-समीक्षा

(समालोचनार्थ प्रति पुस्तक की दो प्रतियां पत्रिका-कार्यालय में आनी चाहियें)

## सचित्र आयुर्वेद

( मानसरोगाङ्कः )

सम्पादकः–श्री कामेश्वर शर्मा 'कमल ।'

प्रकाशकः–श्री वैद्यनाथ आयुर्वेद भवन प्राइवेट लि. कलकत्ता–६ । पृष्ठ संख्या २०२, मूल्यम् ३) वर्षम्–१७, अङ्कः–७ ।

सचित्र आयुर्वेदस्य मानसरोगाङ्कोऽयमस्माकं हस्ते विद्यते । यथा स्थूलदेहान्तर्गतव्याधीनामुपशमनाय देहावयवानां शारीरिकक्रियादीनां च विज्ञानमावश्यकं मन्यन्ते सुधियो भिषजस्तथैव मानसविज्ञानमप्यावश्यकं व्याध्यादीनां समूलोच्छेदायेत्यस्ति तेषामभिमतम् । अस्मन्मते तु संसारस्याधुनिक्यां विषमावस्थायां रोगाणामुत्पत्तिः प्रायः मनोद्वारेणोपजायते । अतोऽद्यत्वे मनसोऽभ्यन्तरङ्गस्य च विशिष्टज्ञानं भिषजेऽत्यन्तमावश्यकं प्रतीयतेऽस्माभिः । अस्मिन्नंके मानसक्षेत्रमङ्गीकृत्यानेकेषां विशिष्टवैद्यानामुत्कृष्टा लेखाः विद्यन्ते । क्वचित् क्वचिल्लेखेन सह मनोव्यापाराणां मस्तिष्कसम्बन्धिकार्याणां च स्पष्टीकरणाय चित्राण्यपि प्रदत्तानि तत् साधुविहितं मनोव्यापाराणां सुखबोधाय । प्यौण्डत्रयभारपरिमितो मस्तिष्कोऽयं समग्रसंसारस्य ज्ञानविज्ञानं सर्वं च क्रियाकलापं कथं निर्वाहयति इति महत् विस्मयजनकम् । अत्रैकोनचत्वारिंशल्लेखकानां नामानि विषयसूचिसम्बद्धानि दृश्यन्ते । तेषामध्ययनेन निश्चप्रचमिवास्माभिरुद्घोष्यते यदायुर्वेदीय शिक्षणालयेषु मनोविज्ञानस्य योगविद्यायाश्चाप्यध्ययनमध्यापनमावश्यकं विधेयं शिक्षाविज्ञैः । अस्यात्युत्तमसामग्रीसम्पन्नस्य मानसरोगांकस्य प्रकाशनाय वयं सम्पादकमहाभागानां वैद्यनाथ आयुर्वेदभवनसञ्चालकानाञ्चाभिनन्दनं कुर्मः । अस्यांकस्य देशविदेशेषु प्रभूतं प्रचारं कांक्षामः ।

## भारत सेवक

( कृषि-विशेषांकः )

सम्पादकः–श्री बी. डी. नन्दा, श्री निरंजनदेव शर्मा, श्री दीनानाथ सिद्धान्तालंकारः ।

प्रकाशकः–श्री चक्रधारी अग्रवालः, थियेटर कम्युनिकेशन बिल्डिंग, कनाट सर्कस, नई दिल्ली । पृष्ठ संख्या–७२, वार्षिकमूल्यं-६) अस्यांकस्य १)।

भारतसेवकसमाजसंस्थायाः मुखपत्रमिदम् । एकादशवर्षस्य द्वादशाङ्कोऽयं कृषिविशेषांकरूपेण सम्पादकमहाभागैः प्रकाशितः समालोचनार्थं प्रेषितश्च । कृषिप्रधानोऽयं देश इति प्रख्यातः सर्वत्र जगतीतले तथापि कृषिजन्यवस्तूनामभावो महार्घता वा कुतो विद्यते ? किं भारतवासिनामुदरदरीपूर्णाय यावदभीष्टं प्रभूतमन्नं नोपजायते–इत्यभावग्रस्तानां चिन्तानिमग्नानामुद्वेगकरोऽयं प्रश्न. सततं कर्णशुष्कल्यामापतति । एवं प्रश्ने समुपस्थिते सति परस्परमेवं विवदन्ते बहवः–साधुसस्याढ्या शस्यश्यामला मातृभूरेषा स्वपुत्रेभ्यः प्रभूतमन्नमवश्यं जनयती'त वन्दन्ते मातरं श्रद्धालवो मानवाः । अपरे च बहवो विरुद्धमाचक्षते । केचनोर्वरकाणामभावं प्रदर्शयन्ति अन्ये ग्रामवास्तव्यानां कृषीवलानामज्ञानं पुरतः प्रकटयन्ति । बहवो व्यापारिवर्गाणामेव दोषं गणयन्ति परे केचन सर्वकारछत्रछायायामंकुरितो भ्रष्टामात्यादिभिः परिपोषित उत्कोचभ्रष्टाचारादि पुष्पफलैः पल्लवितो विषवृक्ष एवात्र महार्घताया

हेतुरिति प्रतिपादयन्ति । वस्तुतः कोऽत्र मुख्यो हेतुरिति डिण्डिमोद्घोषेण वक्तुं न शक्यते । अत्र कृषि-विशेषांकेऽपि बहवो हेतवो महार्घतायाः प्रदत्त-लेखेष्वलोक्यन्ते मन्ये ते सर्वे हेतवो बुभुक्षारूपिण्याः निर्ऋतिपापदेवतायाः संरक्षकाः सन्ति परमस्माभि-रेतदवधातव्यं यत्सर्वोपरि सदाचारविचारादीनां स्थानं विद्यते । भारतसेवकसमाजस्यापीदमेवोद्दे-श्यमस्ति । उद्देश्यमिदं सर्वत्र भारते सफलीकर्तुं प्रभवतु पत्रमिदमिति कामयामहे वयम् ।

### नया जीवन

सम्पादकः--श्री अखिलेश जी, नया जीवन, सहारनपुर, उ. प्र.

निदेशकः--श्री कन्हैयालाल जी मिश्र, प्रभाकर, पृष्ठ संख्या-४०, वार्षिक मूल्यम् ५), १ प्रति )५० ।

'नया जीवन' मासिक पत्रस्यायं जनवरीमासाङ्को (१९६५) ऽस्माकं हस्ते विद्यते । सम्पादक-महाभागेन सम्मत्यर्थं वयं प्रेरिता । अत्र कस्यापि विप्रतिपत्तिर्न भवितुमर्हति यदस्य पत्रस्य पूर्व-संचालकाः प्राणस्वरूपाः सम्पादकमहाभागाः श्रीमन्तः कन्हैयालाल मिश्र प्रभाकराः दूरदर्शिनः प्रौढविचारचतुरा विद्यन्ते । राष्ट्रशरीरे प्रत्यहं परिवर्तमानानामवस्थाविशेषाणां विघातकदोषाणां संसाधकरूपाणां वा सूक्ष्मतमं ज्ञानं साधुविश्लेषणं वा एतेषां लेखेषु दृग्गोचरी क्रियते । एते प्रौढपाण्डित्यं सूक्ष्मविवेचनाशक्तिं च द्योतयन्ति । एतेषां पण्डितप्रवराणां लेखान् वयमवश्यं पठामः । अनेन 'नया जीवन' पत्रेण जनसामान्यस्य मार्गदर्शनं विहितम् । अधुना क्रूरग्रहग्रहिलस्य विघटनप्रवृत्ति-प्रवणस्य भारतराष्ट्रस्य संरक्षणाय नवोद्योगो विधी-यते पत्रेण । यथा--सम्पादकमहाभागस्य प्रार्थना-पत्रे लिखितं यत्--'नया जीवन' पिछले वर्षों में मानवीय चेतना का प्रेरक रहा है । देश की दशा का ध्यान कर इस अङ्क से मानवीय चेतना की उस प्रेरणा को सुरक्षित रखते हुए उसे समग्र राष्ट्रीय चेतना का प्रेरक बनाने का प्रयत्न आरम्भ किया है । आशा है २,३ अङ्कों में यह प्रयत्न अपना पूर्ण रूप ले लेगा ।' एष साधुसमारम्भः पत्रं सफलं विदधात्वित्यस्त्यस्माकमाकांक्षा । ये राष्ट्रा-म्भसि प्लवमानानां विभिन्नदलप्लवानां नाना-विचारधाराणां सूक्ष्मं ज्ञानं लब्धुं कामयन्ते तैः पत्रमिदमवश्यं ग्राह्यं पठनीयं च ।

—भगवद्दत्तो वेदालंकारः ।

## सम्पादकीय टिप्पण्यः

### अहो ! आंग्लभक्ताः भारतीयाः

इदमस्ति सुमहत् खेदजनकं यदस्मिन् देशे सन्त्येतादृशा आंग्लभक्ताः भारतीयाः दासमनोवृत्ति-परिपूर्णा ये ज्येष्ठापत्यमिव विद्यमानां हिन्दीभाषां परित्यज्य विदेशीयामाङ्गलभाषां कामयन्ते तस्यां प्रेमातिशयं च व्यञ्जन्ति । आंग्लभाषायाः कृते कृष्णवर्त्मनि स्वजीवनमप्यधुक्षन् आंग्लीयभूतावेशव-शादसाध्यदशामापन्नाः बलवद् रोगिणः । बुभुक्षा-पीडितायाः भारतमातुः सम्पत्तेर्विनाशं कुर्वाणाः नालज्जन्त । यदि हिन्दीतमिलभाषयोर्मिथः संघर्षो ऽभविष्यत् तन्मन्ये रौद्रनृत्यमेतत् कथञ्चिदुचितम-भविष्यत् । किमनेन विघटनप्रवृत्यङ्कुरा न समु-त्पन्नाः सर्वस्मिन् भारते ? अधुना केवलमेक एव श्री विनोवा भावे देवप्रतिमः पुरुषो नयनगोचरतां

याति यो गर्ते पतन्तं भारतवर्षं समुद्धर्तुमर्हः। विघटनवह्नेः प्रशमनाय स्वप्राणानपि होतुं समुद्यतोऽयं देवः। भारतराष्ट्रस्य कल्याणहेतवे तपश्चरितं महाभागेन। एषा श्रुतिरप्यत्र चरितार्थाऽभूत्——

"भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे। ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा अभिसंनमन्तु।" अतो विपरीतम यन्निदर्शनं तु राजगोपालाचार्यमहोदयस्य विद्यते यः पूर्वं सर्वत्र भारते विशेषतो मद्रासप्रान्ते हिन्दीप्रचाराय बद्धपरिकर आसीत् स एवाधुना हिन्दीविरोधकरणाय विनाशकरं वह्नि वीजयति। अहो ! कियान् भेदो द्वयोरेतयोर्महात्मगांधिशिष्ययोः। नान्यत् कारणं वयं पश्यामः केवलमेतदेव विद्यते यन्महात्मगांधिसमये दिव्यपुरुषाणां या दैवीपरिषत् संघटिताऽऽसीत् यद्दिव्यधरातलं साऽधिष्ठिताऽऽसीत् तस्माद् दिव्यधरातलादधः पतितोऽयमाचार्यः। अधः पतने कारणं त्वेतत् प्रतीयते यत् कदाचित् सर्वोच्चशिखरमधितिष्ठन् पुरुषो यदि तस्मात् हठात् प्रच्यावितो भवेत् तदा तस्य समूलोच्छेदाय चाणक्यायतेऽसावत्राप्येवमेव विभावयन्तु सुधियः। एवमेव नानाप्रवादाः लोके लब्धप्रसराः श्रूयन्ते। अन्यच्च, उद्गानरसिका एवमुपदिशन्ति——

सम्मानाद् द्विजो नित्यमुद्विजेत विषादिव
अमृतस्यैव चाकांक्षेदवमानस्य सर्वदा।

अस्मन्मते तु मनोर्भणितिरेषा ब्राह्मणाय प्रोक्ता योगस्य प्रोच्चभूमिकायामपि सुदुर्लभा साऽस्मिन् कलिकाले द्विजत्ववसनावृतेन वराकेण राजगोपालाचार्येणास्माभिर्वा कथं सुसाध्या भवेत्। परिणतधियां क्रान्तदर्शीणां काले प्रसृतामध्यात्ममहोन्नतिमाधुनिकाः हीनवीर्याः कथं प्राप्नुयुः ? केन्द्रीय सरकार-नियुक्तिष्वहिन्दीभाषाभाषिणाँ कृते संख्यानिर्धारणं किं न प्रयत्यते आचार्यमहाभागेन ? मन्ये, नायं सुष्ठु उपायः समस्यायाः। मा भूत् हिन्दीभाषा मद्रासप्रान्ते न चापि वयं वाञ्छामः कुत्रापि बलादारोपयितुं परं तमिल भाषायां तु कार्यं भवेत्। भारताय लाञ्छनभूताऽऽङ्ग्लभाषा येन केनापि प्रकारेण बहिर्निस्सारणीयैवेत्यस्त्यस्माकमभिमतम्। दुखं त्वेतत् यत् कांग्रेसाधिपतिना श्रीमता कामराजेनापि न सम्यगाचरितम्। लोकप्रवाहसंरोधायाप्रयतमानेन स्वयमपि तत्र पतितेन न नायकत्वं प्रादर्शि। यदृच्छया मुखान्निःसृतं नेतृगुणसम्पन्नस्य पुरुषस्याचरणोचितं न। मन्ये, अत्र तु लौहपुरुष एव साफल्यमेष्यति। महर्षिदयानन्द महात्मगांधि सदृशदेवपुरुषाणामेवेदं भागधेयं यत् ते धारां संरोद्धुं परिवर्तयितुं वा क्षमन्ते। भोः भोः नेतारः ! स्मरन्तु पौनःपुन्येन पठन्तु——

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः॥

सर्वाश्च ताः प्रदेशभाषा अस्माकं भाषाः परमाङ्ग्लभाषा कदापि न। अधुना त्वेषाऽऽङ्ग्लभाषा रुसीजर्मनफ्रेञ्च चीनीत्यादिभाषाणां समकक्षतां नेया। यथा तत्तद्देशैः सह व्यवहारकरणाय तास्ताः पाठ्यन्ते तथैवैषाऽपीत्यस्त्यस्माकं विचारसारः। श्रूयते यत् दाक्षिणात्याः प्रखरबुद्धिमन्तो भूरिपरिश्रमशालिनो भवन्ति। किमैक्यसम्पादनाय ससारभाषासु सरलतमां हिन्दीभाषामनायासेन सम्यगधीत्य महतस्त्यागस्य निदर्शनीभूता न भविष्यन्ति ? सायणशंकररामानुजाचार्यादयो महाविद्वांसो भार-

तीयसंस्कृतिसंरक्षका ऐक्यसम्पादका: किं दक्षिण-प्रदेशे नोत्पन्नाः ? पुरातनीं पद्धतिमनुरुन्धानास्तेऽद्यापि भारतवर्षस्य गुरवो नेतारश्च भवितुमर्हन्ति नास्त्यत्र संशीतिलेशोऽपि ।

सर्वप्रदेशमुख्यमन्त्रिणां सम्मेलनेन कांग्रसकार्यकारिणा वा त्रिभाषासूत्रसम्बन्धे यो निर्णयो व्यधायि स तु भारतीयत्वस्य विशेषतो देववाण्या विनाशायैव विद्यते । त्रिभाषासूत्रे कुत आंग्लभाषाया: समावेशो विधीयते । सर्वभारतस्यैक्यसम्पादनाय किं देववाणी नोपयुक्ता ? स्वार्थान्धाभूत्वा स्वसंस्कृतिं स्वदेशमपि विक्रेतुं समुद्यता वयम् । यावदियं देववाणी भारतस्य सर्वेषु विद्यालयेषु सर्वासु पाठशालासु चानिवार्यरूपेण न पाठ्यते तावद् भारतीयत्वस्य समुद्धार: सत्यं देशप्रेम च नोपजायते । सर्वनेतॄन्प्रत्यस्माकमेतदेव प्रार्थनं यत्समग्रभारते संस्कृतमनिवार्यरूपेण पाठ्येत, एष प्रयत्नो विधेय: ।

—भगवद्दत्तो वेदालंकार: ।



# गुरुकुल-पत्रिका-विवरणम्

| | |
|---|---|
| १ प्रकाशनस्थानम्—— | कांगड़ी गुरुकुलम् |
| २ प्रकाशनं कदा भवति—— | मासिकी पत्रिका |
| ३ स्वामिनी समिति:—— | गुरुकुल कांगड़ी विश्वविद्यालयस्य विद्यासभा |
| ४ व्यवस्थापक:—— | श्री सत्यव्रतो विद्यामार्तण्ड: मुख्याधिष्ठाता |
| ५ सम्पादकस्य नामधेयम्—— | श्री भगवद्दत्तो वेदालंकार: |
| राष्ट्रियता—— | भारतीय: |
| संकेत—— | कांगड़ी गुरुकुलम् |
| ६ प्रकाशकस्य नामधेयम्—— | श्री धर्मपालो विद्यालंकार: |
| राष्ट्रियता—— | भारतीय: |
| ७ मुद्रकस्य नामधेयम्—— | श्री जी० आर० पाल महोदय: |
| राष्ट्रियता—— | भारतीय: |

अहं धर्मपालविद्यालंकारो घोषयामि यदुपरिलिखितं विवरणं मदीयज्ञानविश्वासानुसारं यथार्थं वर्तते ।

ह० धर्मपालो विद्यालंकार:
गुरुकुल-पत्रिका-प्रकाशक:

# वनस्पति अनुसन्धान : भारत का स्थान

श्री ज्ञानेन्द्र पाण्डेय

सर्वे आफ मेडीसिनल प्लान्ट्स, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार

विश्व के प्रमुख देशों, विशेषतः दक्षिण पूर्वी एशिया में वनस्पतियों पर हो रहे अनुसन्धान कार्यों पर विचार-विमर्श करने हेतु यूनेस्को के तत्वावधान में १५ दिसम्बर से १८ दिसम्बर, ६४ तक केण्डी (श्री लंका) में "सैकिण्ड सिम्पोजियम आन मेडीसिनल प्लान्ट्स" सम्पन्न हुआ। इस गोष्ठी में अफगानिस्तान, पाकिस्तान, भारत, बर्मा, थाइलैन्ड, चीन, जापान, फारमोसा, नेपाल, सूडान आदि प्रमुख देशों के लगभग ५० प्रतिनिधियों ने भाग लिया।

इस गोष्ठी में उपस्थित वैज्ञानिकों द्वारा प्रस्तुत लगभग १०० शोध-निबन्धों में से ३३ निबन्ध वहां पढ़े गये और उन पर विचार गंभीरता पूर्वक किया गया। भारत की ओर से स्वास्थ्य मन्त्रालय, वैज्ञानिक तथा औद्योगिक अनुसन्धान परिषद्, रीजनल रिसर्च लेबोरेटरी, केन्द्रीय औषध अनुसन्धान शाला, परमाणु शक्ति संस्थान, विभिन्न विश्वविद्यालय तथा प्रमुख वनस्पति अनुसन्धान केन्द्रों के वैज्ञानिकों ने अपने शोधों का विवरण प्रस्तुत किया।

भारत के प्रतिनिधियों ने वनस्पतियों पर फार्मेकोलोजी, कैमिस्ट्री तथा बोटनी प्रभृति विषयों से सम्बन्धित शोध-निबन्ध पढ़ें। अणुशक्ति संस्थान ट्राम्बे द्वारा प्रस्तुत अनुसन्धान तथ्य यहां उल्लेखनीय है। संस्थान के वैज्ञनिकों ने वनस्पति के ऊति सम्बर्धन (टिश्यू कल्चर), जो कि सक्रिय तत्व-कैलस्-को प्राप्त करने के लिए जिससे कच्ची जड़ी-बूटियों के सक्रिय तत्वों का सम्बर्धन करने में बहुत उपयोगी सिद्धि प्राप्त हुई है, पर निबन्ध पढ़ा। भारत की यह अपने ढंग की अनोखी शोध है। जिससे भविष्य में सक्रिय तत्वों से परिपूर्ण वास्तविक कच्ची जड़ी-बूटियों के उत्पादन में हमें विश्वस्त आशायें प्राप्त होती हैं।

भारत सरकार के स्वास्थ्य मन्त्रालय द्वारा गुरुकुल कांगड़ी विश्वविद्यालय (हरिद्वार) में स्थापित वनस्पतियों के अनुसन्धान यूनिट के अध्यक्ष श्री ए० सी० डे, जो कि फारेस्ट रिसर्च इंस्टीट्यूट (देहरादून) के रिटायर्ड रिसर्च आफिसर हैं, ने स्वास्थ्य मन्त्रालय की ओर से गोष्ठी में भाग लिया और दो शोध प्रबन्ध-"फोकलोर आफ मेडीसिनल प्लान्ट्स आफ दी भागीरथी वैली–हिमालयाज" और "मेथड्स आफ कलेक्शन आफ मेडीसिनल प्लान्ट्स इन दी हिमालयाज-टिहरी गढ़वाल" नामक प्रस्तुत किए। इन प्रबन्धों में उत्तरप्रदेश के उत्तराखण्ड-हिमालय के १४००० फीट की ऊंचाई तक के भाग की वनस्पतियों की संग्रह-विधि, भण्डार बनाना, पौधों की प्राप्ति स्थान, शुष्कीकरण, बाजार में स्थान, सहयोगी वनस्पतियां तथा कृषि के सम्बन्ध में खोजपूर्ण सामग्री को वैज्ञानिकों के सामने उपस्थित किया गया।

भारतीय प्रतिनिधि श्री डे के दूसरे शोध प्रबन्ध में बताया गया है कि अति प्राचीन काल से पेड़-पौधों को पारिवारिक चिकित्सा के लिए जनता में सफलता पूर्वक प्रयोग किया जा रहा है। ऋग्वेद तथा आयुर्वेद के प्राचीन साहित्य में लगभग १८०० वनस्पतियों का उल्लेख किया गया है। आज भी अनेक बनस्पतियां उनके विषय में प्रचलित किम्बदन्तियों के आधार पर उपयोग की जाती हैं। हिमालय जिसे कि भारत के आर्ष ग्रन्थों में वनस्पतियों का अक्षय भण्डार माना गया है, के उत्तरी-पश्चिमी भाग में स्थित

भागीरथी घाटी में प्राप्त होने वाले ४० पौधों पर उनकी किम्बदन्तियों को ध्यान में रखते हुए वैज्ञानिक ढंग से संग्रहण तथा प्रचलित उपयोगों की विधि का वर्णन प्रस्तुत किया गया है। हिमालय में पायी जाने वाली सैकड़ों वनस्पतियों की ऐसी मौलिक गवेषणा होने पर वनसम्पदा का कई प्रकार से उपयोग मानवता के लिए हो सकेगा, इस प्रकार का नवीन अनुसन्धान का क्षेत्र हमें प्राप्त होता है।

भारतीय योजना आयोग के परामर्शदाता (देशी चिकित्सा) पण्डित श्री शिवशर्मा, जो कि श्रीलंका में हो रहे आयुर्वेदीय अनुसन्धान कार्यों के भारतीय विशेषज्ञ के रूप में जा चुके हैं, ने मधुमेह (डायबिटीज मेलीट्स) में उपयोगी वनस्पति पर अपना शोध प्रबन्ध प्रस्तुत किया। इस शोधप्रबन्ध में सप्तचक्री (कैसेरिया ऐसक्यूलेन्टा) वनस्पति पर इस रोग के ५०० रोगियों पर अनुभव करके खोजपूर्ण प्रकाश डाला गया। इस प्रकार के विवरण से भारतीय चिकित्सा पद्धति में किए गये इस अनुसन्धान से उपस्थित वैज्ञानिकों का ध्यान आकर्षित हुआ है। भारत के दूसरे प्रतिनिधि श्री रामेश वेदी ने वनस्पतियों के रंगीन चित्र गोष्ठी में दिखलाये।

इस अन्तर्राष्ट्रीय गोष्ठी में जड़ी-बूटियों के विकास से सम्बन्धित कई महत्त्वपूर्ण प्रस्ताव पारित किए गए और उनमें उपस्थित वैज्ञानिकों ने विभिन्न सिफारिशें प्रस्तुत की हैं। गोष्ठी ने यूनेस्को से सिफारिश की है कि विभिन्न देशों की सरकारों को अपने यहां वनस्पतियों के अनुसन्धान कार्य को अन्तर्राष्ट्रीय सहकारिता का रूप प्रदान करना चाहिए। अनेक वनस्पतियां इस प्रकार की वनों में पायी जाती हैं, जिनका कोई औषधीय प्रयोग नहीं होता है, ऐसी वनस्पति-सम्पदा के प्रदेशों का आरक्षण करके उनपर कृषि तथा विशेष अध्ययन कार्य चलते रहने चाहिए। गोष्ठी में विभिन्न देशों में चलने वाले वनस्पति संग्रहण कार्य में उन्नति करने के लिए महत्वपूर्ण सिफारिशें की गयी हैं। आजकल व्यापारिक मात्रा में जड़ी-बूटियों का संग्रह जंगलों से किया जाता है, इस समय यह ध्यान रखा जाना चाहिए कि उनका संग्रह मूल तथा प्राकृतिक रूप में किया जावे। वनस्पतियों का संग्रह करते समय प्रजाति-विशेष का प्रजनन कार्य आगे निरन्तर जारी रहे, इस दृष्टि से वहां बीज रूप में पौधों को छोड़ देना चाहिए इस गोष्ठी की सफलता को ध्यान में रखते हुए वैज्ञानिकों ने सलाह दी है कि यूनेस्को की ओर से इस प्रकार के 'सिम्पोजियम' अन्य देशों में समय-समय पर होते रहने चाहिए। इससे वनस्पति अनुसन्धान क्षेत्र में हो रहे अनुसन्धान कार्यों के विषय में महत्वपूर्ण तथ्य विभिन्न देश में परस्पर विनिमय किए जा सकेंगे।

# परिमण्डलता

अथ मैत्रावरुणमाज्यम्। स ह स विश्वजिदेवस्तोमः। अहोरात्रे एव ते, अहर्वै मित्रो रात्रिर्वरुणः। तद् ये के चादित्यादर्वाञ्चो लोकास्तान् ह सर्वान् अहोरात्रे एवाप्नुतः। (जै. ब्रा. १।३१२)।

अर्थात् जो मैत्रावरुण आज्य है वही विश्वजित् स्तोम है और दूसरे शब्दों में वह अहोरात्र है क्योंकि मित्र अहन् है और वरुण रात्रि है। अतः जो लोक आदित्य से अर्वाङ् है अर्थात् इधर हैं वे ही अहोरात्र के घेरे में हैं, उन्हीं लोकों में दिन और रात्रि होती है।

# प्राचीनभारते शिक्षाक्रमः

श्री उदयवीरः शास्त्रीः, गाजियाबादस्थः

भारतस्य महत्याः प्राचीनसभ्यतायाः संस्कृतेश्च निर्माणं भारतीयशिक्षणसंस्थास्वेव बभूवेति को न जानाति । तादृशप्राचीनभारतीयशिक्षाविध्याधारभूतसिद्धान्तज्ञानलब्धिरावश्यकीति किञ्चिन्निवेद्यते । अत्र विषयेऽद्यावधि प्रायः पाश्चात्यैरेव विद्वद्भिः प्रयतितम्, परं तेषां जीवनादर्शस्य भिन्नत्वाद् भारतीयान्तरात्मनः स्वरूपं तात्त्विकतया बोधयितुं ते न सफलाः समजायन्त । अत एव ते कांश्चिद् भ्रान्तिमूलकानपि सिद्धान्तान् प्रत्यपादयन्। अतस्तद्द्विषयकगभीराध्ययनेन निष्पक्षविवेचनेन च प्राचीनशिक्षणक्रमस्वरूपस्पष्टीकरणमावश्यकमिति तथा विचार्यते । साम्प्रतं स्वाधीनताप्राप्त्यनन्तरं त्वेवंभूतस्याध्ययनस्य विशिष्टं महत्त्वम्, यतः शिक्षाविदां सम्मुखं भारतीयशिक्षापरम्पराऽनुकूलमेव राष्ट्रियशिक्षानिर्माणं स्यादित्ययं प्रश्नो विस्फारितवदनः प्रसृतो वर्त्तते । अस्मिन् देशे भारतीय जीवनादर्शमनुसरन्ती एव शिक्षा-प्रणाली शुभफलावहा स्यादिति को न विश्वसेत् । नायमेवम्भूतो देशः, यत्र स्वीया शिक्षापद्धतिर्न स्यात्, येन वैदेशिक शिक्षापरम्परोपजीव्यः शिक्षाक्रम एवानिवार्यतया स्वीकार्यो भवेत् । पराधीनदशायां कथञ्चिदभिभूतो देशस्तथाविधां वैदेशिकीं शिक्षापारम्परां बलादात्मसात् कृतवान्, परमिदानीं स्वातान्त्र्ये तादृक्दीनदशानुसरणं न शोभामावहति ।

निर्विवादमेतत् खलु—यदधुनाऽस्माकं तादृश्याः शिक्षापद्धतेः निर्माणमावश्यकम्, या भारतीयायाः संस्कृतेः सभ्यतायाश्च मूलभूतसिद्धान्तेष्वाधारिता भवेत्, या चास्माकमाधुनिकराष्ट्रियावश्यकतानामाकांक्षाणाञ्च पूर्तिकरणे सक्षमा स्यात् । यदा वयं प्राचीनभारतीयसंस्कृतेः सभ्यतायाश्चोल्लेखं कुर्मः, तदात्र काचित् सावधानताऽप्यपेक्ष्यते, प्राचीनभारतीयसंस्कृत्यादि विषयेऽस्माकं श्रद्धाभावस्य नायमभिप्रायः, यद्वयं साम्प्रतिकपरिस्थितीरावश्यकताश्चोपेक्षामहे । वस्तुतोऽतीतकालगतशिक्षणपद्धतेः साकल्येन चतुरस्रमनुकुर्वतीनां शिक्षणशालानामिहकाले संस्थापनं अभिमतफललाभाय दिवास्वप्नायितमेव भवेत् । अत एव तादृशप्राचीनगुरुकुलशिक्षाप्रणाल्या महत आदर्शभूतान् सिद्धान्तानाधारीकृत्य नवशिक्षणक्रमसंचालनेन तथाविधशिक्षाशालासंस्थापनेन च वयं राष्ट्रे नवजीवनसंचारं कर्त्तुं शक्नुमः । छात्राध्यापकयोर्मध्ये या स्थितिरातंकपूर्णा साम्प्रतमनुपदमुपलभ्यते, तामपि तया रीत्या परिवर्त्तयितुं पारयामः । छात्राध्यापकयोः परिस्थितिः खल्वादानप्रदानरूपा, अध्यापकः किञ्चिदभ्युदयफलं ज्ञानं छात्राय प्रददाति, छात्रश्च तत्सर्वमादत्ते, यद्ययमानुकूल्येन क्रमः प्रवर्त्तते, तदा साधीयान् भवति, अन्यथा तु यदाध्यापकस्य पार्श्वे किञ्चिद्दातुमेव नास्ति, स च शिक्षणकालं केवलं स्वार्थपरायणो बाह्याभिरेव प्रवृत्तिभिरतिवाहयति; छात्रस्य वा मस्तिष्कद्वारं ज्ञानादानाय नापावृतं भवति, तदा न छात्रेष्वनुशासनहीनताऽपाकर्त्तुं शक्यते, नाध्यापकेषु प्रतिकूलविक्षोभप्रवृत्तिसंचालनं वा दूरीकर्त्तुं पार्यते । अनुदिनमयं संघर्षः प्रवर्द्धमान एव दृश्यते । स्पष्टं कटुफलमेतद् विशुद्धवर्त्तमानशिक्षाविधेः ।

## प्राचीनरीतिलक्ष्यं सत्यान्वेषणम्

स्वसांस्कृतिक परम्पराबोधाय भारतीयजीवनादर्शविवेचनमावश्यकम् । आदिकालादेव

भारतीया धर्मप्राणाः खलु । भौतिकसुखापेक्षया आध्यात्मिकानन्दान्वेषणे तेषां विशिष्टा प्रवृत्तिः । शिक्षाक्षेत्रेऽपि भावनेयमाध्यात्मिकी प्राबल्येन दृष्टिपथमायाति । शिक्षायाः फलम्—आत्मज्ञान-प्राप्तिः, मोक्षप्राप्तिर्वा । 'सा विद्या या विमुक्तये, आत्मानं विजानीहि' एवमृषिप्रोक्तानि वाक्यान्यत्र प्रमाणम् । आत्मज्ञानं लक्ष्यीकृत्य तत्सिद्धये साधनान्येवमुपनिषत्सु प्रतिपादितानि —

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो,
यं पश्यन्ति यतयः वीतशोकाः ॥

एवं प्राचीनाः किल भारतीया विद्यार्जनविधेः सत्यं तपः सम्यग्ज्ञानं चेत्येवमादीन्याधारस्तम्भानीव मन्यन्ते स्म । सर्वमेतत् किञ्चिद् विविच्य सत्यस्वरूपं निभालयामो वयम् । संकीर्णपक्षपातानां मूलतया परित्यागः सर्वदेशकालोपयोगिनां चिरन्तन-सिद्धान्तानाञ्चान्वेषणम् । एवम्भूतदृष्टेरुपयोगितां ज्ञानार्जनस्य ज्ञानान्वेषणस्य वा क्षेत्रे सर्वे स्वीकुर्वन्त्येव । एतादृशीं भावनामपहाय न किञ्चिदप्याध्यात्मिकं विवेचनं भवितुमर्हति नाप्यंशतो वैज्ञानिकमन्वेषणम् ।

तपसः खलु भूयान् महिमा श्रूयते शास्त्रेषु । पातञ्जलदर्शने योगाङ्गेषु नियमान्तर्गतं तपो मुख्यत्वेन गणितं दृश्यते । गीतायाञ्च शारीरवाचिक-मानसभेदेन तप इत्थं विवृतमस्ति—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥

यथाभूतज्ञानार्जनाय छात्रेष्वेतेषां गुणानां विकासोऽतितरामावश्यकः स्वयं सिद्धः । पर-मिदमत्र विशेषतोऽवधेयम्-प्राचीनाः शिक्षाविचक्षणाः न केवल बाह्यां दैहिकीं साधनां तपोरूपेण विभावयन्ति स्म, अपितु मानसिकीमाध्यात्मिकीं वान्तर्गतसाधनां सविशेष तपोरूपेण गणयन्ति स्म । तथापि दैहिकविकासो न कथञ्चिदुपेक्षितस्तैः । अत एव शिक्षादानकाले ब्रह्मचर्यव्रतपालनमावश्यककर्त्तव्यत्वेन तेऽङ्गीचक्रुः ।

वस्तुतो ब्रह्मचर्यव्रतमाधारीकृत्य येयं प्राचीनैर्भारतीयैः संस्थापिता शिक्षाप्रणाली, तस्याः खल्वियं महती विशेषता । आधुनिकाः शिक्षाविदोऽपि चरित्र-निर्माणं शिक्षाया ध्येयत्वेनाङ्गीकुर्वते, परं तत्रायं महान् प्रश्नः—यदेतस्य ध्येयस्य लब्धिः केन विधिना स्यात् ? क्रियात्मकतयाऽस्य प्रश्नस्य समाधाने आधुनिकाः शिक्षाविदः किंकर्त्तव्यविमूढा एव लक्ष्यन्ते । परं प्राचीनैः शिक्षाविद्भिः प्रश्नोऽयं ब्रह्मचर्यप्रणालीं शिक्षापद्धतेराधारस्तम्भमङ्गीकृत्य सक्रियतया सम्यक् समाहितः । न तैः संकीर्णे कस्मिंश्चिदर्थे ब्रह्मचर्यपदं प्रायुञ्जि, येन केवलं वीर्यरक्षैव तेषामनेनाभिमतामन्येत, अपि त्वेका तपोमयी जीवनपद्धतिरेव ब्रह्मचर्यपदेन व्यवह्रियते स्म तदानीम्, यद्बलेन विद्यार्थिषु दैहिकमानसिक बौद्धिकाध्यात्मिकादिविकासोद्भावनं यथाकालं सहैवानायासपूर्वकं शक्येत कर्त्तुम् । शिक्षाप्रणाली चेयं याथार्थ्येन छात्राणां चतुरस्र व्यक्तित्वविकासे निर्बाधं सक्षमा भवेत् । छात्रावस्थायां ये संस्काराः परिपक्वतां यान्ति, ते यावज्जीवं स्थैर्यमाप्नुवन्ति, न शताधिकाभिरपि बाधाभिरदृश्यतां प्रयान्ति । वस्तुतश्छात्राणां पुरतो ब्रह्मचर्यपद्धतिमाश्रित्य शिक्षायाः संयमपूर्णो ज्ञानमयश्च योऽयं जीवनादर्शः संस्थाप्यते, यथाविध्यनुष्ठाप्यते च तैः; सोऽयं यावज्जीवं तेषां सुपथप्रदर्शको भवतीति नात्र संदेहलेशोऽपि ।

आधुनिकशिक्षापद्धतिमाश्रित्य समधीयानेषु छात्रेष्वेते गुणा नांशतोऽपि समुपलभ्यन्ते, सत्यतपः प्रभृतिगुणानां तत्र विकासः स्यादिति नापेक्षत एव वर्त्तमाना शिक्षारीतिः । छात्राणां कृते ये हि दोषाः समुद्भाविता नीतिधर्मशास्त्रेषु, तेषां वैपुल्यमधुना छात्रेषु शक्यते सुनिर्भरमवलोकयितुम् । तथाहि— 'आलस्यं मदमोहौ च चापल्यं गोष्ठिरेव च । स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च, एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।' इति महाभारते विदुरप्रजागरपर्वणि विद्याविरोधिनः केचन छात्रेषु सम्भाव्यमाना दोषाः खल्वालस्यादयः समुपवर्णिताः । अधुनातनशिक्षाशैलीमनुसरत्सु छात्रेषु सत्यब्रह्मचर्यादि गुणस्थाने दोषाणामालस्यादीनामेव प्राचुर्यं दृश्यते, नात्र मूलतश्छात्रा अपराधिनः, अपितु वर्त्तमानशिक्षापद्धतेरेवायमपराध, यत्र छात्राणां नैतिकाचरणे न किञ्चिदप्यवधानं प्रदीयते, सत्यब्रह्मचर्यादिव्रतपालनं तत्र विषपानमिव मन्यते; धर्माचरणं निरर्थकमजागलस्तनमिव; गुरुशुश्रूषणं स्वातन्त्र्यविघातः; निरन्तराध्ययनप्रवृत्तिः कालयापनमात्रम्; व्यर्थसंघर्षजनकगोष्ठीसन्धानं नेतृगुणोद्भावनम्, अध्ययनाध्यापने विघ्नोत्पादनं स्वातन्त्र्यप्रियता, एवं हि सर्वथाऽपि सुपथप्रभृष्टश्छात्रसमुदायः साम्प्रतं प्रचलितशिक्षापद्धतिमाश्रितः कथमिवानुशासनहीनतां न भजेत ? मुधैव छात्रेष्वयं दोष आरोप्यते, किं कुर्युर्वराकाश्छात्राः शिक्षारीतिरेव यदा तेषामेवंभूता वर्त्तते ।

## शिक्षाया अनिवार्यता

प्राचीन भारते शिक्षा सर्वेषां कृतेऽनिवार्या किलासीत् । पञ्चवर्षायुष आरभ्य आदशवर्षायुषं सर्वे बालका यथाविध्युपनीय गुरुकुले प्रेषणीया इति तदानीं शासकीयनियमः प्रावर्त्तत । उपनयनं हि शिक्षाग्रहणाधिकारः । नियते वयसि सर्वेषां बालानामुपनयनम्, तदनन्तरञ्च शिक्षादानाय गुरुकुले गमनम्; इति विधेरनिवार्यत्वात् सर्वेषां कृते शिक्षाग्रहणमावश्यकमासीदिति सुस्फुटं विज्ञायते । ये खल्वध्ययनमुपेक्षन्ते स्म, अशिक्षिता एव सन्तस्ते समाजे निम्नकोटिगताः शूद्रपदभाजो मन्यन्ते स्म । शिक्षाक्षेत्रस्य तदानीमतिविस्तृतत्वात् परिमितस्य छात्रजीवनस्य कानिचिदेव वर्षाणि तादृशज्ञानप्राप्तये सर्वथाप्यपर्याप्तानीति मत्वा कतिपये विद्वांसः स्वीयं समस्तमपि जीवनं ज्ञानसंचये तद्वितरणे च संयोजयन्ति स्म । एवम्भूतस्य शिक्षकसमुदायस्य सर्वस्मिन्नपि देशे यथास्थानं विस्तृतानि शिक्षाकेन्द्राण्यासन्; यत्र ब्रह्मचर्यादिव्रतपालनपराश्छात्राः प्रतिक्षणं गुरुसान्निध्यं भजमानाः स्वैरं विविधविद्यास्थानान्यभ्यसन्तो निवसन्ति स्म । कण्वभारद्वाजादीनां शिक्षाकेन्द्रेषु प्रत्येकं दशसहस्रसंख्यापरिमितानां छात्राणां कृते शिक्षाप्रबन्धस्तन्निवासप्रबन्धश्चासीदिति पुरावृत्तेषु वर्ण्यते ।

## विद्यासु विविधाः शाखाः

आधुनिकाः केचन खल्वेवं मन्यन्ते, यत्तदानीं केवलं धार्मिकशिक्षाया एव प्रसार आसीत् । नान्ये व्यावहारिका विषया अध्याप्यन्ते स्म । परमेतत् कथनं सर्वथापि निराधारमेव । उपनिषत्सु भूयसीनां विद्यानामध्ययनं श्रूयते । छान्दोग्ये सप्तमाध्यायोपक्रम एव नारदः सनत्कुमारमाचार्यमुपेत्य तेनाधीतविद्याविषये पृष्ट उवाच—ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यं एकायनं देवविद्यां, ब्रह्मविद्यां, भूतविद्यां, क्षत्रविद्यां, नक्षत्रविद्यां सर्पदेवजनविद्यां सर्वमेतद् भगवन्नधीतवानस्मि । अनेन ज्ञायते–तस्मिन् काले बहूनां

विद्यानामध्ययने छात्राणां प्रवृत्तिरासीत् । सर्वासां च विद्यानामध्ययनप्रबन्धस्तेष्वेव गुरुकुलेषु संजायते स्म । अनन्तरकाले नालन्दतक्षशिलादिविश्वविद्यालयानामनेकेषां विवरणमितिवृत्तेषु दृश्यते । नालन्दविश्वविद्यालये विशालः पुस्तकालय आसीत् । तत्र विविधविषयाणां परः सहस्त्रपुस्तकानामनुपमः संग्रह आसीदिति पुरावृत्तविदो वदन्ति । पुस्तकालयभवनं नवखण्डमण्डितं विविधविषयैः हस्तलिखितपुस्तकैः परिपूर्णमासीदिति श्रूयते । तेषु चतुःशताधिकपुस्तकानां चीनीभाषायां प्रतिलिपिः पान्थेन इत्सिगनाम्ना कारिता, इति तद्यात्रावर्णनेन ज्ञायते ।

नालन्द–विश्वविद्यालयकीर्त्तिप्रसारकेष्वनेकेषु विद्वत्सु मध्ये–आर्यदेव–शीलभद्र–धर्मपाल-पद्मसम्भव–कमलशील–स्थिरमति–बुद्धकीर्त्ति प्रभृतयो विविधविद्यापारदृश्वानो विशेषप्रसिद्धाः समजायन्त । इतः प्रायो द्विसहस्त्रवर्षपूर्वं चीनदेशं गत्वा बौद्धधर्मप्रचारकेषु नालन्दाधीतविद्वत्सु कुमारजीवस्य गुणवर्मणश्च नाम विशेषेणोल्लेख्यमस्ति । अनयोः कुमारजीवः शास्त्राण्यन्यान्यतिरिच्य आयुर्वेदशास्त्रेऽपि परं प्रावीण्यमाप्तवानिति तदुपज्ञायुर्वेदग्रन्थेभ्यः प्रतीयते । तदानीमल्पीयस्येव काले चीन–जापान–कोरिया—तिब्बत– प्रभृतिभ्यो देशेभ्यः परः—शताश्छात्रा नालन्दविश्वविद्यालये विविधविद्याग्रहणाय समागच्छन्निति इत्सिगयात्रावर्णनेन विज्ञायते । अत्रत्यास्तात्कालिका विश्वविद्यालयाः सर्वथाप्यन्ताराष्ट्रिय विश्वविद्यालयख्यातिमलभन्त इति सुस्पष्टमनेन प्रतीमः ।

एवमेव यथाकालं बलभीतक्षशिलाविक्रमशिलाजगद्दलाप्रभृतिनामभिः प्रसिद्धा अनेके विश्वविद्यालयाः प्रसृतेऽस्मिन् देशे विविधविद्याप्रशिक्षणरक्षणनिरता आसन्निति को न जानाति । एषु सर्वत्र विद्याकेन्द्रेषु ब्रह्मचर्यविधिमुपजीव्य स्वाश्रमनियमानुष्ठानप्रतिष्ठितः शिक्षाक्रम एवानुमतः प्रवर्त्तमान आसीदिति निश्चप्रचम् । अयमेव क्रमः शिक्षाविधौ सर्वाभ्युदयाय साधीयानिति विदाङ्कुर्वन्तु सुधियः । नान्यः पन्थाः समुदेति साध्यः ।

## प्राचीनभारते स्त्रीशिक्षा

आधुनिकाः केचन खल्वेवं प्रलपमानाः समाकर्ण्यन्ते, प्राचीनकाले नासीद् भारते बालिकानां कृते कश्चिदध्ययनप्रबन्ध इति । यद्यप्येतत् संभाव्यते, न स्युर्नाम तादृशशिक्षाकेन्द्रस्थानानि बहिर्नगरेभ्य आरण्यकानि बालिकानां कृते, यथा बालकेभ्यःशिक्षाग्रहणाय आसन्; परं बालिकानां कृते निजवसतिसविध एव परिपूर्णः शिक्षाप्रबन्ध आसीदित्यत्र नास्ति सन्देहलवोऽपि । अधीतविद्या एव बह्व्यो ब्रह्मवादिन्यो वेदानामृषिकाः समजायन्त । तत्र लोपामुद्रा-अपाला–कद्रू–विश्ववारा–रोमशा–घोषा–पौलोमी श्रद्धा–कामायनी–उर्वशी–यमीप्रभृतिविदुषीणां नामानि मूर्द्धन्यपदे सादरं स्मर्यन्ते । एवं बालानां बालिकानां च कृते तदानीं समान इव शिक्षाप्रबन्ध आसीदिति प्रमाणीभवति ।

# शिक्षायां सदाचारस्य प्रतिष्ठा

लेखक विद्याभूषणः श्री गणेशराम शर्मा, झालावाडस्थः

तदिदमस्माकं देशस्य, सभ्यतायाः, संस्कृतेः, समाजस्य, सर्वसाधारणानां प्रजाजनानां च दुर्भाग्य-विजृम्भितं, यदत्र राष्ट्रे शिक्षा तावद्राज्यतन्त्राधीनं चेष्टत इति । प्रोन्नतेषु सुविकसितेषु च देशेषु शिक्षणं तैस्तैः शिक्षासङ्घटनैः स्वायत्तं स्वतन्त्रतया प्रदीयते प्रजाजनेभ्यः । न हि तत्र शिक्षायां सर्व-कारस्य राज्यप्रशासनस्य वा सत्तामदमत्तोऽस्ति कोऽपि हस्तक्षेपविशेषः । ततस्ते ते देशास्तानि तानि च राष्ट्राणि शिक्षाविशेषे सर्वतन्त्रस्वतन्त्रं शिक्षावि-काशं साधयन्ति जीवने मोमुद्यन्ते च । तत्र प्राथ-मिकीं शिक्षाव्यवस्थां नगरपालिकाः कुर्वन्ति, माध्य-मिकी शिक्षा शिक्षापटलैस्तथा विश्व-विद्यालयानां शिक्षा तत्तत्तन्त्राधीनमेव प्रदीयते । तत्र स्वतन्त्राणि शिक्षासङ्घटनानि स्वोद्देश्यानुसारं स्वकीययोजना-पूर्वकं सर्वविधां शिक्षा-व्यवस्थां सम्पादयन्ति । यद्यपि तेषु देशेषु शासनतन्त्राणि शिक्षार्थं धनानुदानम-वश्यमेव प्रयच्छन्ति तथापि शिक्षाविभागानामान्त-रिके प्रशासनेऽनुशासने च नांशतोऽपि हस्तक्षेपं कुर्वन्ति । यतस्तत्रत्या जनाः सत्यमेव सुशिक्षिता सन्ति ततस्ते स्वात्मनो बालकेभ्यः कन्याकुमारेभ्यो नवयुवकेभ्यश्च शिक्षाप्रदानं नाम स्वस्य मानवोचितं व्यक्तिगतं, सामाजिकं, राष्ट्रियं च कर्तव्यमवश्यकर्त-व्यताकं मन्यन्ते । तस्मादेव तेषां शिक्षा निर्बाधमुत्त-रोत्तरं निरन्तरं च विकाशमञ्चन्ती साफल्यं वृणुते । तत्रत्येषु जनेषु राष्ट्रभक्तिः, सामाजिकी चेतना, स्वदेशाभिमानः, कर्तव्यपरायणता, स्वात्मगौरवमनु-शासनमित्याद्या गुणाः शिक्षा-समय एव वाञ्छनीयां प्रगतिमासादयन्ति ।

अस्माकं देशेऽत्र भारते या हि शिक्षापद्धतिश्चि-रात् प्रचलन्तीदानीमपि वर्तमानास्ते, तस्याः प्रवर्त-कानां मूलोद्देश्य भिन्नमासीत् । काममन्याभावे सैषा गौराङ्गशासकैर्मेकालेप्रभृतिभिः प्रवर्तिता शिक्षा-प्रणाली कियदपि प्ररोचनी भवतु, काम-मनया शिक्षापद्धत्या प्रशिक्षिता अनेके भारतीया बन्धवो राष्ट्रभक्तिभावापन्ना देशभक्ता विद्वांसः साहित्यसेवकाः कलाकाराः क्रान्तिकारिणोऽद्भुत-प्रतिभासम्पन्ना निष्पन्नाः स्युर्ये देशे विदेशेषु च तथा-विधां शिक्षामाप्य कामप्यभिनवामन्ताराष्ट्रियां शिक्षाचेतनामुपलभ्य स्वदेशमिमं भारतं स्वतन्त्रं कर्तुं प्राणपणं प्रयतिरेऽन्ततश्च स्वराज्यं लेभिरे । परन्त्वेतादृशानां संख्याङ्गुलिपर्वगण्या स्वल्पैव । नात्र देशे दशपञ्चप्रमाणास्तिलकगान्धिसुभाषजवाहरा-दयो महामानवा महात्मानस्तथा चन्द्रशेखरराजाद-भगतसिंहरामप्रसादबिस्मिलसदृशाः क्रान्तिकारिणो वा तया शिक्षया निष्पेदिरे । तया शिक्षया सम्पा-दितस्वात्मविकाशा विरलविरला एव केचन महा-प्राणाः समसिद्ध्यन्त । देशस्य जनसंख्यानुपातदृशा तथाविधानां मान्यानां शिक्षितानां संख्यातीवाल्पी-यसी । स समयो व्यतीयाय यदासावांग्लैः प्रतिष्ठिता शिक्षापद्धति स्वल्पाल्पमपि भारतीयानामस्माकमुप-कारं विधातुं सक्षमा बभूव ।

अथैकां शताब्दीमखिलां यावद्देशस्यास्य स्वा-तन्त्र्ययुद्धे नियुद्धचतां सचेतसां भारतीयानां नेतृ-वरिष्ठानां शिक्षाशास्त्रिणां समाजशास्त्रिणां चाय-मनुभवोऽव्यभिचारी यद्धि सैषा स्वराज्यप्राप्तेः पूर्वम् प्रचलन्ती शिक्षापद्धतिरस्माकं राष्ट्रस्य प्रजाजनानां गुणकर्मशीलस्वभावानुकूला, देशकालोपयोगिनी च वर्तत इति । कैश्चन महापुरुषैर्विदितवेदितव्यैस्त्वेता-वदपि सडिण्डिमघोषमाघोषितं यत् सैषा पूर्ववर्तिनी शिक्षाप्रणाली सर्वथा दोषदुष्टा व्ययबहुला सदाचार-

चारित्र्यगुणघातिनी हानि-प्रदा चेति । तदेतत् सर्वं वयमिदमित्थं जानीमहे ततोऽस्या वर्तमानायाः शिक्षापद्धत्या दोषोद्घाटने समधिक किमपि वक्तव्यं पिष्टपेषणं वृथाम्रेडनमात्रमेव स्यात् । संक्षेपतो विषयेऽत्र प्रसङ्गोपात्तमेतावत्कथनमात्रमेव पर्याप्तं स्याद्यद्धि सैव जीर्णा-शीर्णा गुणविहीना शिक्षा-प्रणाली वर्तमानास्ते यां सर्वेऽपि त्याज्यां गर्हणीयामपाकरणीयामाहुः ।

यद्यपि स्वराज्योत्तरमत्रास्माकं देशे शिक्षायाः प्रसृतयेऽधिकारिभिर्नानोपायाः स्वीकृताः परन्तु तत्र मूलभूता शिक्षापद्धतिस्तु सैव विद्यमानास्ते । परिणामतोऽधुना शिक्षाप्रसारस्तु महताडम्बरेणोपक्रान्तः परन्तु तत्फलं लाभापेक्षयात्यन्तमल्पाल्पमेव प्राप्यते । ततोऽस्या गौराङ्गैः प्रवर्तिताया पुरातन्याः शिक्षा-प्रणाल्याः परिवर्तनं तत्स्थाने देशकालानुरूपिण्या नव्यायाश्च प्रतिष्ठापनं सुतरामावश्यकमनुभूयते सर्वैः । प्राप्तकालं पत्रपत्रिकासु, सार्वजनीनसंस्था-सम्मेलनाधिवेशनेषु, संस्थासु, प्रतिष्ठानेषु, शिक्षा-विभागेषु च नेतृप्रवराणां शिक्षाविदां विपश्चितां भाषणप्रवचनेषु चैवंविधा विचाराः प्रायेण प्रकटीभवन्ति यान् वयं सर्वे जानीमहे ।

सत्यप्येवं नवयोजनापुरस्सर नवीनायाः शिक्षा-प्रणाल्याः सूत्रपातं कृत्वा, विकृताया देशकालापेक्षया-नुपयोगिन्याः प्राचीनायाः क्रमशो वामूलचूलं परि-वर्तनमद्यावधि सुकरं न बभूवेति महान् हि चिन्ता-विषयः । यद्यपि वर्धाशिक्षायोजना, माध्यमिकशिक्षा-योजना तथान्यान्याश्चापि शिक्षायोजनाः काश्चन देशेऽत्र प्रवर्तिताः प्रायोगिकीं स्थितिमनुक्रियारूपे व्यवह्रियन्ते, तथापि ताः सर्वा योजना नव्या यावद-भीष्टं सत्फलं शिक्षालाभरूपं जनजीवने नावर्जयन्त्येवं तद्विदो वदन्ति ।

अथ शिक्षायाः प्रयोजनेषु राष्ट्रप्रजानामक्षरा-रम्भात्प्रोच्चशिक्षापर्यन्तमध्ययनतत्पराणां ज्ञानवि-ज्ञानोपलब्धिमस्तिष्कमानसयोर्विकाशः, सभ्यता-संस्कृत्योः प्रसारो, राष्ट्रभक्तिः, स्वदेशाभिमानः, साहित्यकलानामभिवृद्धिश्चारित्र्यशुद्धिर्दयादाक्षिण्य-शीलसौजन्यादीनामुदात्तगुणानां प्रतिष्ठा, जीविका-र्जने, जीवनयापने च सुविधेत्यादीनि प्रमुखानि गण्यन्ते बुधैः । परं देशेऽत्र स्वराज्यात् प्राक् प्रचल-न्त्या भिन्नाभिसन्धिनैव भिन्नेनैव दृष्टिकोणेन संस्था-प्य प्रचालितया जराजीर्णया स्थित्यन्तराणामाघातै-श्छिन्नभिन्नया तया शिक्षा-प्रणाल्या प्रोक्तानि प्रयो-जनानि न सिद्ध्यन्ति, नैवसिद्ध्यन्ति न च सेत्स्य-न्तीति सर्वसम्मतम् । न केवलमेतावदेवापितु केषां-चिन्मते तु प्राचीनशिक्षाविद्याध्ययननाद्भारतीयजन-तासु शुभगुणानां वृद्धेरपेक्षया दोषा एव केवलं वृद्धिं गच्छन्तोऽवलोक्यन्त इति । ततो देशस्य शुभ-चिन्तकैः सुस्पष्टं स्वमतं निर्भ्रान्तमिदमित्थं प्रकटितं यद्धि काचन नव्या फलदायिनी शिक्षा-पद्धतिः प्रचलितुमर्हति नाम नूनमिति ।

अथ सर्वेऽपि विचक्षणा विचारशीलाः सभ्याः सज्जनाः स्वीकुर्वन्ति यदांग्लैः स्वाभिप्रायसिद्धिहेतोः प्रवर्तिताया भारतीयायाः शिक्षाप्रणाल्या न कोऽपि लाभः सम्भवतीति । सांख्यिकीं गणनामनुसन्धाय तैरेतैः सप्रमाणं प्रतिपादितं यत् सैषा चिरादत्र प्रचलन्ती शिक्षाऽधीतिनां बुद्धिविकाशं, मनोविकाश, ज्ञान-विज्ञानविकाशं, कलाराधनं, साहित्यसेवा-प्रवणत्वम्, समाजमर्यादारक्षणमनुशासनपालनं, राष्ट्रियतामादर्शचारित्र्यमुद्योगतत्परतां स्वावलम्बनं, स्वात्मनिर्भरत्वं, सहयोगं, सहकारभावनामुत्साहं धीरतां शालीनतां तथैवंविधान् मानवोचितान् गुण-गणांस्तांस्तान् विद्यार्थिषु प्रतिष्ठापयितुं न सक्ष-मेति । कैश्चिच्छिक्षाशास्त्रिभिस्तु सगलास्फालमूर्ध्व-बाहु भूयो-भूयो घोषितं यदेषा गौराङ्गैः पुरस्कृता

शिक्षापद्धतिः सर्वथैवानुपयुक्ता नः। यतोऽनया शिक्षा-प्रणाल्या शिक्षिता उपाधिगृहीतारो जनाः प्रायेण पौर्वात्यं पाश्चिमात्यं वा तत्त्वज्ञानं साधिकारं न विदन्तोऽपि सर्वज्ञतामात्मनः साटोपं वैदुष्य च सम्भावयन्ति । अन्धेन नीयमाना अन्धा इव देशवासिनोऽविद्यान्धकारगर्ते निमज्जन्तो नात्मानमुद्धर्तुं पारयन्ते। मनुष्यतैव न भवत्येवंविधेषु शिक्षितम्मन्येषु जनेषु । इत्थंविधास्तथा कथिताः शिक्षिताः शिक्षितामाप्तावा जना विदेशीयां विद्यां स्वदेशीयां वा प्रतिपत्तिं तत्त्वतो नैव परिचिन्वन्ति। फलतस्ते स्वजीवनोद्देश्यम् मानवोचितं कर्तव्यजातञ्च निश्चेतुं न प्रभवन्ति । परिणामे ते प्रायेण नास्तिकाः शुभसंस्कारविरहिता मन्दमतयो विलासस्पृहा भरणपोषणेऽपि परमुखापेक्षिणो दासत्वभावापन्ना हीनताग्रन्थियुक्ता दीना भोगैकपरायणा दुश्चरित्रा वञ्चका लोभोपहतचेतसो दम्भमात्राडम्बराः किङ्कर्तव्यविमूढा यत्किञ्चनवादिनो कलहकषायमानसा व्यर्थसङ्घर्षधुरन्धराः परिणामादर्शिन उच्छृङ्खलाः परावलम्बिनश्चाटुकारा मिथ्याचारा दुष्टा दूषितचरिता एव निष्पद्यन्त इत्यपि च सर्वे भुक्तभोगा अनुभवशालिनो विशेषज्ञाः शिक्षाचार्याः सामान्या जनाश्चापि स्वीकुर्वन्त्येव ।

अथास्यां विषमायां स्थितौ वर्तमानां शिक्षापद्धतिमपाकृत्य तत्स्थाने स्वदेशकालोपयोगिनी काचिन्नव्या शिक्षा-प्रणाली प्रतिष्ठाप्येति सर्वेषामेव विधिविधानाभिज्ञानां विज्ञानामत्रैकमत्यम् । सत्यप्येवं नात्र लेखे कापि नव्या शिक्षा-योजना प्रस्तूयते, यतो न वयं तद्विदोऽधिकारिणश्च; परमत्रेदमेव संक्षेपान्निवेद्यते यद्धि भारतीयाः शिक्षातरणीकर्णधारा यां काममप्यभीष्टां शिक्षापद्धतिमनुतिष्ठन्तु प्रवर्तयन्तु च परन्तु तत्र नानाप्रकरणैः साकं तदिदमवश्यमेव चिन्तयन्तु यदस्माकं देशोऽयं भारतवर्षो जगति जगद्गुरुर्विख्यायते, परम्पराश्चास्माकमतीव स्वस्था विराजन्ते, चरितानि चास्माकं देशवासिनामत्यन्तमुज्ज्वलानि विद्यन्ते। तदेतत् सर्वं सदाचारमाहात्म्यादेव वर्तत इत्यविस्मृत्य शिक्षायां सदाचारस्य प्रतिष्ठावश्यकर्तव्यताबुद्धया विधातुं युज्यत इति ।

कामं कीदृशी चापि भवतु शिक्षा-प्रणाली परं तस्यां सदाचारो मूलस्तम्भो मूलाधारशिला खलु मानवजीवनभवनस्य भवितुमर्हति नाम नूनम् । विद्याया, ज्ञानस्य, विज्ञानस्य, साहित्यस्य, कलानामधीतस्यानुभवस्य च सारांशः सदाचार एव । सदाचाररहिता शिक्षा नैव शिक्षा वरञ्च सा शिक्षाया विडम्बनैव । यया शिक्षया कायस्वास्थ्यं, मनः स्वास्थ्यं, बुद्धेः स्वास्थ्यं च निर्विकारं भवेद्यया चारित्र्यस्य क्रमविकाशः स्याद्यया गुणानामुत्कर्षः संसिद्धयेद्यया सभाजमर्यादाक्षुण्णा सन्तिष्ठेत, यया पौरुषं पुरुषार्थप्रवृत्तयश्च देदीप्येरन्, यया जीवनसाफल्यं विन्देत शिक्षार्थी जनो, यया देशस्याध्यात्मिकी दैवीसम्पद्वृद्धिं गच्छेद्यया च मानवो मानवसुलभान्न्याय्यान् भूरिभोगान् भौतिकानुपभुज्यान्ते विकाशसरण्या महामानवत्वं देवत्वं चान्ते संस्पृशेत्तथाविधैव शिक्षोपादेया भवितुमर्हति नान्येति चिन्तयतामस्माकमयमेव निश्चयो भवति यद्वर्तमानायाः शिक्षाया मुख्यो दोषस्तावत्सदाचारहीनतैवास्ते । ततो विनिवेद्यते यच्छिक्षायां सदाचारस्य प्रतिष्ठा क्रियतामिति ।

अथास्माकं त्वयमपि चास्तेऽभिप्रायो यद्धि दुराचारिणः शिक्षितान्निरक्षरभट्टाच्च योऽपि सदाचारो वरेण्यः श्रद्धेयश्च भवतीति । अद्यत्वे राष्ट्रे सर्वतो भ्रष्टाचाराश्चारित्र्यस्खलनानि, सुरापित्वं, द्यूतक्रीडाव्यसनं, वर्गयुद्धमकर्मण्यता व्यवस्थाक्षतिर्व्यसनपरायणत्वं, विलासिता, भोगवादिता, मृषावादा, धूर्तत्वं, दाम्भिकत्वमित्यादयो दोषा ये ये जरीजृम्भन्ते ते सर्वे तथाकथितैः शिक्षितैरेव समाजविरोधि-

भिस्तत्त्वैरुत्थापिता वर्तन्ते । अस्य सर्वानर्थस्य निदानमेकमात्रं सदाचारहीनत्वमेव । ततः शिक्षायां सदाचारस्य प्रतिष्ठा प्रथमः कल्पः ।

शिक्षायां सदाचारस्य प्रतिष्ठायां जातायां देशस्य प्रजाजनानां नैतिकस्तरोऽभ्युन्नतिं स्पृशेत् । सच्चरित्रस्योत्कर्षे साधितेऽन्यत् सर्वं स्वतएवायत्न-सुलभं संसिद्ध्येत् । यदा शांता दान्ताः शील-सौजन्यसम्पन्ना लोका एव शिक्षिता गुणानुरोधात् परिगण्येरंस्तदैव मानवतायाः पोषका गुणा विकाशे-रन् । न केवलं विश्वविद्यालयेषु विद्यालयेषु शालासु चाधीयाना राष्ट्रस्यास्य बालक-बालिका एव सदाचारपरीक्षाः समुत्तीर्य ततः कर्मक्षेत्रमवतरे-युर्वरञ्च नेतारोऽधिकारिणः कार्यकर्तारोऽनुयायिनश्च सर्वेऽपि च सदाचारचारित्र्यशुद्धिपरीक्षानिकषे सुपरी-क्षिताः स्वे स्वे कर्मणि नियुक्ता भवितुमर्हन्ति ।

अथ राष्ट्रस्य सार्वजनीने शिक्षाक्षेत्रे सदाचारस्य प्रतिष्ठासिद्धान्ते स्वीकृतेऽप्युग्रो बुद्धि-वादस्तावद्विवर्जनीयः स्यात् । बुद्धिप्रौढोऽपि जनो दुराचारश्चेत्तदासोऽपकौशलात् सदाचारं बाधत एव । अद्यत्वे वयमेतत् प्रत्यक्षमेव हि पश्यामोऽनु-भवामश्च यदत्र देशेऽनेके जना अन्यान् सुधारयितुं चेष्टमानाः संस्थामुखं सङ्घबद्धं च कर्णकटुकोलाहलं कुर्वाणाः सन्ति । प्रायः सर्वेऽपि परोपदेशे पाण्डित्य-मपक्षपयन्तो विलोक्यन्ते । न कोऽपि स्वात्मचरित-मुन्नेतुं प्रयत्न-तत्परो भवति । बुद्धेरपकौशलाद्दुरा-चारा जना एव नाना समस्या उत्पादयन्तस्तत्समा-धाने स्वनेतृत्वं कामयाना व्यक्तिपूजामाश्रयन्ते । ततः सुकुमारमतीनां बालानामध्ययनक्रमे बुद्धि-वादस्य तीक्ष्णमस्त्रं तावन्न दातव्यं स्याद्यावद्भाव-भूमिपरिष्कारः सर्वादौ न सम्पद्येत । बालानां भावनाशुद्धिसंस्कारार्पणायानिवार्यत्वेन नैतिकी धार्मिकी व्यावहारिकी चारित्र्यविधायिनी सदाचारस्य शिक्षैवादौ प्रदेया स्यात् । एवं सति शासने, प्रशासने, समाजसेवासु, शिक्षायां च विद्यालयशिक्षोपाधिमण्डि-तानां जनानामपेक्षयाल्पशिक्षिताः सन्तोऽपि च निष्ठावन्तः सदाचारा विश्वासभूमयो जना एव प्राथम्येन गृहीतव्या भवेयुः । ये हि मानवा धैर्यं, शांतिं, सहिष्णुतां, क्षमां, दयां, संतोषं, शीलं, सौ-जन्यं, संकोचं तथा तथाविधान् सच्चरित्रपोषकान् गुणान्नात्मनि बिभ्रति ते कथमिव राष्ट्रस्य देशवा-सिनां च लोकानाम् जीवनमुन्नतिं नेतुं सक्षमा निष्पद्येरन् ।

सदाचारस्य शिक्षार्थं शिक्षाविशेषज्ञैस्तादृशः कोऽपि नव्यः पाठ्यक्रमो विधातव्यो यदन्तः प्रार्थनाः, सूक्तयो, नीतिवाक्यानि, नैतिकोत्थानविधायकानि संगीतप्रधानानि कीर्तनानि, हासपरिहासपेशला मनोविनोदकारका गद्यपद्यप्रबन्धाश्च रोचकाः संगृह्येरंस्तथा ते सर्वत्र शालासु विद्यालयेषु चा-निवार्यविषयत्वेन पाठ्याः स्युः । एवं कृते, किला-शास्यते यद्देशेऽत्र मुखं व्यादायोत्थिता देशस्य नव-निर्माणे विघ्नबाधाजनन्यः सर्वाः समस्याः स्वयमेव समाधानं गमिष्यन्तीति दिङ्मात्रं निवेद्य विरम्यते विस्तरादिति ।



# वैदिकी शिक्षा

( दर्शनाचार्यः श्री जगदीशचन्द्रः शास्त्री यमुनानगरम् )

चतुर्ष्वपि वेदेषु भगवता परमेश्वरेण मानवेभ्यः परमोत्तमाः परमकल्याणकारिण्यश्च शिक्षाः समादिष्टाः। प्राचीने काले यदा ताः समाचरिताः धारिताश्चासन् तदा तत्कालीनानां मानवानां सर्वथा समुन्नतिरपि समवर्ततेति सम्यक् वर्णयन्ति पुरातत्वविद ऐतिहासिकाः। ताः वैदिक्यः शिक्षाः सर्वैरस्माभिरपि धारिताः स्युश्चेत्, तदास्माकमपि कल्याणं भवेत्, भवेच्च सर्वांगीणा समुन्नतिरपि।

वेदेषु काः काः ताः शिक्षाः वर्तन्ते या सर्वैः स्वीकरणीयाः धारणीयाश्चेति जिज्ञासायां किंचिन्निवेद्यते निदर्शनपूर्वकम्:--

## (१)

## आस्तिक्यम्

अस्य विचित्रचित्रचित्रितस्य संसृतिचक्रस्य समस्तसंसारस्य--अस्ति कश्चित् विपश्चिदग्रणी शिल्पकलाकारः संचालकः व्यवस्थापकश्च परमेश्वरः स चावश्यं स्वीकर्तव्यः सम्यगाराधितव्यश्चेति। तस्य मैत्रीसम्पादनाय वेदेष्वनेकाः मन्त्राः प्रेरयन्तो वर्तन्ते। यथाहि--

विश्वो जनस्य नेतुः मर्तो वुरीत सख्यम्।
विश्वो राय इषुध्यति द्युम्नं वुरीत पुष्यसे।,

ऋ. ५।५०।१

विश्वो मर्तः जनस्य नेतुः सख्यं वुरीत--विश्वस्य प्रत्येकस्य मर्त्यस्य मनुष्यस्य मुख्यं कर्तव्यं मन्त्रः समादिशति। जननशीलस्य प्राणिनः कश्चित् कर्मफलप्रदाता नेता अस्ति। स च नैव मरणधर्मा न च जननधर्मा किन्त्वजन्मा अमरधर्मा नित्यो निर्विकारोऽविनाशी विद्यते। तस्य परमेश्वरस्य सख्यं मैत्रीं वुरीत प्राप्नुवन्तु--सर्वे मनुष्याः परमेश्वरस्य मैत्रीं सम्पादयन्तु--इत्यर्थः।

श्रुतोपनिषत्काः श्रोत्रियाश्च स्मारयन्ति डिण्डिमघोषेणोद्घोषयन्ति च--नमो ब्रह्मणे, नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि, माहं ब्रह्म निराकुर्याम्, अग्ने नय सुपथा--इति।

## (२)

## ईश्वरः सर्वव्यापकः

अस्य समस्तस्य संसारस्य संचालकः व्यवस्थापकश्च परमेश्वरः सर्वव्यापकोऽस्ति। यथा चादिष्टं यजुषि--

ईशावास्यमिदं सर्वं यत् किंच जगत्यां जगत्,

यजु. ४०।१

यत् किं चास्मिन् जगति विद्यते तत् सर्वं जगत् गमनशीलं परिवर्तमानं विद्यते। तस्य गतिकारकः परिवर्तकश्च परमेश्वरोऽस्ति। स च जगत्यां जगतां समूहे वर्तमानेषु सर्वेषु पदार्थेषु विद्यमानो वर्तते--एतस्माद्धेतोः स विष्णुरिति श्रुतिषु निगद्यते, वेवेष्टि व्याप्नोति सर्वं जगत्--इति सर्वव्यापकः परमेश्वरो विष्णुः। ईशा ईशनकर्त्रा शासकेन परमेश्वरेण सर्वमिदं जगत् आवास्यम् परितो व्याप्तं वर्तते तस्मात् कारणात् सूर्यादिषु लोकेषु गतिः, परिक्रमणं, परिभ्रमणादिकं च प्रवर्तते। चेत्परमेश्वर ईशो न स्यात्, न स्याच्च शासनकर्ता--तदा कथं स्यात् सूर्यादिलोकानां गमनादिकम्। चेत्परमेश्वरः सर्वव्यापको न स्यात्कथं लोकानां नियमनं नियन्त्रणं च सम्पद्येत। अत एवान्यत्र निगदितं विद्यते यजुर्वेदे--

परीत्य भूतानि परीत्य लोकान्
परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्यात्म-
नात्मानमभिसंविवेश ।।
स ओतः प्रोतश्च विभूः प्रजासु,
सुभूः प्रभूः विभूरिति त्वोपास्महे वयम्०
इति ।

गम्यते चैतेन न साकारः न च सशरीरः परमेश्वरः । न चासावस्मदादिवदेकदेशीयः जन्म-मरणधर्मा । स तु सर्वशक्तिमान्, नित्यः, सर्व-व्यापकश्च जगतामानन्त्यात् सुनियन्त्रित्वाच्च । ईश्वरस्य कापि प्रतिमा नास्ति–'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' । न च तस्य शरीरं सम्भवति निराकारत्वात् व्यापकत्वाच्च । निगदितं हि यजुर्वेदे–'स पर्यगाच्छुक्रमकायम्' । परमेश्वरः परिभूः वर्तते अत एव–अकायम्'–न काचित् काया विद्यते यस्य तत् ब्रह्म अकायम्, निराकारः शरीररहित इत्यर्थः । चेत् परमेश्वरः सशरीरः सकायः साकारः स्यात् तदा कुत्र स्थित्वा कथा वा रीत्या महान्तीमानि जगन्ति रचयेत्, नियन्त्रितुं च समर्थो भवेत् । इत्यनेकाः परमात्मविषयिकाः परमावश्यकीयाः शिक्षाः वेदेषु प्रतिपादिताः सन्ति ।

आत्मज्ञानप्रतिपादिकाश्चापि बह्व्यः शिक्षाः शिक्षिताः सन्ति याश्चानेकेषु मन्त्रेषु वर्णिताः विद्यन्ते । यथा––

## (३)

## आत्मज्ञानम्

ज्ञानस्वरूपो जीवापरनामक आत्मा शरीरा-द्व्यतिरिक्तो विद्यते–तस्य ज्ञानमपि परमावश्यकम्, यदि शरीरव्यतिरिक्तः कश्चिदात्मा न स्यात् तदा शरीरविषये कस्याभिमानम् भवेत् ? ममेमे चक्षुषी, ममेमौ कर्णौ, ममेमे हस्तपादाः, ममेयं ग्रीवा, ममेय जिह्वा, ममेयं नासिकेति कोऽभिमन्यते, कः कल्पते कश्च चिन्तयति–इति । गम्यतेऽनेन ज्ञायते च–अस्ति कश्चिदेषां ममताभिमानी व्यति-रिक्त एभ्यः सर्वेभ्यश्चक्षुरादीन्द्रियेभ्यः । एतत्सर्व-मात्मनो शरीरव्यतिरिक्तत्वं संकेतयति द्रढ़यति च वैदिको मन्त्रभागः । यथा हि वर्णितमस्ति मन्त्रे––

अनच्छये तुरगातु जीवमेजत्
ध्रुवं मध्य आपस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभि-
रमर्त्यो मर्त्येना सयोनिः ।
ऋ. १।१६४ ।

अस्मिन् मन्त्रे कतिपयाः परमावश्यका अध्या-त्मविद्योपयोगिनो विषयाः प्रतिपादिताः सन्ति यथा––

१ आपस्त्यानां मध्ये जीवश्चरति, शरीराणि बहून्यनन्तानि सन्ति । तेषु गमनागमनकर्ता कश्चित् जीवः संचरति, संचरणाज्ज्ञायते जीवः शरीरात् सर्वथापि व्यतिरिक्तः पदार्थः कश्चि-दस्ति––व्यतिरिक्तो न स्याच्चेत् तदा संचरण-मेव न सम्भवेत् ।

२ एकं शरीरं विहाय यदा जीवः शरीरात् बहि-र्गच्छति तदा शरीरं मृतं भवति–आत्मनिर्गम-नात् पूर्वं शरीरं यथा समुज्ज्वलमाकर्षण-युक्तं, सौन्दर्यसम्पन्नं, कार्यकारि, सक्रियं चासीत्–न तथा मृतं शरीरं भवति । एतेन ज्ञायते–जीवात्मैव शरीरस्य जीवनकारणं

सौन्दर्यसाधकं गमनागमनाद्यनेकक्रियाकारणमासीत् ।

३ एकं शरीरं विहाय यदा बहिर्निर्गच्छति जीवात्मा, तदा स स्वकीयाः सर्वाः स्वधाः समादायैव गच्छति—नैकमपीन्द्रियं मनो बुद्ध्यादिकं च परित्यज्य संयाति । इन्द्रियाणि हि स्वधापदवाच्यानि तानि हि जीवात्मनः स्वानि सन्ति । इन्द्रस्य जीवात्मन इमानि लिंगानि वर्तन्ते—अत एव चेमानीन्द्रियाणि वर्ण्यन्ते जीवात्मन इन्द्रस्यैव सम्बन्धित्वात् । एतेन जीवात्मनः प्रेत्यभावः पुनर्जन्मापि सूचितं भवति ।

४ अमर्त्यः——जीवात्मा मरणरहितोऽमरः । ध्रुवमित्यनेन ज्ञायते जीवात्मनः स्थैर्यं—न तु क्षणस्थायी कश्चित् क्षणिकः पदार्थः, एतेन जीवात्मनः नित्यत्वमपरिणामित्वं च लक्ष्यते । एवं बन्धमोक्षविज्ञापकाः बहवो मन्त्राः मंत्रभागाश्च वेदेषु यत्र तत्र वर्तन्ते । तेषां सम्यगनुसंधानादात्मज्ञान—विषयकं सर्वं परमावश्यकं विज्ञेयतत्त्वं च हस्तगतं भवतीति नात्र कश्चिदपि विप्रतिपत्तुं शक्यते ।

## ४
## मोक्षः

सर्वस्तावत्सुखमाप्तुमिच्छति दुःखं च हातुं वाञ्छति सुखप्रेप्सा दुःखजिहासा चेयं सर्वभूतजातं प्रयतमानं प्रेरयन्ती सर्वत्रोपलभ्यते । दुःखस्यात्यन्तिकीप्रहाणिः सुखस्य चोत्कृष्टा परमाप्तिः यत्र सम्भवति तदेव मोक्षधामेति शास्त्रेषु निगद्यते । तदत्यन्तविमोक्षोऽपवर्गः—इति न्याये । अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः—इति सांख्ये । तच्च मोक्षविषयकं सांगोपांगविज्ञानमपि वेदेषु यत्र तत्र शिक्ष्यमाणमुपलभ्यते । यथामन्त्रितं विद्यते ऽथर्ववेदे ऋग्वेदे च——

अश्मन्वती रीयते संरभध्व—
मुत्तिष्ठत प्रतरत सखायः ।
अत्रा जहाम ये असन्नशेवाः
शिवान् वयमुत्तरेमाभि वाजान् ।।

ऋ. १०।५३।८१

इयं खलु जन्ममरणरूपा संसृतिचक्राकारा भयावहा नदो प्रवहति । यथा कस्यांचिन्नद्यां प्रस्तराणां वेगेन प्रवाहो भवति, भवति च तस्या उत्तरणे महान् क्लेशस्तथैव संसृतिनदी वर्तते । एतस्यामपि जन्ममरणदुःखजराव्याध्यादीनाम् प्रस्तराणां क्लेशंकरः प्रवाहः प्रचलति । अनुभूयते चैतस्या उत्तरणे महीयान् क्लेशः । मन्त्रो वदति—एतस्या नद्या क्लेशदायिन्याः पारं गमनाय उत्तिष्ठत, उत्थाय च अभ्यासवैराग्याभ्यां प्रतरत—प्रबलं प्रयत्नं कृत्वा पारं गच्छतेत्यर्थः ।

ये युष्माकमशिवाः गुणाः दुर्गुणाः वर्तन्ते, तान् सर्वान् वर्तमाने जन्मन्येव परित्यज्य शिवान् शुभान् गुणान् धारयत । एवमाध्यात्मिकीमुन्नतिं सम्पादयन्तो मोक्षं प्राप्नुत ।

उक्तं चोपनिषत्सु—'मुमुक्षुर्वै शरणमहं प्रपद्ये' 'मोक्षमिच्छसि चेत्तात विषयान् विषवत्त्यज' 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः' तन्निष्ठस्य मोक्षोपदेशादिति च वेदान्तदर्शनेऽपि ।

न केवलमाध्यात्मिकीमुन्नतिं संलक्ष्यैव वेदेषु मन्त्राः निगदिता—अपितु शारीरिकीमुन्नतिमपि वेदोऽपेक्षते । शारीरिकीमभ्युन्नतिं विना आध्यात्मिक्या उन्नत्या सार्थकतैव सिद्धिं न यातीति सर्वैः

सर्वथानुभूयमानं दृश्यते ।

( ५ )

## कर्तव्याचरणम्

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः--

यजुः ४०।२

इत्येवमादिषु बहुष्वेव मन्त्रेषु कर्तव्याचरणस्य विधानं श्रुतिरनुशास्ति । यदि कश्चिच्छतवार्षिकमायुः जीवितुमिच्छेत् तमुद्दिश्य कथ्यते–कर्माणि कुर्वन्नेव जीवितुमिच्छेत्–कर्माणि परित्यज्योपेक्ष्य वा नेच्छेत् । वस्तुतस्तु कर्माणि परित्यज्य तु कश्चिज्जीवितुमपि न शक्नोति । ये तु कर्मत्यागं कर्मसन्यासं वा मोक्षहेतुं ब्रुवते तान् प्रति मन्त्रोऽयं स्पष्टयति–इह अस्मिन् संसारे जीवनसम्पादनाय कर्माणि शुभकर्माण्यवश्यमेवानुष्ठातव्यानि । शुभानां कर्मणामनुष्ठानान्न केवलमायुषो दीर्घत्वमेवाप्यते अपितु जीवनस्य शोभनं सौन्दर्यञ्चाप्याप्यते–दीर्घजीवी यशस्वी च भवतीत्यभिप्रायः ।

यस्तु कर्माणि न कर्तुमिच्छति, स जीवितुं प्राणानां संप्रधारणमपि कर्तुं न शक्नोति । यथा चोक्तं गीतासु–'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्, कार्यते ह्यवशः कर्म सर्वैः प्रकृतिजैः गुणैः' 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' । अत एव चोक्तम्--कर्म ज्यायो ह्यकर्मणः, कर्मसन्यासात् कर्मयोगो विशिष्यत–इति च, । गम्यतेऽनेन यावज्जीवं शुभानां कर्मणामनुष्ठानं कर्तव्यत्वेनाचरणीयम्--न तेषां कदापि कुत्रापि परित्यागो विधेयः ।

शुभानि कर्माणि कानि सन्ति यानि सदैव सर्वथाप्यनुष्ठातव्यानि, कानि चाशुभानि कर्माणि यानि कदापि कथंचिदपि नानुष्ठेयानीति जिज्ञासायां वेदेषु प्रकरणशो मन्त्राः वर्णिताः सन्ति । तदेतत्सर्वं यत्र तत्रोपलब्धुं शक्यते ।

( ६ )

## अहिंसा

न कस्यचित् प्राणिनो बधः कर्तव्यः–इत्यपरा शिक्षा वर्तते यावश्यमनुष्ठातव्या । 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्' 'मा गामनागामदितिं बधिष्ट' गां मा हिंसीः' अजं मा हिंसीः, अविं मा हिंसीः, पशुं मा हिंसीः–इत्येवमादयः मन्त्रभागाः हिंसायाः प्रतिषेधं वर्णयन्ति, परिवर्जयन्ति च मांसभक्षणमपि ।

(७)

## सत्यम्

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः,अश्रद्धामनृते व्यदधात् श्रद्धां सत्ये प्रजापतिः'–इत्यस्यामृचि प्रजापतिना परमेश्वरेण सत्यस्यासत्यस्य च सर्वथैव विभज्य विभागो विहितः । श्रद्धा तु सत्यानुष्ठाने कर्तव्या, अश्रद्धा चासत्यविषये योक्तव्या । अत एवोपनिषत्सु प्रतिपाद्यते–सत्यान्न प्रमदितव्यम्, सत्यं च स्वाध्यायप्रवचने च, समूल एषः शुष्यति योऽनृतमभिवदति, सत्येन लभ्यः तपसा ह्येष आत्मा, किं बहुना, मनुनापि स्मृतौ स्मृतं वर्तते–सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्, प्रियं च नानृतं ब्रूयादेष धर्मः सनातन–इति ।

(८)

## ब्रह्मचर्यम्

शिक्षायाः शिखाभूतं यदि किंचिदस्ति तत्तु ब्रह्मचर्यमेवास्तीति सर्वेषु वेदेषु सर्वासु चोपनिषत्सु निगद्यमानं श्रूयते । ब्रह्मचर्यपूर्वकं यदध्ययनं तदेव

वास्तविकमध्ययनमित्यपि न विस्मर्तव्यम् । यस्यां शिक्षायां ब्रह्मचर्यस्य सन्निवेशो नास्ति सा तु शिक्षैव नास्ति । अत एव ब्रह्मचर्यस्य माहात्म्यमुपलक्ष्य ब्रह्मचर्यसूक्ते सूक्तमिदमपि सदैव स्मरणीयम्–ब्रह्मचर्येण राजा राष्ट्रं विरक्षति, आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमृच्छति, ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्, ब्रह्मचर्येण लभ्यस्त्वेष आत्मा, ब्रह्मचर्यमेव चरेयमिति होवाच भारद्वाजः–इति च ब्राह्मणेषु ।

## (९)
## अप्रमादः

शिक्षार्थिना विद्यार्थिना वा प्रमादो कदापि न कर्त्तव्य-इत्यन्या शिक्षा शिक्षिता वर्तते वैदिके साहित्ये, एषा शिक्षापि सर्वथा समवधानतया सर्वैः कल्याणमीप्सुभिरनुष्ठातव्या ।

उपनिषत्सु चोक्तम् यथा हि तैत्तिरीयाः पठन्ति-सत्यान्न प्रमदितव्यम्, स्वाध्यायान्न प्रमदितव्यम्, धर्मान्न प्रमदितव्यम्, देवपितृकार्याभ्यान्न प्रमदितव्यम् कुशलान्न प्रमदितव्यम्, भूत्यै न प्रमदितव्यम्, सत्यं वद, धर्मं चर–इत्येवमादीनि परमावश्यकानि सर्वथाप्युपादेयानि शिक्षावचनानि सन्ति तानि चावश्यमाचरणीयानि ।

## (१०)
## देवत्वम्

मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव इत्युपनिषद्वचनानि वेदस्य साररूपाणि न कदापि विस्मरणीयानि, देवो दानात्–यास्कीयं निर्वचनमिदं परमविचारास्पदं वर्तते । यस्तु खलु शुभेषु कार्येषु दानं करोति स तु तत्कालमेव देवत्वं प्राप्नोति अत एव दानप्रकरणे तैत्तिरीयाणि वचनानि श्रूयन्ते–श्रद्धया देयम्, अश्रद्धया देयम्, श्रिया देयम्, ह्रिया देयम्, भिया देयम्, संविदा देयम् । एतस्य सर्वस्य दानप्रकरणस्य मूलभूतं वेदेषु प्रतिपादितमित्यस्मिन् विषय ऋग्वेदस्यायं मन्त्रः परमं प्रमाणम्––

मोघमन्नं विन्दते अप्रचेताः
सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं
केवलाघो भवति केवलादी ॥

ऋ॰ १०।११७।६

यस्तु स्वार्थायान्नं संगृह्णाति स्वयमेव च भुंक्ते न चापरस्मै क्षुधातुराय पात्राय प्रयच्छति-स अप्रचेता एवास्ति, स जीवनस्य प्रकृष्टं स्वरूपं नावगच्छति, तस्य ज्ञानमपि प्रकृष्टं नास्ति-स्वार्थमुख्याः सिद्धान्ताः नहि विज्ञानसम्मताः न च जीवनोपयोगिनः इत्यर्थः ।

मन्त्रो वदति स्वार्थिनो भोगः भोग एव नास्ति, किन्तु स तु तस्य नाशहेतुरेवास्ति-एतस्मिन् विषये न विप्रतिपत्तिर्विधेया, एषो हि सत्यः सिद्धान्तः ।

यस्तु खलु स्वार्थान्धः न कस्मैचिदपि पात्रायान्नादीन् ददाति स एव केवलादीत्युच्यते, कथ्यते चासावेव केवलाघः पाप्मना पापात्मेति । एतादृशाः पापात्मानो न भवेम इत्युद्दिश्याचरणीम् परोपकरणं दानानुष्ठानं च ।

दीपनात् द्योतनाद्वा देवः – इत्यपि निर्वचनं भवति । सूच्यते चानेन, ये स्वकीयं जीवनं दीपवत् प्रकाशपूर्णं समुज्ज्वलं भासमानं च सम्पादयन्ति ते देवाः भवन्ति । यथा दीपः स्वयमात्मानं प्रकाश्यान्यानपि समीपस्थान् स्वभासा प्रकाशयति, प्रकाशयति च स्वगुणान्, तथैव ये ब्रह्मचर्यादीन् शुभान् गुणान् संप्रधार्य स्वसमीपे वर्तमानानपि मनुष्यान् स्वात्मसदृशान् ब्रह्मचारिणः, सत्यवादिनः, स्वाध्यायिनः परोपकारिणश्च सम्पादयन्ति तेऽपि देवा एव सन्तीति नात्र विप्रतिपत्तव्यम् ।

वयमपि देवाः भवेम – इत्याचरणीयमस्मदादिभिरपि ब्रह्मचर्यादिकं देवत्वसाधकं दिव्यगुणकर्म-

जातम् । द्युस्थानो भवतीति देवः—इत्यपि निर्वचनं यास्कसम्मतम् । अतएवोपर्युपरिस्थिताः सूर्यादयो यथा देवा उच्यन्ते, उच्यन्ते तथैव महान्तो वीर-धीरगम्भीराः देशोद्धारकाः जात्युपकारकाः धर्मोद्धारकाः निस्स्वार्थसेवकाश्च लोकोत्तरमानवा अपि देवा इति ।

एतादृशाः देवाः वयमपि भवेम—इति देवत्वमिच्छद्भिः सर्वैरप्यस्माभिः वैदिकीयं शिक्षा सुतरामवश्यं स्वीकरणीया समाचरणीया च ।

## (११)
## अक्षैर्मा दीव्यः

वैदिकेषु मन्त्रेषु द्यूतनिन्दापि बहुशो दृश्यते । अक्षैः देवनं द्यूताचरणमुच्यते—तच्च सर्वथाप्यवैदिकमित्यस्य निन्द्यस्य विषयस्य हृदयस्पर्शि वर्णनमृग्वेदे दर्शनीयं विद्यते । ऋग्वेदे दशमस्य मंडलस्य ३४ तमं सूक्तं तु विशेषतो द्यूतनिन्दाप्रतिपादकं प्रसिद्धमेवास्ति । यत्र हि वर्ण्यतेऽयं मन्त्रः—

अक्षैर्मा दीव्यः कृषिमित् कृषस्व
वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया
तन्मे विचष्टे सवितायमर्यः ।

ऋ. १०।३४।१३

द्यूतक्रीडा कदापि न विधेया । कृषिकर्म कुर्वन्त एव जीवनं निर्वहत । एव प्रबलेनप्र यत्नेन कृष्यादिना निर्दुष्टेण कर्मणा च यद्धनं प्राप्तं भवति तदेव शुभं सुखकारकं च मन्यध्वम् । तेनैव च सर्वथा संतोषपूर्वकं रमणं करणीयम् , कृषिकर्मण एव गवां सेवा दुग्धघृतादिलाभश्च भवति, अनेनैव कर्मणा गृहमर्यादापि सुरक्षिता भवति । जाया प्रसन्ना भवति पुत्रादयोऽपि सुखिनो भवन्ति—जगतामुत्पादकः परमेश्वर एवेदमुपदिशति ।

एवं वैदिकीं शिक्षां धारयन्तः समाचरन्तश्च पूर्वे पूर्वतराः पूर्वतमाश्च यथात्रत्या आर्यवर्य्या शारीरिकीं मानसीं चाध्यात्मिकीं समुन्नतिं प्रापुः, प्रापुश्च जगतीतलविस्तृतं यशः । तथैवास्माभिरपीयं शिक्षा धारणीया, सम्पादनीया चानया शारीरिकी मानसी चाध्यात्मिकी समुन्नतिः ।

अस्या शिक्षाया एवायं प्रताप आसीत्—यत्तदानींतनेभ्यो विद्यालयेभ्यः गुरुकुलेभ्यश्च कौत्सप्रभृतयो ब्रह्मचारिणः गुरुभक्ताः देशभक्ताः संस्कृतिभक्ताश्च समावृत्यार्यावर्तमिमं समलंचक्रुः । जनकाश्वपतिप्रभृतयश्च भूपतयः पृथिवीमिमां स्वर्गतुल्यां सम्पादयामासुः । उपनिषत्सु श्रूयते महाराजस्य राजर्षेरश्वपतेर्दिव्यमिदं वचनम्—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाग्निहोत्री न चाविद्वान् न स्वैरी स्वैरिणी कुतः।

अद्यतनेऽपि काले वैदिकीयं शिक्षा सर्वथाप्यपेक्ष्यते यया पुनरपि भारतं वर्षमिदं स्वर्गतुल्यं भवेत् , भवेयुश्च राजानोऽश्वपतिसदृशाः । छात्राश्च कौत्सकल्पा गुरुभक्ता—इत्याशास्महे ।



# दूरी भवतु सहशिक्षा

ले०——श्री रघुवीरो मुमुक्षुर्व्याकरणाचार्यः, काङ्गड़ीगुरुकुलम्

खेदास्पदमिदं यन्मानवसमाजे सहशिक्षाऽत्यन्त तीव्रगत्या प्रचलिता दरीदृश्यते । न ज्ञायते छात्राणां को लाभ एतैः शिक्षाशास्त्रिभिर्विचारितो येनैते सहशिक्षायाः प्रचारार्थं व्याकुलाः सन्ति । 'अन्धेनैव नीयमाना' इति न्यायेन भारतीयविद्वांसोऽपि पाश्चात्यानामनुकरणं कुर्वन्तः सहशिक्षां लाभप्रदां मन्यन्ते । अवलोक्यन्तां पाठकवृन्देनैषां हेतवः——

१ **धनलाभः**—केचन श्रीमन्तो वदन्ति–यदि सहशिक्षा न स्यात्तर्हि बालिकाभ्योऽपि पृथग् विद्यालयानामावश्यकता भविष्यति येन धनव्ययो गरीयान् सम्पत्स्यते । बालिका अल्पाः पठन्ति, ताभ्यः पृथग् विद्यालयानामावश्यकता नास्तीति ।

**समाधानम्**—सामान्यतया त्वेषामयं हेतुः साधुः प्रतीयते परं पृच्छाम्यहं किं धनकारणेन चरित्रं विक्रयणीयम् ? सत्यमेतत् यद् वर्तमानयुगे बालकापेक्षया कन्यका अधिका न पठन्ति परं भविष्यं को विजानाति यदा कन्या अधिकसंख्यायामपि पठितुमर्हाः । पुनः कुतो न आभ्यः पृथग्विद्यालयाः स्युः । एवं यदि धनव्ययो भवति तर्हि भवतु । चरित्रं श्रेष्ठं न तु धनम् ।

२ **मैत्रीभावः**— सहशिक्षासमर्थका द्वितीयं हेतुं प्रयच्छन्ति यदनया शिक्षया विद्यार्थिषु छात्रासु च प्रेमभावः प्रवर्धते । सहपठनेन, वसनेन, गमनेन वैमनस्यस्य सम्भावना नास्ति——

समा०–अनेन हेतुना तु स्वयमेव सहशिक्षासमर्थका एव पराजिता भवन्ति । अनया शिक्षया यो भीषणः संघर्षश्छात्रासु विद्यार्थिषु चोत्पद्यते वृत्तपत्राणि सर्वमेव ज्ञापयन्ति । सहशिक्षयाऽद्यावधि न सात्विकः स्नेहः समजनि । दूषितप्रेम्णस्त्वनेका हृदयविदारिका घटनाः श्रूयन्ते । अनेका बालिकास्तु घातकैर्गृहीतप्राणा एव भवन्ति । अहो ! स्मारं स्मारमेषां पिशाचानां दुर्व्यवहारं भिद्यते हृदयम् । खिद्यते चेतः । किमयं सात्विकः स्नेहः ? किमयं मैत्रीभावो येन विगतप्राणा बालिका भवेयुः ।

३ **मनोवैज्ञानिकदृष्टिकोणः** —– समर्थकबान्धवास्तृतीयप्रवलहेतुविषये भणन्ति यन्मनोविज्ञानानुसारेणाऽपि दोषरहिता सहशिक्षा । दूरेवसनेन, पठनेन छात्रासु विद्यार्थिषु परस्परमाकर्षणमुत्पद्यते । तेऽन्योऽन्यं प्राप्तुकामा जायन्ते । अग्रेऽपि ते व्याहरन्ति–मनोवैज्ञानिकोऽयं नियमो यद् वस्तु प्रति मानवो घृणां करोति तद् वस्तु प्रति तस्य गुप्तस्नेहो भवति——

**समा०**–हास्यास्पदानि खलु वराका इमे । को दोष एषाम् ? मनोविज्ञानमेव न जानन्ति । मनोविज्ञानं न कथयति यद्यथेष्टं विषयसेवनं क्रियतामिति । मनोविज्ञानस्य तथ्यं त्वेतद् यन्मनसा विषयास्त्यक्तव्या न त्वाग्रहपूर्वकमिन्द्रियनिरोधः कर्त्तव्यः । ये च भणन्ति घृणितवस्तुप्रति गुप्तप्रीतिर्भवतीति, क्षम्यताम्, पृच्छाम्यहं सादर किं मलं प्रति भवतां घृणा नास्ति, यद्यस्ति तर्हि गुप्तप्रीतिरपि स्वीकार्या श्रीमद्भिः ।

४ **स्वयंवरप्रथाः**––विचित्रा हि केचन पुरुषा एवं वक्तुमपि सन्नद्धा यदनया शिक्षया स्वयंवरप्रथा वरीवर्द्धते । सहशिक्षायां पठित्वा युवका मातुः पितुः शासनमुत्सृज्य, ययाऽपि छात्रया सहैकमत्यं भवेत्तयैव सहोद्वाहं कर्तुं शक्ताः ।

**समा०**–न ज्ञायत इमे मनोवैज्ञानिकाः, दार्शनिकाः, उच्चविचारका वा सन्ति, अथवा तेषु मूर्खेषु सन्ति ये पावनीं स्वयंवरप्रथामपि न जानन्ति । किमयमेव स्वयंवरो यद् विद्याध्ययनकाल एव छात्रास्तथा विद्यार्थिनो दूषित-

प्रेम्णा भ्रष्टाचारं कुर्युः ? नायं स्वयंवरोऽपितु मनुमतेन गान्धर्वविवाह एव प्रतिभाति। सहशिक्षया स्वयवरप्रथा तु न परं ( तलाकप्रथा ) विवाहविच्छेदप्रथा त्ववश्यमेव प्रचलिता।

५ **जातिवादस्य समाप्तिः**--एषामपि विचारा हृदयगुहातो निःसृताः। एषां मतेन सहशिक्षया जातिवादस्य समाप्तिर्भवति यतो ह्यत्र विवाहकार्येऽपि स्वतन्त्रताऽस्ति।

**समा०**--अयमपि हेतुर्न साधुः। न दृश्यत एतादृशमुदाहरणं येन सहशिक्षया पठित्वा स्वेच्छया चोद्वाहं कृत्वा जातिवादस्य समाप्तिः कृता। जातिवादस्य समाप्तेस्तु सहशिक्षया सह न कोऽपि सम्बन्धः।

६ **व्यक्तित्वविकासः**-- श्रूयताम्। सहशिक्षया व्यक्तित्वविकासो भवति। अस्य पक्षपोषकाः कथयन्ति--यदि छात्रास्तथा विद्यार्थिनो दूरे वत्स्यन्ति तर्हि परस्परं विचारविनिमयं कर्तुं न शक्ताः। परस्परं मिलित्वा विचारेण व्यक्तित्वविकासो भवतीति।

**समा०**--अहो ! आश्चर्यम्। विचित्रा ह्येषां बुद्धिः। विचारकाः ! विचार्यन्ताम्। किं छात्रा एव विद्यार्थिनां विकासं करिष्यन्ति ? किं व्यक्तित्वविकासस्योत्तरदायित्वमध्यापकानां नास्ति ? किं प्राचीनकाले सहशिक्षां विना सर्वे विकासरहिता एवासन् ? सहशिक्षया विकासस्तु न परमिदं तु स्पष्टमेव दृश्यते यद् विद्यार्थिनश्छात्राणामाकर्षण कराणि चलचित्राणां गीतानि बुक्कन्त इतस्ततो हट्टेषु घट्टेषु भ्रमन्ति। किमयं व्यक्तित्वविकासः ? पुनर्व्यक्तित्वनाशः कीदृशो भवति। सहशिक्षातो व्यक्तित्वविकासस्य सम्भावना तु खपुष्पकल्पनमेवाऽस्ति।

अयि सहशिक्षासमर्थकाः ! अयि पाश्चात्यसभ्यतापूजकाः ! धन्या यूयम्। धन्याश्च भवतां सा बुद्धिर्यया नवीना नवीना विचारा मानवहिताय निःसरन्ति। किमेतैर्हेतुभिरेव यूयं सहशिक्षां विश्वव्यापिनीं कर्तुकामाः ? भगवता पतञ्जलिना महाभाष्य एकस्मिन् स्थाने लिखितम्--"चौररूपोऽयम्"। अप्यक्ष्णोरञ्जनं हरेत्" "वृषलरूपोऽयम्। अयिधावतो लोहितं पिवेत्" अस्माकं सहशिक्षासमर्थकबान्धवा अप्येतादृशा एव सन्ति ये मानवानामक्षिषु बालुकां पातितुकामाः प्रतीयन्ते।

## सहशिक्षायां दोषः

अस्यां शिक्षायां सर्वप्रधानदोषश्चरित्रहीनता वर्तते। कुतोऽनया चरित्रहीनतेति चेत् स्पष्टमनेनैव यदग्निघृतयोः संयोगो विनाशकारी भवति। श्रूयन्तामत्र महर्षि दत्तात्रेयस्य वचनानि--

अग्निकुण्डसमा नारी घृतकुण्डसमो नरः।
संसर्गेण विलीयन्ते तस्मात्तां परिवर्जयेत्॥

सहशिक्षया विद्यार्थिनः किं कर्तुकामाः स्पष्टमनेनोदाहरणेन यद् हरिद्वारीय शिक्षणालये ( कालेज ) कक्षायां विद्यार्थिनः पृष्ठे छात्राश्चाग्रे तिष्ठन्ति स्म। विद्यार्थिभिरप्यग्रे स्थातुमुक्तम्। स्वीकृतं तेषां निवेदनम्। परं तेषान्तु प्रयोजनमेव द्वितीयमासीत्। अतः पुनस्तैरुक्तम्--वयन्तु छात्राभिः सहैव स्थास्याम इति।

केचन विचित्रा अल्पबुद्धिविचारका घोषयन्ति यच्छात्राभिः सह पठनेन, क्रीडनेन, भ्रमणेन न कोऽपि दोषः। पृच्छ्यतेऽत्र किं ज्ञात्वा सर्पमुखेऽङ्गुलिकाप्रदानं युक्तम्? यदि पार्श्वे वसनेन हानिर्नास्ति तर्हि मनुर्भगवान्--

मात्रा स्वस्रा दुहित्रा च न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥

माता, स्वसा, दुहिता सर्वाः पूज्याः सन्ति । पुनरपि मनुराभिः सह स्थातुं निषेधयति पुनः कस्यापि तरुणछात्रया सह पठित्वा जल्पित्वा को नाम शक्नोति स्वचरित्रं रक्षितुम् । अस्मिन् विषये द्वितीयं श्लोकं पठ्यताम्——

गुरुपत्नी तु युवती नाभिवाद्येत पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ।।

सहशिक्षासमर्थकाः ! अवलोक्यन्तां यत् कीदृशी कठोराऽऽज्ञा मनोर्यच्छ्रद्धया पादस्पर्शमपि न कुर्यात् । कुतः पुनश्छात्राणां हस्तं स्वहस्ते समादाय भ्रमणमाखेटञ्च ।

अस्माकं पूर्वजा मूर्खा नासन्, यैः पृथक्-पृथक् शिक्षाविधानमकारि । महर्षिणा दयानन्देन सत्यार्थ-प्रकाशेऽलेखि——

"बालकानां बालिकानाञ्च विद्यालया न्यूनतो न्यूनं गव्यूति विप्रकर्षेण स्युः । बालिकानां विद्यालयेषु पञ्चवर्षो बालकस्तथा बालकानां विद्यालयेषु पञ्चवर्षा बालिका अपि न यायात् । अहा ! क्व सा महर्षिणा निर्दिष्टा चरित्रप्रदा शिक्षा क्वच सहशिक्षा ?

अयि शिक्षाशास्त्रिणः ! इदं भारतं तदेव भारतं यत्र चरित्रमेव महाधनं मन्यन्ते स्म । इदं भारतं तदेव भारतं यत्र "मातृवत् परदारेषु" इति न्यायेन नार्योऽवलोक्यन्ते स्म । सर्वदैवास्मत्पूर्वजाश्चरित्रं श्रेष्ठं मेनिरे । यदि वयं धनलोलुपाः स्वचरित्रं धनेन विक्रेष्यामस्तर्हि महती विनष्टिः । 'कुछ तो करेला कडुवा कुछ नीम चढ़ा ? इत्यार्यभाषाया लोकोक्तेरनुसारेण पूर्वमेवेयं शिक्षा धूर्तमैकालेप्रदत्ताऽस्ति पुनरस्यामपि सहशिक्षा । नानया युवकानां युवतीनाञ्च चरित्ररक्षा सम्भाव्यते । यदि वयं स्वपूर्वजानुसारेणैव स्वचरित्रं श्रेष्ठं कर्तुकामाः, यदि वयमपि रामकृष्णदयानन्दसदृशा भवितु कामास्तर्हीयं सहशिक्षा विषलतैव दूरी करणीया । एषैव कामना करणीया 'दूरी भवतु सहशिक्षा ।'

---

# परिमण्डलता

स एष प्रजापतिरग्निष्टोमः । परिमण्डलो भूत्वाऽनन्तो भूत्वा शये ( शेते ) । तदनुकृतीदमप्यन्या देवताः परिमण्डलाः । परिमण्डल आदित्यः परिमण्डलश्चन्द्रमाः परिमण्डला द्यौः परिमण्डलमन्तरिक्षं परिमण्डलेयं पृथिवी । अपि यदिदं पुरुषे दिव्यं तत् परिमण्डलम् ।

जै. ब्रा. १।२५६

यह प्रजापति अग्निष्टोम रूप में है अर्थात् यह प्रजापति अग्नि के नाना स्तरों में परिणत होकर सर्वत्र फैला हुआ है। यह परिमण्डल ( Circular, globular ) रूप में अनन्त स्थान को घेरे हुए है। इसी की अनुकृति में यह ब्रह्माण्ड भी परिमण्डल रूप है। आदित्य, चन्द्रमा, अन्तरिक्ष, पृथिवी तथा द्यु लोक आदि सब परिमण्डल रूप हैं। और पुरुष में जो दिव्यता है वह भी परिमण्डल रूप होती है।

# जवाहरः

कवीशो श्रीरामकैलाशः पाण्डेयः, एम.ए., शास्त्री,
रिसर्चस्कालर, संस्कृतविभागः प्रयागविश्वविद्यालयः, प्रयाग

सम्प्रति नास्ति जवाहरलालः ॥

हिमालयः कम्पत इह मेऽलम्, रोदिति भारतभूरनुवेलम् ।
विरोधिनः खेलन्ति सहेलम्, प्राप्य भारतं रम्यं मेलम् ॥
'लालं' प्राप्य मोदते कालः, सम्प्रति नास्ति जवाहरलालः ॥१॥

हे भारतभूभाग्यविधातः, कस्मिन् देशे त्वं ननु यातः ।
संसारस्त्वत्कीर्त्या व्याप्तः, बालभारतस्य त्वं चाप्तः ॥
नो वर्तते विश्वभूपालः, सम्प्रति नास्ति जवाहरलालः ॥२॥

प्रतिष्ठिते वंशे त्वं जातः, प्रतीक्ष्य आसीत् खलु ते तातः ।
गुणस्त्वया ह्यनवद्यः प्राप्तः, राजनीतिविद्यार्थो ज्ञातः ॥
मानसरस्तत्याज मरालः, सम्प्रति नास्ति जवाहरलालः ॥३॥

नासीत् कर्म तावकं श्रव्यम्, परन्तु काव्यं दृश्यं नव्यम् ।
लब्धं यशस्त्वया त्वतिदिव्यम्, त्वज्जीवितमासीदिह भव्यम् ॥
नास्ते भारत मातुर्बालः, सम्प्रति नास्ति जवाहरलालः ॥४॥

हे जनेश ! हे वीर ! जवाहर ! लोके ह्युपदेशान् सदा वितर ।
दुःखं देशस्यास्य सपदि हर, युद्धस्याग्निं संहर ! संहर ! !
विश्वे सर्पति हिंसाव्यालः, सम्प्रति नास्ति जवाहरलालः ॥५॥

धरारविश्चन्द्रश्चाकाशः, जल्पति न त्वत्कीर्तेर्नाशः ।
त्वां लोकोऽपि दिदृक्षुः साशः, कथयतीति कवीशकैलाशः ॥
गतोऽधुना नाकं गोपालः, सम्प्रति नास्ति जवाहरलालः ॥६॥

———

# किमाकृतिः पदार्थ आहोस्विद् द्रव्यम् ?

श्री प्रकाशवीर शास्त्री विद्यालङ्कार गुरुकुल भैंसवाल कलां रोहतक

पाणिनीये व्याकरणे आकृतिर्द्रव्यं चेत्युभयमपि पदार्थोऽभ्युपगम्यते । उभयथा ह्याचार्येण सूत्राणि पठितानि । द्रव्यं पदार्थं मत्वा सरूपाणामेकशेष एकविभक्ताविति । आकृतिं पदार्थं मत्वा च जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् इति च । आकृतिर्जातिः सामान्यमित्यनर्थान्तरम् । व्यक्तिर्द्रव्यं विशेषश्चेत्यप्यनर्थान्तरम् । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इति फले न कश्चिद् भेदः । न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, न वा द्रव्यपदार्थकस्याकृतिर्न पदार्थः । उभयोरुभयं पदार्थः । कस्यचित्किञ्चित्प्रधानभूतं किञ्चिद् गुणभूतम् । द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता आकृतिपदार्थकस्याकृतिः प्रधानभूता द्रव्यं गुणभूतमिति । तथाप्येकैकशो गुणप्रधानभावेनोभयोर्गुणदोषविमर्शः प्रस्तूयते—तत्र पूर्वमाकृतिपक्षं मुख्यतया समर्थयन्नाह स्म भगवान् कात्यायनो वार्तिककारः—

आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः । वाजप्यायनः आचार्यः आकृतेरभिधानात् तस्याश्चैकत्वाद् विभक्तावेकं शब्दं न्याय्यं मन्यते । एका आकृतिः सा चाभिधीयते । कथं ज्ञायते एका आकृतिः सा चाभिधीयत इति । प्रख्याविशेषात् । न हि गौरित्युक्ते कश्चिद् विशेषः प्रख्यायते, शुक्ला, नीला, कपिला, कपोतिकेति । अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयत इति । न हि गौरित्युक्ते व्यपवर्गो व्यपवर्गो गम्यते शुक्ला नीला कपिला कपोतिकेति । ज्ञायते खल्वप्येकोपदिष्टम् । गौरस्य कदाचिदुपदिष्टो भवति सतमन्यस्मिन् देशेऽन्यस्मिन् कालेऽन्यस्यां च वयोऽवस्थायां दृष्ट्वा जानाति अयं गौरिति । धर्मशास्त्रञ्च तथा । एवञ्च कृत्वा धर्मशास्त्रं प्रवृत्तं ब्राह्मणो न हन्तव्यः सुरा न पेयेति । ब्राह्मणमात्रं न हन्यते सुरामात्रञ्च न पीयते । यदि केवलं द्रव्यं पदार्थः स्याद् एकं ब्राह्मणमहत्वैकाञ्चसुरामपीत्वा अन्यत्र कामचारः स्यात् । अस्ति चैकमनेकाधिकरणस्थं युगपत् । तद्यथा आदित्य एकोऽनेकाधिकरणस्थो युगपदुपलभ्यते । अथवा इतीन्द्रवद् विषयः । यथैक इन्द्रोऽनेकस्मिन् क्रतुशतेऽऽहूतो युगपत्सर्वत्र भवति । तथेयमाकृतिर्युगपत् सर्वत्र भविष्यति । आकृतौ हि अनवयवेन चोद्यते प्रत्येकञ्च परिसमाप्यते । चोदनायां चैकस्योपाधिवृत्तेर्मन्यामहे एका आकृतिरभिधीयते इति । आग्नेयमष्टाकपालं निर्वपेद् इत्यत्र चोदनायामेकं निरुप्य द्वितीयस्तृतीयश्च निरुप्यते । यदि द्रव्यं पदार्थः स्यात् एकन्निरूप्य द्वितीयस्य तृतीयस्य च निर्वपणं न प्रकल्पेत । एवं षड्भिः सप्तभिर्वा हेतुभिराकृतिपक्षं साधयित्वा द्रव्यपक्षमपि साधयितुमाह स्म भगवान् वार्तिककारः—

द्रव्याभिधानं व्याडिः । द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते । तथा च लिङ्गवचनसिद्धिः । एवञ्च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति । ब्राह्मणी, ब्राह्मणः ब्राह्मणौ ब्राह्मणा इति चोदनासु च तस्यारभ्या तस्यारम्भात् मन्यामहे द्रव्यमभिधीयत इति । गौरनुबन्ध्योऽजोऽग्नीषोमीय इति आकृतौ चोदितायां द्रव्ये आलम्भनप्रोक्षणविशसनादीनि क्रियन्ते । न चैकमनेकाधिकरणस्थं युगपत् । न खल्वपि एकमनेकाधिकरणस्थं युगपदुपलभ्यते । न ह्येको देवदत्तो युगपत् स्रुघ्ने च भवति मथुरायाञ्च । विनाशे प्रादुर्भावे च सर्वं तथा स्यात् । किम् विनश्येच्च प्रादुःष्याच्च । श्वामृत इति श्वा-

नामलोके न प्रचरेत् । गौर्जात इति सर्वं गोभूत-मनवकाशं स्यात् । अत एवाकृतिपक्षविरुद्धा अद्धाबुद्धिसमिद्धं प्रसिद्धं सिद्धान्तमिमं प्रतिबुद्धाः बौद्धा व्यक्तं व्यक्तिवादिनः एनां रुचिरां गिरं सुचिरं समूचिरे ।

"नायाति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसन सन्ततिः ।। इति ।

अस्ति खल्वपि वैरुप्यं गौश्च गौश्च खण्डो मुण्ड इति । तथा च विग्रहः । द्रव्यं पदार्थं मत्वैव एष विग्रह उपपद्यते गौश्च गौश्चेति । व्यर्थेषु च मुक्तसंशयं द्रव्यपदार्थवद् आकृतिपदार्थेऽपि विभिन्नार्थेषु शब्देषु एकशेषो वक्तव्यो भवति । अक्षाः पादाः माषा इति । एवं षड्भिः सप्तभिर्वा हेतुभिर्द्रव्यपदार्थ : साधितो भवति । यद्यपि आनन्त्यात् व्यभिचाराच्च द्रव्ये संकेतग्रहो न युज्यते तथापि द्रव्यसहचारिता जातिः सर्वेषामर्थानां प्रवृत्तिनिमित्तं द्रष्टव्यम् । तेनोक्ता दोषानवकाशः । तस्मात् प्रत्यक्षानुमानागम युक्तिप्रयुक्तिभिः सुष्ठूपपादितौ जातिव्यक्ती इति उभावपि पक्षौ लक्ष्यानुरोधाद् व्यवस्थापिताविति अनुच्चावचं वचः—प्रोच्य विरमामीत्योम् शम् ।।

# सेव्यतां कालिदासः

लेखकः——श्री रामचन्द्रः त्यागी संस्कृतविभागाध्यक्षः गवर्मेन्ट कालेज सीकरः

( २१ जनवरी १९६५ को जयपुर रवीन्द्र रङ्गमञ्च पर प्रदेशीय कालिदासजयन्ती समारोह के कवि-सम्मेलन में की गई व सुनाई गई समस्या—पूर्ति )

भावैरार्द्रं धृतिनतिरतिस्नेहदाक्षिण्यरम्यैर्मेघं सृष्ट्वा ललितकवितायामभूद् यो विधाता ।
मञ्ज्वाः शैल्याः, पुनरपि सखे, यो हि दूतोस्ति लोके देशस्यास्य प्रतियुगमसौ सेव्यतां कालिदासः ।।

\+ \+ \+

यस्य ख्यातिः प्रसरति जने यावती तावदेव भूमेरस्या विकसति यशोवारिजं सौरभं च ।
घ्रात्वा घ्रात्वा भुवि नरगिरो दोहदं पूरयन्ति पुण्यश्लोकः कविकुलगुरुः सेव्यतां कालिदासः ।।



# वेदस्यापौरुषेयत्वं स्वतः प्रामाण्यञ्च

श्री पं० जयदत्त: शास्त्री, प्राव्याकरणाचार्यः लखनऊ

सुप्रतिपादितोऽप्ययं विषयोऽस्माकं पूर्वजैर्मुन्यृषिभिराचार्यैश्चेदानीं विप्रतिपन्नबुद्धीनां पाश्चात्यप्रचलितशिक्षापद्धतिशिक्षितानामैतद्देशिकानां वैदेशिकानां च जनानां कृते लेलिख्यते। कियन्तोऽद्यात्र भूमण्डले विद्वांसो येषां वेदस्यापौरुषेयत्वे स्वतः प्रामाण्ये च विश्वासो वरीवर्ति ? अस्योत्तरम्–स्तोका एव। पक्षान्तरे पुनः बहवो मनुष्याः सुविख्याता येषामियमेव धारणाऽस्ति यच्छब्दवत्वात् सर्वथा पौरुषेया एव वेदाः, प्रामाण्यं च तेषां प्रत्यक्षादिप्रमाणान्तराधीनमेव न तु निरपेक्षम्। यतो हि साधारणो जनो गतानुगतिको भवति, उक्तं चात्र तत्त्वदर्शिभिः—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

इति। 'महाजनो येन गतः स पन्थाः' इति च। अतः स्वाभाविकमिवैतद् यद् यः पन्थाः प्रथितयशस्कैरनल्पैर्जनैराश्रितोऽङ्गीकृतश्चाधुना साधीयस्त्वेन तमन्ये साधारणा जना अनुगच्छेयुस्तस्यैव च प्रामाण्यमनुमन्येरन् नेतरेस्य। एतादृश्यां स्थितौ तेषां वेदप्रामाण्याऽपौरुषेयत्ववादिनां विदुषामिदं मुख्यं कर्त्तव्यं संजायते यत्तैस्तादृशः प्रयासः करणीयो येनेतरे मनुष्या ये वेदेष्वीश्वरे वा न विश्वसन्ति ते दुर्बुद्धिं दुराग्रहं च विहाय तयोः सत्यतां प्रतिपद्येरन् स्वहृदये च तयोरुपरि दृढं विश्वासं जनयेयुः। ननु किमस्य प्रयोजनमिति ? सर्वेषां नरतनुधारिणामैहिकपारमार्थिकसुखोपलब्धिरित्येव। तथाहि भगवान् मनुः——

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥
इति।

अन्योऽप्यास्तिकधुरंधरः कश्चिदाह——

श्रुतिप्रमाणैकमतेः स्वधर्मनिष्ठा
तयैवाऽऽत्मविशुद्धिरस्य।
विशुद्धबुद्धेः परमात्मवेदनं
तेनैव संसारसमूलनाशः ॥ इति।

तदत्र पूर्वं पूर्वपक्षतयेदानीन्तनानां वेदेश्वरयोर्विप्रतिपद्यमानानां जनानां मतान्युल्लिख्यन्ते। तानि प्रायेण वक्ष्यमाणानि——

(१) वेदोवर्णपदवाक्यरूपः। वर्णपदवाक्यानि च शब्दभेदाः। शब्दस्तु वक्तुः प्रयत्नविशेषात् ताल्वादिस्थानेभ्य उत्पद्यत उच्चारणानन्तरं च विनश्यति। अतो हेतोरनित्य एव सः। एवं वेदोऽपि शब्दवत्वादनित्य एव। तथा हि साध्वेवोक्तं केनचित्——

ताल्वादिजन्मा ननु वर्णवर्गो
वर्णात्मको वेद इति स्फुटं च।
पुंसश्च ताल्वादि ततः कथं
स्यादपौरुषेयोऽयमिति प्रतीतिः ॥
इति।

(२) प्रवृत्तेरिष्टसाधनताधीसाध्यत्वाच्छब्दद्वारा यज्ञादिनैकप्रवृत्तिजनकस्य वेदस्य धीमत्कर्तृकत्वं सिद्धमेव। धीस्तु मनुष्यस्यैवातो मनुष्यकर्तृक एव वेदो नान्यकर्तृक इति नोपपद्यते नित्यत्वं वेदस्य।

(३) अनित्यो मनुष्यकर्तृकश्च वेदो वाक्यत्वान्महाभारतादिवाक्यवत्। युक्तं च सर्ववाक्यानां पौरुषेयत्वदर्शनाद् वेदवाक्यानामपि पौरुषेयत्वम्।

(४) वेदस्य मन्त्राणां त एवर्षयः प्रवक्तारो येषां नामानि तत्तत्सूक्ताध्यायानुवाकाद्युपक्रमेषु श्रूयन्ते। काठकपैप्पलादप्रभृतिशाखानां तु तत्तदृषिनाम्ना प्रसिद्धत्वादृषिकृतत्वं स्फुटतरमेव।

(५) अनर्थका अविस्पष्टार्था विरुद्धार्थाश्च मन्त्राः सन्ति । अस्य तूपोद्बलकं निरुक्तसंकलितं कौत्समतमप्यस्ति । तत्तु मनुष्यस्य भ्रम-प्रमादविप्रलिप्साददोषाविहीनत्वान्नासंभव - नीयमित्यापद्यत एव मनुष्यप्रणीतत्वं वेदानाम् ।

(६) 'प्रप्रायमग्निर्भरतस्य श्रृण्वे' 'संसमिद्युवसे वृषन्नग्ने०' 'उपोप मे परामृश०' 'किं नोदुदु हर्षसे दातवा उ' इत्येतेषु प्रादीनां यद् द्विर्वचनं तेनाऽतोऽन्यत् किं नाम बोधितं स्याद् यन्मंत्रकारः कश्चिदल्पज्ञ एवास्तीति । 'प्रसमुपोदः पादपूरणे' इत्येतत् पाणिनीयं सूत्रमेवाऽत्र मानम् ।

(७) इन्द्रवृत्रयोर्यमयम्योर्गोतमाऽहिल्ययोश्च संवादा वेदेषूपलभ्यमाना इदमेव गमयन्ति यन्मनुष्यादीनामितिहास एव तत्र तत्र मन्त्रेषु निगदितो वर्तते । अस्मादपि हेतोरनित्या वेदा इति ।

एवं वेदे यानि यानीश्वरप्रतिपादकानि वाक्यानि सन्ति तान्यपि स्वयमस्पष्टत्वान्मनुष्योक्तत्वात् परतःप्रामाण्याच्च तस्य न सत्यत्वेन प्रत्येतुं शक्यानि । अत एव तैर्वाक्यैरीश्वरसिद्धिरपि न शक्या भवितुमिति पूर्वपक्षः ।

अथैतेषां प्रति वचनानि दातुं प्रयासो विधीयते यानि तैर्जनैर्विशेषतो विचारणीयानि ये वेदं पौरुषेयमर्थान् मनुष्यकृतमेव मन्यन्ते तत्प्रामाण्ये च संशेरते ।

(१) सत्यं वर्णपदवाक्यरूपो वेदः । वर्णपदवाक्यानां चोच्चारणे मनुष्य एव समर्थः । परं नैतावता शब्दस्य वेदस्य वाऽनित्यत्वमुपपद्यते । कुत एतत् ? नित्यत्वाच्छब्दस्य ननु शब्दस्योत्पन्नप्रध्वंसित्वादनित्यत्वमेव युक्तं तत्कथं भवता नित्यत्वं साध्यते ? न ब्रूमोऽनित्यः शब्दस्तस्य नित्यत्वमस्माभिरुपपाद्यत इति । किन्तु नित्य एव शब्दस्तत्त्वतोऽस्ति, तस्यार्थोऽपि नित्यस्तयोरुभयोः सम्बन्धोऽपि । तदेव नित्यत्वं व्युत्पाद्यते । शब्दार्थसम्बन्धनित्यत्वप्रतिपादने मीमांसकैर्वैयाकरणैश्च विहित एव प्रयासः स्वस्वमतिशक्तिभिः । अत्र तु समासतस्तन्नित्यत्वसाधकयुक्तयः प्रदर्श्यन्ते । तदत्र ये जना ध्वनिं नादं वा शब्दत्वेन प्रतिपन्नास्ते भ्रान्ताः । शब्दस्योच्चारणे कर्त्तव्ये यो ध्वनिरुत्पद्यतेऽनन्तरं चोच्चारणाद् विनश्यति स भवतु नामानित्यः शब्दस्तु प्रागपि पश्चादप्युच्चारणात् तिष्ठत्येवेति न स उत्पत्तिविनाशवान् । ननु कीदृग्रूपेण कुत्र च स तिष्ठति ? सूक्ष्मरूपेण ज्ञानमध्ये तिष्ठति । कस्य ज्ञानमध्ये ? सर्वगतस्य परमात्मनो मनुष्यादीनाञ्च जीवानाम् । किमत्र प्रमाणमिति ? सद्युक्तय एव । परमात्मनो ज्ञानं तावत् त्रिकालाऽबाधितं भवत्यतथात्वेऽसर्वज्ञत्वापत्तेः । नामरूपात्मकमिदं जगद्वा स्याल्लयो वाऽस्य सर्वस्य स्यात् परमात्मनो ज्ञाने न काचित् क्षतिर्वृद्धिर्वा संजायते । मनुष्यादीनां पुनरात्मनि परापश्यन्तीमध्यमावैखरीरूपा वाचो वर्तन्ते । तासु वैखरी नाम व्यक्ता वागस्ति । शिष्टास्तिस्रोऽव्यक्तास्ताश्च पूर्वं पूर्वं क्रमेण सूक्ष्मसूक्ष्मतरसूक्ष्मतमरूपा । तासामेव वैयाकरणैः 'स्फोट' इति नाम कृतमस्ति । स्फुटत्यर्थोऽस्मादिति तद् व्युत्पत्तेः शब्द एव सः । अथापि प्राक्तनैराचार्यैः शब्दस्य लक्षणममुना प्रकारेणास्त्युपवर्णितम् —— "श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः । ... नित्याः शब्दाः । नित्येषु शब्देषु कूटस्थैरवि-

चालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारि-भिः ।" इति । स्पष्टमनेन यच्छब्दस्य वर्ण-पदवाक्यादिनाऽभिव्यक्तिर्जायते न तूत्पादः । अभिव्यक्त्या पुनः सत एव—विद्यमानस्यैव—वस्तुनः । प्राकट्यं गम्यते न त्वसत उत्पत्ति-रिति । अत उपपन्नं शब्दस्य नित्यत्वम् । नन्वात्मना सह कथं शब्दस्य सम्बन्ध इति चेन्निगदितोत्तरं तदपि पूर्वाचार्यैस्तद्यथा—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्
मारुतस्तूरसि चरन्मन्दं जनयति स्वरम् ।।

इति । अथ ज्ञाने कथं शब्दहेतुत्वमिति ? उच्यते — शब्देनार्थोऽभिधेयो भवति तेन शब्दं द्वारीकृत्यैव नामजात्यादियोजनायुक्तस्यार्थस्य ज्ञानं जायते न त्वन्यथा । उक्तं चैतन् महावै-याकरणेन तत्रभवता भर्तृहरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।

इति । अथापीदमत्राऽवधेयं यदि शब्दार्थ-सम्बन्धनित्यता न स्यात् तदा केनचिद् गौरित्युक्ते पार्श्वस्थस्य श्रोतुः सास्नादि-मतोऽर्थस्यावबोधो न स्यात्, । शब्दार्थ-सम्बन्धनित्यत्वपक्ष एव ह्येतादृशबोधः संभ-वति नान्यतरत्पक्षे । ननु बालानामवि-दितार्थवतां वयस्कानां च सास्नादिमतोऽर्थ-स्य बोधः सत्यपि गोपदश्रवणे कस्मान्न भव-तीति ? अयं शब्दोऽस्यार्थस्य वाचक इति ज्ञानविरहात् । तच्च ज्ञानं गुरोः सकाशा-देवार्जितुं शक्यम् । तेनापि गुरुणाऽन्यस्मात् पूर्वकालवर्तिनो गुरोस्तेनाऽप्यपरस्मादिति गुरुपरम्परायामीश्वर एव प्रजानामादिमो गुरुरायाति । स एष अर्थः साध्वेव प्रति-पादितो योगदर्शने महर्षिणा पतञ्जलिना—"पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्" इत्यत्र सूत्रे । इदमप्यत्रावधारणीयं यदन्धकारपूर्ण-स्थले विद्यमानस्य घटस्य यथा दीपादिना विना दर्शनं न सम्भवति तद्वदेवाऽऽत्मनि विद्यमानानां नैकज्ञानानां प्रकाशोऽपि गुरू-पदेशमन्तरेण न खलु भवति । "यस्मिन्नृचः साम यजूꣳषि यस्मिन् प्रतिष्ठिता रथना-भाविवाराः - यस्मिंश्चित्तꣳसर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु" ।। इति मंत्र-वर्णोऽप्यस्मिन्नर्थे मानमस्तीति वेदितव्यम् ।

(२) सत्यं प्रवृत्तिर्निमिष्टसाधनता धीसाध्या, परं वेदोपदेशप्रवृत्तावीश्वर एव समर्थो नान्ये मनुष्यादयस्तेषां तत्राऽसामर्थ्यात् । कथमिति ? ईश्वरस्य सर्वज्ञत्वात् सर्वशक्तिमत्त्वा-च्चोपयुक्तमेव वेदाऽऽविर्भावनसामर्थ्यं सूर्य्या-दिविचित्रलोकरचनसामर्थ्यवद् । मनुष्याणा-मल्पज्ञत्वादसर्वशक्तिमत्वाच्च नास्ति सामर्थ्यं सर्वज्ञगुणान्वितस्य वेदस्य रचने । अतो युक्त-मेवाऽभिहितं भगवता शंकराचार्येण—"महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहि-तस्य प्रदीपवत्सर्वार्थविद्योतिनः सर्वज्ञकल्प-स्य योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्र-स्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्व-ज्ञादन्यतः सम्भवोऽस्ति । इति । अपरञ्च मनुष्यादीनां मध्ये कश्चिदपि पुरुषो वेदस्य रचयितृत्वेन नास्ति खलु प्रसिद्धः । यत्र कुत्रापि वेदव्यासादीनां तत्कर्तृत्वमुक्तं तद् वेदविरुद्धत्वादश्रद्धेयमेवेति दिक् ।

(३) महाभारतरघुवंशादिवाक्यवद् वेदवाक्या-न्यपि मनुष्योक्तानि स्युरित्यसम्यगिदमुच्यते अलौकिकवाक्यानां वेदानां लौकिकवाक्यैः

सहातुल्यत्वात्। अपि चादृष्टार्थस्यापि प्रकाशकत्वान्न शक्यं पुरुषकर्तृत्वं वेदानामुपपादयितुम् अतीन्द्रियस्य पदार्थस्य पुरुषेण वर्णनाऽशक्यत्वात्। महाभारतादिवाक्यानि तु वेदमनुसृत्यैव दृष्टाऽदृष्टार्थप्रतिपादने समर्थानि न स्वातन्त्र्येणेत्यतो न शक्यमुभयविधवाक्यानां सामञ्जस्यं कर्तुं न चैतस्यां स्थितौ वेदानां मनुष्यकर्तृकत्वोपपत्तिः।

(४) 'ऋषयो मन्त्रकर्त्तारः' इति यदुक्तं तदप्यसम्यक्। तत्त्वतो मन्त्राणां द्रष्टारस्ते बभूवुर्यथोचुस्तत्रभवन्तो यास्काचार्याः—'साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरि' ति, 'ऋषयो मन्त्रदृष्टयः' इति च। यत्रापि क्वचिन्मन्त्रकर्तृत्वमुक्तं तेषां तत्रापि करोतिर्दर्शनार्थो न तु करणार्थ इत्याहुर्वेदभाष्यकृतः सायणाचार्यप्रभृतयोऽपि। तदेतद् धातूनामनेकार्थत्वादुपपन्नमेवेति नतरां सिद्धान्तहानिः। वेदस्य शाखानां काठकादिनामापि तत्तदृषिकृतप्रवचनवशात् प्रसिद्धमस्ति। उक्तं चैतद् 'आख्या प्रवचनात्' इत्यत्र सूत्रे (मू०पी० १-१-३०) महर्षिणा जैमिनिना। शास्त्रदीपिकाकारेण प्रकारान्तरेणापीदं सूत्रं व्याख्यायते। तद्यथा—'यद्वा नायं पुरुषविशेषवचनः कठशब्दः किन्तु नित्यस्य चरणविशेषस्यैवेय सज्ञा तच्चरणैः पुरुषैः परम्परयाऽधीयमाना शाखा काठकशब्देनाऽभिधीयते' इति। समीचीनश्चायमप्यर्थः।

(५) न खलु कश्चिदपि वेदमन्त्रोऽनर्थकः। नैव वा क्वचिन्मन्त्राणां विरुद्धार्थताऽस्ति। यदि कस्यचिदेष्वानर्थक्यमर्थवैपरीत्यं वा प्रतीतं स्यान्न तेन सर्वेषां मन्त्रार्थं बुभुत्सूनां तादृश्येव प्रतीतिर्भवतीति नियमः शक्यते कर्त्तुम्। यो ह्यन्यथार्थं मन्त्रं प्रतिपद्येत तत्र प्रत्येतुरेव दोषः कारणं स्यान्न तु मन्त्रदोषो 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यती' ति न्यायात्। यत्त्वत्र कौत्सस्य मतमुदाह्रियते तदप्यसारं निरुक्तकारेण समूलं निरस्तत्वात्तस्य। 'बुद्धिपूर्वा वाक्यकृतिर्वेदे' इत्याद्यागमेनापि सुतरां बाधिता भवन्ति मन्त्राणामानर्थक्योद्भावका आक्षेपाः।

(६) 'प्रसमुपोद पादपूरणे' इत्येतत् पाणिनीयं सूत्रं विज्ञापयति यत् केनापि वेदे दृश्यमानस्य 'प्र' 'सम्' 'उप' 'उद्' इत्येतेषामुपसर्गाणां द्विर्वचनस्यानर्थक्यं न प्रत्येतव्यं प्रत्युत सार्थकत्वमेव प्रत्येतव्यम्। कृतद्विर्वचनैर्ह्येतैः पदैः पादपूरणं तत्र तत्र मन्त्रे प्रयोजनमस्ति। तत्र यद्यर्थवत्ता नाऽभविष्यत् तदोपदेष्टाऽल्पज्ञोऽभविष्यत्। विद्यते खल्वर्थवत्ताऽतो नास्त्यत्रविषये काचिद् दोषापत्तिरिति दिक्।

(७) इन्द्रवृत्राद्युपाख्यानानि सत्यान्येव। किन्तु तेषामर्थान्तरे नित्येऽर्थे योजना कर्तव्या न त्वनित्येऽर्थे। किमत्र मानमिति ? निरुक्तमैतरेयादीनि ब्राह्मणानि च तेषु हि ग्रन्थेषु मन्त्राणामुच्चावचा अभिप्राया ऋषिभिर्व्याख्याता विद्यन्ते। तद्यथेन्द्रवृत्रयुद्धस्यार्थं व्याचक्षाणा अत्र भवन्तो यास्काचार्या आहुः— 'अपां ज्योतिषश्च मिश्रीभावकर्मणोर्वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ती' ति। एवमेव गौतमाऽहिल्ययोराख्यानस्य — गोतमो नाम चन्द्रस्तस्य पत्नी अहिल्या नाम्नी रात्रिरस्ति तस्याश्च रात्रेर्जरयिता जारः सूर्यस्तदागमने हि रात्रिर्विनश्यतीत्येषोऽर्थः शतपथब्राह्मणे व्याख्यातो विद्यते। एवमेवान्यान्यप्येतादृशान्याख्यानानि तत्र तत्र ग्रन्थेषु व्याख्यातानि सन्ति तदन्वेषणार्थं जिज्ञासुभिर्यत्नो विधेयः। एतावता असिद्धमेव मन्त्रेष्वनि-

त्येतिहासोपवर्णनमित्यलमतिविस्तरेण बुद्धिमद्वर्य्येषु ।

अथातो वेदस्येश्वरप्रकाशकत्वे नित्यत्वे चान्तः प्रमाणानि वेदेभ्य एव समुद्धृत्य लिख्यन्ते । तानि पाठका ज्ञातुमर्हन्ति––

(अ) तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥
( ऋग्वेदः १०-९०-९ ) ।

(ब) तस्मादृचोऽपातक्षन् यजुस्तस्मादपाकषन् ।
सामानि यस्य लोभान्यथर्वांगिरसो मुखम् ॥
( अथर्ववेदः १०-७-२० )

एतौ मन्त्रौ स्फुटं प्रतिपादयतो यदृग्यजुःसामाथर्वणाभिधः समस्तो वेदराशिः पूजनीयतमाद् देवदेवात् परमेश्वरादेव निर्बभौ प्रकाशमागत इति ।

(क) बृहस्पते प्रथमं वाचो अग्रं
यत्प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत्
प्रेणा तदेषां निहितं गुहाविः ॥
( ऋ. १०।७१।१ )

(ख) यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् । ( ऋ. १०।७१।३ )

(ग) वाचा विरूप नित्यया ( ऋ० ६।५।२५ )

(घ) अपक्रामन् पौरुषेयाद् गृणानो दैव्यं वचः ।
प्रणीतिरभ्यावर्तस्व विश्वेभिः सखिभिः सह॥
( अथर्ववेद )

(ङ) अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् । ( ऋ. १०।४९ )

(च) पश्य देवस्य काव्यं न ममार न जीर्यति ।
( अथर्ववेद )

(छ) वागक्षरं प्रथमजा ऋतस्य
वेदानां माताऽमृतस्य नाभिः ।
सा नो जुषाणोपयज्ञमागादवन्ती
देवी सुहवा मेऽस्तु ॥ ( तै० ब्रा०२।१।५ )

(ज) यथातथ्यतोऽर्थान् व्यदधाच्छाश्वतींभ्यः समाभ्यः ( यजुर्वेद ४०।८ )

इत्यादयो मन्त्रा वेदानामीश्वरोक्तत्वं नित्यत्वञ्च वर्णयन्त्येव । ईश्वरोक्तत्वाच्च स्वतः प्रामाण्यमपि वेदानां सुसिद्धम् । किञ्च, मन्वादिभिर्धर्मशास्त्रकारैर्व्यासकपिलादिभिश्च दर्शनकारैस्तत्त्वदृग्भिरुपनिषत्कारैश्च महर्षिभिः सर्वैरेकस्वरेण जोघुष्यते यद् धर्माऽधर्मविनिर्णये संसारयात्रायामदृष्टे च सर्वस्मिन् विषये सूर्यवत् स्वतः प्रमाणमीश्वरनिश्वसितो वेद एव सर्वशास्त्रेषु शेखरायते । तस्माद् वेदस्य नित्यत्वे प्रामाण्ये च नास्ति संशयलेशावकाश, इत्येवमेव निश्चेतव्यं सर्वैर्बुद्धिमद्भिर्विपश्चितैः । तथा च 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यागमोपि धर्मजिज्ञासमानानां कर्णकुहरेषु भृशं ध्वनयन्नुक्तसिद्धान्तमूलक एवेत्यवसेयम् ।



# शिक्षा, शास्त्रञ्च

लेखकः श्री श्रीनिवास शास्त्रीः

श्री वाणीवेश्मनिर्देशकः, ( कमरा डी–६ ) ५४ इजरा स्ट्रीट, कलकत्ता १

महानविनाशी खल्वालोकोऽज्ञानान्धतमसप्रमाथि शास्त्रम् । बन्ध्वविभाज्यमहार्यं धनम्, कर्त्तव्याकर्त्तव्ये शात्रवापकाराय चाकुण्ठितधारं शस्त्रम्, सत्पथप्रवर्त्तक आपद्गतस्याप्यनुयायी परमः सखा, अविवेकव्याधेर्महौषधम्, यशसो धर्मस्य विजयस्य भूतेरैश्वर्यस्य च निधानम्, व्यसनपङ्कनिमग्नानां परमुद्धारकं शास्त्रं नाम । शास्त्रेण वयं दूरस्थेनालभ्यदर्शनेन च सङ्गन्तुं शक्ताः । सङ्गमश्चैष विचारेण । एवं मृतस्यापि विचारा ज्ञातुं शक्याः शास्त्रेणाविसंवादिनः । दूरस्थलेखकसमागमेच्छया गतानामप्यस्माकं तेन साक्षात्कारो भवेन्नवा ? साक्षाद् भूतेऽपि दैर्घकालिक आलापो भवेन्नवा परं शास्त्रं यथेच्छोपभोगम् ।

शिक्षायाः स्वरूपप्रतिपत्तौ विदुषां वैमत्यम् । केचन वदन्ति, स्वार्थसम्पादनशक्तेरर्जनं शिक्षा । परे योग्यतमजीवनविधायकं ज्ञानं लोकव्यवहारज्ञानं वा शिक्षा । परम्, वस्तुतो जीवनस्य स्वरूपज्ञानं शिक्षा । मानवः शिक्षयैव जीवन-प्रासादं स्थिरं निर्मलं निर्माति लोकानुकरणीयम् । शिक्षा विषमास्ववस्थासु सन्देहसन्दोहमोहभयेष्वालोक आशा विश्वासयोर्मूलञ्च । शिक्षितः साज्ञो विश्वस्तश्च । दैन्यं हैन्यं मनोदौर्बल्यं नाशयन्ती विषमायां सङ्घर्षभुवि मर्त्यभुवि साफल्यं साधयन्ती निर्बाधचरित्रोदया शिक्षा । तया शिक्षया प्रगतिः । सदसद्विवेकनिपुण सुधीरेव साधारणं जनं हित्वा पुरः प्रयाति, त्वरं गामी तुरगोऽशीघ्रगामिनमिव । असुरूपः शिक्षया दर्शनीयो भवति, अधिकारैः पुमानिव शीलशाली ।

अविद्योऽसभ्यः कार्येऽकार्ये धर्मेऽधर्मे च विवेकविहीनः । जलेन रहितं सरः, पुष्पलताविहीनमुद्यानम्, नक्षत्रैर्विना नभश्च शिक्षाविहीनं वपुर्विरहितमिव प्राणैः । जगद्रणक्षेत्रेऽशिक्षितोऽनायुधो योद्धेव । शाश्वतसुखं मोक्षो ज्ञानेनैव ज्ञानेन बाल्मीकिर्व्यासः कालिदासाद्याश्चामरत्वमध्यगमन् ।

जीविकायै शिक्षामाददानाः ज्ञानपण्या वणिजः किल । परमद्य निपीतश्रुततोयाः शुष्काः सारस्वत ह्रदाः । सर्वत्र विलोक्यते ज्ञानपण्यमेव । भारतीयसंस्कारे विदुषो महत्त्वम् । परं तादृशो विदुषो नहि, येन षट्शास्त्राणि साङ्गो वेदश्चाधीतः परं कोऽपि पाठितो न । विद्वान् स एव मतः, वैदुष्यं तस्यैव प्रचरति, येन बहवो बुधी कृताः । एवं चिकित्सकोऽपि यो लोकस्य सर्वाधिकस्त्राता सेवकश्च । तद्वद्धनी । संग्राहको नात्र मतो वरीयान् गरीयान् वा । स मतो वरीयान् गरीयान् वा, यस्य धनं सर्वाधिकमुपयुक्तम् । भोजसमा असंख्येया आसन् राजानः परं केऽपि न स्मर्यन्ते, अदानशीलाः । भामासाह समा अपि बहवो व्यापारिणः परं सर्वे मृताः । दानिनस्तु कल्पान्तस्थायिनः ।

दानेषु च शिक्षादानं महत्तमम् ।

# चन्द्रिका

श्री रत्नाकरः शास्त्रीः, एम. ए.,

चन्द्रात् स्यन्दति चन्द्रिका शुचितमा
प्राचीं प्रयाताद्यतः
या विद्याधरशुद्धबोधधवला
बुद्धा सुरेन्द्रादिभिः ।
रुद्धा मौनमुनीश्वरैर्मनसि च
प्राणान् पुनाना पुनः
पुण्यानां गुरु पुण्यपावनतरै-
र्यत्नैश्च रत्नाकरात् ॥

प्राची दिशा की ओर अग्रसर सागर समुद्भूत चन्द्र से चन्द्रिका जिस प्रकार देवता और इन्द्र आदि के द्वारा स्तुत और मन ही मन बड़े-बड़े मुनीश्वरों से भी आदृत हुई पुण्यात्माओं के पुण्यों से ही उपलब्ध होती है उसी प्रकार यह (चन्द्रिका नामक गुरुकुल कांगड़ी विश्वविद्यालय के विद्यालय विभाग की पत्रिका) मुख्याध्यापक मुनीश्वरदेव और ब्र. विद्याधर तथा सुरेन्द्रादि दशम कक्षा के छात्रों और संस्कृत के अध्यापक श्री रत्नाकर जी के सत् प्रयत्नों से प्राप्त होती है ।

या चेतांसि चिचीषया निविशते
विश्वात्मनां स्वात्मनाम्
या दिव्यांशनिदर्शनाय विदुषां
वैदुष्यधारा धृता ।
यानल्पा कविकल्पना सुकलिका
कल्पाकला मालिनी
सा सर्वत्र चकास्तु चान्द्र-हृदया
सान्द्रा सुधा चन्द्रिका ॥

जो विश्वात्मा पुरुषों के एकीभावार्थ हृदयों को आवर्जित करती है, जो अमूर्त विद्वत्ता सी दिव्यांश स्वरूप को धारण किए हुए हैं, जो कवि-गत अनल्प कल्पनारूप सुमन-कलिका सी कलाओं की मूर्तिमाला है, वह यह सान्द्र-सुधा की चन्द्रिका सरीखी **चन्द्रिका-पत्रिका** सुशोभित होती है ।

या पिष्टा परिपाटिभिर्घटयितुं
पाटीर पिष्ट्या दृढम्
योत्फुल्लाखिलसिद्धयेऽद्य विफलान्
साफल्य मानीय नः ।
दुर्बीजानि जवेन या भवभवा-
न्यज्ञान् जन्मानि च
निर्भिद्योच्चित रोचिर्भिविरचिता
चित्तद्रवा **चन्द्रिका** ॥

जो रगड़े हुए चन्दन की पिष्टी के समान स्व-रूप निर्देशिका है, ( इस चन्द्रिका-पत्रिका में भी समस्त विचार तपे और मंजे हुए मिलेंगे, चांदनी भी श्वेतसाम्य से तद्गुण दर्शिका है ) जो हम सबको सफलता की ओर लाकर पूर्ण सिद्धि के लिए फूली नहीं समा रही है, जो जन्मान्तर के अज्ञान-रूप दुर्बीजों को वेग-पूर्वक ध्वस्त करके अपनी विशिष्ट कान्तियों से जन्मी है, वही चित्त को द्रवित करने वाली यह **चन्द्रिका** है ।

चन्द्रो यत्र विचारचारुरचना
वाचामृतं चन्दति
प्राचीप्राच्यविपश्चितां विचरतां
शास्त्रार्थचिन्ता रुचौ ।

राका बोध सुधा निधिर्बुधगणा
गायन्ति यस्या गुणान्
तस्यां चिन्तनचातुरी शुचितरा
चेतोहरा—चन्द्रिका ॥

जहां सुन्दर विचारों की रचनारूप वाणी के अमृत का स्वरूप-चन्द्र शोभा दे रहा है, जहां शास्त्रों के गूढ़तत्त्व में रुचि रखने वाले प्राचीन विद्वान ही प्राची दिशा हैं, जहां शास्त्र तत्त्वावबोध ही पूर्णिमा है, विद्वानों का समुदाय जिसके गुण गारहा है, उसी प्राची दिशा की पूर्णिमा के पूर्णचन्द्र की चित्त हरने वाली यह **चन्द्रिका** है।

गाहन्तां गुरवो विशेष गुरुता-
मादाय त्वक्त्वापि ताम्
सेवन्तां सुखिनः स्ववस्तुनिबहं
शिष्याश्च स्वेच्छाहृताः।

एधन्तां विविधा बुधाः सुमनसां
भावेषु नित्यादृताः
सैषा चारु चकास्ति दिव्यरचना
चेतःसु नश्चन्द्रिका ॥

गुरुजन या बड़े बूढ़े अपनी विशेष गुरुता= गुण-ग्राहिता को लेकर और दूसरी विशेष गुरुता भारीपन=नाराजगी को छोड़कर (क्योंकि पत्रिका सम्पादन में कहीं स्खलन भी सम्भव है) इसका अवलोकन करें अर्थात् आशीर्वाद दें। शिष्य जन अपनी-अपनी प्रियवस्तु अपनी इच्छानुसार ग्रहण करें। विद्वज्जन अपने शुद्ध हृदयों से इसके प्रत्येक भावों में समृद्ध हों=आनन्दित हों। क्योंकि ईश्वरीय दिव्य रचना चन्द्र, चन्द्रिका सरीखी ही यह **चन्द्रिका** भी चमक रही है।

# पत्रिका-प्रशस्तिः

श्री स्वामीनाथ पाण्डेयः (व्याख्याता), मु. पो. सिंहपुरम्, जि. नरसिंहपुरम्

सुशिक्षया तोष-सुशील-वर्धिनी, प्रसाद-दात्री नयनातिकर्षिणी।
गुरुत्व-गन्त्री हि भवेत्तु पत्रिका, सदैव लोकेषु महत्तया गिरः ॥१॥
प्राण-प्रदा पूत-विचार-वर्षिणी, प्रिया प्रियाणां सुख-शान्ति-रक्षिणी।
भवेज्जगत्यामखिलोदया शुभा, सदैव लोकेषु महत्तया गिरः ॥२॥

# अभिभाषणम्

भाषणकर्त्ता श्री डा० सूर्यकान्तः, संस्कृत विभागाध्यक्षः अलीगढ़-मुस्लिम यूनिवर्सिटी
( प्रयागविश्वसंस्कृतसम्मेलनावसरे प्रदत्तम् )

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधिवाचि ।।

महामहिम राज्यपाल ! विगतकल्मषाः संन्यासिनः ! भगिन्यो भ्रातरश्च ! ऋग्वेदीयोऽयं मन्त्र उपदिशति यद् यस्मिन् काले मनीषिणः आर्या देववाणीं व्याकरणरूपेण तितउना संस्कुर्वन्तः एतामौचित्येन व्यवहरन्ति तदा सखायः आर्याः सख्यस्य यथार्थरूपमभिजानन्ति, एतेषां वाचि च भद्रा लक्ष्मीः संपुटिता भवति अर्थात् तदा लक्ष्मीसरस्वत्योरभिरामः संगमो भवति राष्ट्रं च सर्वमुखमभ्युदयं प्राप्नोति ।

अयं मन्त्रः आर्याणां समस्तमितिहासक्रममस्माकं समक्षे संपुटयति । निभालयन्तु तत्रभवन्तः यद् यदा यदा अस्माभिः वेदवाणी उचितं समादृता तदा तदैवास्माकं राष्ट्रमभ्युदयमन्वभुङ्क्त, अस्माकं च सर्वाङ्गीणा समुन्नतिर्जाता ।

आसीदिदमेतादृशं वैदिके युगे यदा मन्त्राणां विषये अस्माकमियं धारणासीत्—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ।।

यदा चात्र गृहे-गृहे काठकं कालापकं च प्रववृते, अहीनाः पाक्षिकाः, मासिकाः, संवत्सरीणाश्च यज्ञाः समुचितमुच्चारितैर्मन्त्रैरकारिषत, यथाविधि विद्याध्ययनं चास्माकं प्रमुखो धर्म आसीत् । तदा भारतं देशदेशान्तराणां भरणात् तथ्यतो भारतमासीत्, वयं च प्रवृत्तिपथमनुसरन्तो यथार्थतः आर्या आस्म, अशेषेऽपि भरतखण्डे अस्माकं प्रगतिरबाधासीत्, कतिपयैरेव च वर्षैरस्माभिः अखिलेऽपि देशे वैदिकसंस्कृतिः प्रसारितासीत् ।

परं यदैव वयं प्रमादोपहता भूत्वा निष्फलायां पाखण्डमरीचिकायां कांदिशीका भूत्वा देववाण्या महत्त्वमवधीरयामासिम तदैवास्मिन् देशे बौद्धानामवसादकः समुद्घोषः समुदतिष्ठत अयं देशश्च पारतन्त्र्ये अवससाद । तस्मिन्नेव युगे ग्रीसदेशीयाः, पारसीकाः, शकाः, हूणाश्चेमं देशं समाचक्रमुः । तेषामाक्रमणस्येतिहासः तस्य सुदुःसहाः परिणामाश्च नाज्ञातास्तत्रभवताम् ।

सौभाग्याद् गुप्तसाम्राज्ये पुनरियं देववाणी समुचितां पूजामालेभे; फलतः अस्माकं राष्ट्रमपि कमप्यभूतपूर्वमुत्कर्षमवाप । यतो हि गुप्तकाले सर्वेष्वपि प्रदेशेषु, सर्वेषु च क्षेत्रेषु भारतं कामप्यपूर्वामभिख्यामवाप, कंचिदश्रुतपूर्वं चाभ्युदयमनुबभूव ।

अतीते गुप्तयुगे संस्कृतं पुनर्ह्रासमापेदे; अस्माकमितिहासश्च तिमिरापहतो बभूव । श्रीहर्षः पुनरिमं देशं नानाविधद्वन्द्वसागरादुद्धृत्य संस्कृतस्य गुणगौरवं ख्यापयामास । हर्षयुगस्य पश्चात् भारतस्येतिहासः चक्रनेमिक्रमेण उत्कर्षापकर्षावनुबभूव—एतमेव च क्रमं संस्कृतं वागप्यनुससार ।

मम कथनस्यायमाशयः यद् यदा यदास्माभिः देववाणी समुचितमर्चिता तदा तदैवास्माकं राष्ट्रमुन्नतिपदमालेभे; एतद् विरुद्धं यदा यदैवास्माभिः संस्कृतस्य अध्ययने गभीरं प्रमदितं तदा तदैवास्माकं सर्वतोमुखो विनिपातः समभवत् । यतो हि संस्कृतमस्य देशस्य सर्वस्वमस्माकं सभ्यतायाः संस्कृतेश्च प्राणभूतम् । पंजाबप्रदेशात् आसामपर्यन्तं, हिमालयात् कन्याकुमारीपर्यन्तं च नानाविधजातिभाषाधर्मादीनामुज्जृम्भमाणेऽपि प्रभूते भेदे

संस्कृतं सर्वत्राप्येकविधम्, अस्माकमेकस्याः संस्कृतेः एकस्य च राष्ट्रस्य व्यापकम्। यथेदमासीद् वैदिके युगे तथैवेदं प्रवर्ततेऽद्यापि इत्यत्र नास्ति कस्यापि संदेहलवः।

आंग्लशासकानां कूटनीतिवशात् अस्माकं प्रवर्तमाना स्वतन्त्रता सर्वतोमुखस्य विघटनस्य आधारशिलायामुदपद्यत; इयं भरतभूश्च द्विधा विभक्ताद्यापि खण्डनोद्भूतां कामप्यपूर्वां यातनामनुभवति। नूनमयं भरतभुवो विभागः अधुना नितान्तमनपवार्यः। परं तिष्ठतु तावदयमेवम्। नास्माकं मौलिका क्षतिरनेन। अस्माकमुदीयमानस्य क्लेशजातस्य मूलं तु अस्मत्कृतः प्रदेशादिविभागः अस्माकं सर्वतोमुखी विघटनप्रवृत्तिश्च।

निभालयन्तु तत्रभवन्तोऽवहितेन चेतसा-अधुना अस्मिन् देशे एकस्य धर्मस्य स्थापनमसंभवम्। नूनम् इस्लामेसाईधर्मौ अस्माकमेव पार्थक्यभावनादूषितया प्रवृत्त्यास्मिन् देशे चिरजीविनौ संजातौ। वर्तमानाः प्रदेशादिभेदा अपि अस्माभिरेव तत्तद्भाषाया आधारेण उद्भाविताः। ऐतेऽप्यधुना चिरजीविन एव। इत्थं नानाविधभेदविघटितेऽत्र भारते किं तत् मार्मिकं घटकं यद्वशात् अशेषो ऽप्ययं देशः आन्तरिकमैक्यमनुभवेत्। मन्ये एतत् घटकं संस्कृतमेव स्यात् नान्यत् किमपि।

अनुशील्यतां तावत् भारतीयसंविधानस्य हिन्दी-अनुवादः। नैकोऽपि विद्वानस्यां प्रभूतायां संसदि नं यथार्थतो व्याख्यातुं समर्थः स्यात्। कुतः? यतो हि तत्रत्या मार्मिकाः शब्दाः कृत्रिमाः, अवैज्ञानिकाः, अनौचित्यदोषदूषिताश्च। संविधानस्यानुवादस्तूपलक्षणमात्रम्। हिन्दीभाषाया इदं स्वैत्र रूपं तु पदे-पदे हिन्दीरसिकान् अधोमुखयति। भाषाशास्त्रमनधिजग्मुषामर्ध विदुषामनर्गलं विचेष्टितमेतां हिन्दीरमणीं कस्मिन् गर्तेऽवस्कन्दयेदिति चिन्तयत एव मम निशाः प्रयान्ति। अस्या अरुंतुदः परिपाकस्तु दृष्ट एव तत्र श्रीमद्भिरधुनैव मद्रासप्रदेशे। पदे पदे विस्खलन्ती, रोम्णि रोम्णि अनौचित्यलाञ्छितेयं हिन्दीरमणी देशमेतं कुत्र अवसादयेदिति चिन्त्यतामवहितेन चेतसा तत्र श्रीमद्भिः।

यद्यस्याः स्थानेऽद्यापि संस्कृतं राजभाषात्वेन स्वीक्रियेत तर्हि ध्रुवं स्यात् मौलिकं समाधानमस्माकं सर्वासामपि भाषासंबन्धिसमस्यानाम्। यतो हि संस्कृतं परिपक्वं, परिपूर्णं, सर्वस्मिन्नपि देशे समानरूपं च। मम कथनस्यायमाशयः यत् शासनेन समुद्भाविता हिन्दीभाषा क्रियापदानि परित्यज्य विशुद्धं संस्कृतमेवास्ति। परं यतः इयम् इत्थं संस्कृतभारावनतापि हिन्दी इति नाम्ना प्रख्यायते अहिन्दीभाषाभाषिणो जना न केवलमेतां तिरस्कुर्वन्ति अपितु अस्या नामोच्चारणमात्रेणैव उत्पतन्ति उपद्रवन्ति च यथा अधुनैव मद्रासप्रदेशे।

अतश्चिन्त्यतामस्याः समस्यायाः किमपि उचित समाधानम्। मम मते त्वस्याः समाधानस्य द्वौ कल्पौ। प्रथमस्तावत्—कल्प्यतामेतादृशी हिन्दीभाषा या न केवलं संस्कृतात् अपितु सर्वाभ्योऽपि प्रदेशभाषाभ्यः स्वशब्दराशिम् उचितेनानुपातेन संचिनुयात्। अनेन व्यापकेन वैज्ञानिकेन विधिना पोषं प्रापितैव हिन्दीभाषा राष्ट्रभाषा भवितुमर्हति यतो हि एतादृशी हिन्दी सर्वस्यापि राष्ट्रस्य, सर्वेषामपि प्रदेशानां शब्दान् उचितेनानुपातेन आत्मसात्कृत्य राष्ट्रस्य पृथुलं, सार्वदेशिक, सार्वधार्मिकं च रूपं प्राप्नुयात्।

द्वितीयः कल्पः-उद्भाव्यमानां संस्कृतनिष्ठां हिन्दीं परित्यज्य संस्कृतस्यैव राष्ट्रभाषात्वेन स्वीकरणम्। अयं कल्पः सर्वेषामपि प्रदेशानामादरमधिकुर्यादित्यस्ति मे द्रढीयान् विश्वासः।

अस्माकं राष्ट्रस्य वर्तमानानां समस्यानां मध्ये इयं भाषासमस्यैव सर्वतः प्रथमा। संस्कृतस्य राजभाषात्वेन स्वीकरणमेवास्याः श्रेष्ठं समाधानम्।

# प्राचीनशिक्षायाः स्वरूपं तदाधारश्च

( ले०—श्री धर्मदेवो वेदवाचस्पतिः गुरुकुल काङ्गड़ी )

आसीत् किल पुरा अस्मिन् भारते वर्षे साहित्ये, विज्ञाने, सामाजिकसंगठने, तत्त्वदर्शने, चिकित्साशास्त्रे, आध्यात्मविद्यायां, नृत्यगीतवादित्रचित्रादिषु विविधकलासु च सर्वतोमुखी सर्वाङ्गीणा अनुपमेया महती उन्नतिरित्यत्र नास्ति कस्यापि विपश्चितो विप्रतिपत्तिः । किमस्ति तस्या रहस्यमित्याकांक्षायां जगत्तत्वार्थविवेक एवेति ब्रूमः ।

को नामायं पुरुषः, कश्च पुमर्थः, कश्च तस्य सिद्ध्युपाय इति सर्वं विवेच्य प्रकृतिपुरुषतत्त्वार्थविवेकनिपुणैः शिक्षाविज्ञैः शिक्षासरणिः निर्धारिता । यथाऽस्मिन् महाप्रपञ्चे ब्रह्माण्डे 'इन्द्रो मायाभिः पुरुरूप ईयते' तथैवास्मिन् बुद्धीन्द्रियमनोयुक्ते शरीरे चिन्मय आत्मा स्वमायाभिः पुरुरूप ईयते । व्यष्टिसमष्टिरूपयोः पिण्डब्रह्माण्डयोरभेदात् देहस्था बुद्धिरपि सत्त्वरजस्तमोमयी ज्ञानलक्षणेन चैतन्येनाधिष्ठात्राऽधिष्ठिता सती सर्वान् भोगान् भुङ्क्ते, विदिततत्त्वार्था च ततो निवर्तते । गुणत्रययोगात् चैतन्य आत्माऽपि ज्ञानेच्छाकृतिमान् जायते । सत्त्वप्राधान्यात् अयमात्मा ज्ञानवान्, रजःप्राधान्यात् क्रियावान्, तमःप्राधान्याच्च इच्छावान् संपद्यते । एतेषां ज्ञानेच्छाकृतीनां (Knowledge, Action Will) वैषम्येनैव पुरुषभेदो व्यपदिश्यते । रजोगुणाधिष्ठितत्वात् 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' । परं तमःप्राधान्यात् केचित् स्वच्छन्दानुवर्तिनोऽविचारकारिणश्च भवन्ति । अपरे पुनः सत्वगुणप्राधान्यात् ज्ञानदीप्ता विवेकिनः सन्तः परमार्थं विदित्वा कर्मणि प्रवर्तन्ते । तेन ऐहिकायुष्मिकाभ्युदयं लभन्ते मोक्षसुखं वा सेवन्ते । चैतन्य आत्मा स्वतः प्रकाशवान् ज्ञानाधिष्ठानं च वर्तते । परं करणभूतायाः बुद्धेः त्रिगुणात्मकत्वात् अयमात्मा किमपि ज्ञातुमज्ञातुं वा प्रभवति । एतेषां गुणानां प्रभावादेव मूढक्षिप्तविक्षिप्तैकाग्रनिरुद्धा इति पञ्चविधा चित्तभूमय जायन्ते । तमोऽभिभवात् चित्तं मूढं, रजसोऽभिभवात् क्षिप्तं विक्षिप्तं वा, सत्वोद्रेकाच्चैकाग्रं विरुद्धं च जायते । तस्मादिदं पर्यवस्यते यत् रजस्तमसी एव चित्तैकाग्रतायां ज्ञानोदये वा बाधामुपनिबध्नीतः । अत एव ज्ञानविवृद्ध्यर्थं पुरुषेण तमसोऽभिभवः, रजसो नियन्त्रणं, सत्त्वगुणस्य समुन्नतिः कार्या इति सिद्धान्तः स्थिरीभवति । इदमुभयं मूलतत्वमुपजीव्यैव अस्माकं प्राचीनैः ऋषिभिः विपश्चिद्भिश्च पुरुषार्थः स्थिरीकृतः ।

अयं यथा एतेषां गुणानां प्रभावात् चेतनः पुरुष ज्ञानेच्छाकृतिमान् लक्ष्यते, तथैवैतैः त्रिभिर्गुणैः पुरुषस्य धर्मार्थकामाः इति त्रयः पुरुषार्था जायन्ते । उक्तं च यथा मनुना—

तमसो लक्षणं कामः, रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः, श्रेष्ठचमेषां यथोत्तरम् ।।

अस्यायमर्थः –कामप्रधानता तमसो लक्षणम्, अर्थनिष्ठता रजसः, धर्मप्रधानता सत्त्वस्य । अत्र अर्थशब्दः क्रियावाचकः शक्तिवाचकश्च, न पुनः वित्तवाचकः । एषां कामादीनामुत्तरोत्तरस्य श्रेष्ठत्वम् । कामादर्थः श्रेयान्, ताभ्यां च धर्मः । एतेन त्रैगुण्यभेदेन वर्णभेदोऽपि स्फुटीभवति । सत्त्वप्रधानो ब्राह्मणः, अर्थप्रधानः क्षत्रियः, कामप्रधानाश्च विशः । हीनकामश्च शूद्र इति

चतुर्थः । तस्मात् आत्मगुणः, पुरुषार्थः, वर्णधर्मश्चेति सर्वं त्रैगुण्यस्यैव विलसितम् ।

| | | | |
|---|---|---|---|
| बुद्धिगुणाः-- सत्त्वम्--- | रजस्--- | तमस् |
| आत्मगुणाः-- ज्ञानम्-- | क्रिया-- | इच्छा |
| पुरुषार्थः-- धर्मः-- | अर्थः-- | कामः |
| वर्णभेदः-- ब्राह्मणः- | क्षत्रियः- | वैश्यः |

तेनैव क्रमेणोत्तरोत्तरतः पूर्वः पूर्वः गुणः पुरुषार्थः वर्णो वा श्रेयान् भवति सर्वत्र भारतीयसंस्कृतौ । एतत् सर्वं सामान्यपुरुषमुपलक्ष्य प्रतिपादितम् । त्रिगुणातीतस्य तु मोक्ष एव पुरुषार्थः । जगतो निवृत्तत्वात् विषयैरसंपृक्तः स निष्कामः, निष्क्रियः, निरुद्धचित्तवृत्तिमात्र आत्मवान् ब्रह्मनिष्ठो वा भवति । स एव परमपुरुषार्थः ।

एतेन सर्वेण परिलक्षितेन शिक्षायाः प्रयोजनं पद्धतिश्च कीदृशी स्यादित्यपि विशदीभवति ।

## शिक्षायाः प्रयोजनम्

सत्त्वरजस्तमोमयस्य सामान्यस्य पुरुषस्य धर्मार्थकामा अपरिहार्याः पुरुषार्थाः, प्रकृतेः दुस्त्यजत्वात् । उक्तं च मनुनाऽपि—

धर्मार्थावुच्यते श्रेयः, कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयः, त्रिवर्ग इति तु स्थितिः ॥ २।२२४

न बलात् प्रकृतिर्निरोद्धव्या । सत्यपि धर्मे श्रेष्ठे यावत् अर्थकामाभिलाषौ न क्षीयेते तावत् धर्मविरुद्धौ अर्थकामौ सेवेत' इति शास्त्रसिद्धान्तः । तथा च प्राचीनभारतीयशिक्षाया उद्देश्यं स्वस्वप्रकृत्यनुरूपं बालकस्य स्ववर्णधर्मप्रशिक्षणं तद्गतज्ञानेच्छाकृतीनां धर्मार्थकामानां वा कथं सम्यक् निषेवणं निरोधं वा कर्तुं, स्वप्रकृत्यनुरूपं कथं समाजसेवार्यै अनुषंगतः स्व जीविकायै च केन विधिना वर्णधर्माः पालनीया इत्येव शिक्षायाः प्रयोजनमुद्दिश्य प्राक्काले शिक्षा प्रदीयते स्म ।

श्रीमता आचार्यचाणक्येन प्रत्येकं वर्णस्य धर्मानुरूपा शिक्षा इत्थं प्रतिपादिता । स्वधर्मो ब्राह्मणस्य—अध्ययनमध्यापनं, यजनं याजनं, दानं प्रतिग्रहश्चैवेति । क्षत्रियस्य—अध्ययनं, यजनं, दानं, शस्त्राजीवो भूतरक्षणं च । वैश्यस्य—अध्ययनं, यजनं, दानं, कृषिपशुपाल्ये वाणिज्या च । शूद्रस्य-द्विजातिशुश्रूषा वार्ता कारुकुशीलवकर्म च ।

तथैव श्रीमद्भगवद्गीतायां मानव-धर्मशास्त्रे च प्रतिपादितम् । अध्ययनं यजनं दानमिति त्रयं सर्ववर्णेषु सामान्यो मानवधर्मः । यः प्रत्येकं पुरुषस्य आत्मविकासाय अपरिहार्यः । अवशिष्टः पृथक् वर्णानुरूपः धर्मः याजनाध्यापनप्रतिग्रहादिः वर्तते । एतानि अध्यापनादीनि च समाजसेवार्यै आत्मनो जीविकायै वा प्रशिक्ष्यन्ते स्म । परं

ज्ञानस्य विवृद्ध्यै-अध्ययनं
क्रियाणां सम्यगनुष्ठानाय-यजनं
इच्छायाः दमनाय च- दानं

प्रशिक्ष्यते स्म । अत्र यजनशब्दः न केवलं अग्निहोत्रादिवाचकः, परं सर्वेषां सत्कर्मणामुपलक्षणम् । 'यज्ञो वै श्रेष्ठतमं कर्म' इति श्रुतेः । तथैव 'दानं इति शब्दः सामान्येन वितरणमित्यर्थे प्रयुज्यमानोऽपि अत्र इच्छानां-कामानां शोधने अवखण्डने वाऽभिप्रेतः । 'दैप् शोधनेः 'दो अवखण्डने' धातोर्वा भावे ल्युट् प्रत्ययेन दानशब्दः सिध्यति ।

## शिक्षायाः कालः स्थानं च

शैशवे कामतः प्रवर्तमानाः बालकाः संप्राप्ते कौमारे स्वगृहान् विहाय उपनयनविधिपूर्वकं गुरोः समीपे नगराद् बहिः गुरुकुलेषु प्रवेक्ष्यन्ते स्म । वर्णभेदतः उपनयनविधि ब्राह्मणस्य अष्टमे, क्षत्रियस्य एकादशे, वैश्यस्य च द्वादशे वर्षे स्मृतः ।

तावन्त्यपराणि वर्षाणि अतीतस्य बालकस्य व्रात्यसंज्ञाऽभूत् । स बालक आर्यैर्विगर्हितः, अध्यापनकन्यादानादिसम्बन्धैर्विवर्जितश्चामन्यत । ( मनु. २।३९,४० ) । एतेन गुरुकुले वासस्य शिक्षायाश्च महत्त्वं प्रदर्शित भवति ।

तत्र गुरुकुले व्रतपूर्वकं वेदान् वेदौ वेद वाऽधीत्य गृहस्थाश्रमप्रवेश आम्नातः । प्रतिवेद ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा इति याज्ञवल्क्यः । षट्त्रिंशदब्दवर्षाणि, अष्टादश वर्षाणि नव वर्षाणि वा गुरुकुलेऽधीयीत इति मनुः । ये पुनः आजन्म गुरुकुले उषित्वा वेदाध्ययनमकुर्वन् ते नैष्ठिका ब्रह्मचारिणः उच्यन्ते स्म, अपरे पुन उपकुर्वाणाः इति ।

## शिक्षा-विषयाः

अष्टमे, एकादशे द्वादशे वा वर्षे कृतोपनयनस्य बालकस्य व्रतादेशनं, वेदाध्ययन च प्रक्रमते स्म ( मनु. २।१७३ ) । इन्द्रियसंयमाय चरित्रनिर्माणाय च व्रतादेशनं, बुद्धिविकासाय च वेदाध्ययनं—इत्युभयमपि सहैव प्रवर्तते स्म । अत एव "त्रयः स्नातकाः भवन्ति – विद्यास्नातको, व्रतस्नातको, विद्याव्रतस्नातकश्च" इति हारीतः । "वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा" इति याज्ञवल्क्यः । शिक्षणालयाः केवलमध्ययनाध्यापनाय सन्तीति नासीत्तेषामभिमतम् । यदि कश्चित् बुद्धिमान्द्याच्छास्त्राणि वेदान् वाऽध्येतुं न समर्थः, सोऽपि चरित्रनिर्माणं कृत्वा मानवोचितान् गुणान् यदि विधिवदाकलयति तदा स स्नातकपदवीमधिगन्तुमर्हति स्म । इदं इन्द्रियसंयमादि व्रतादेशनं विद्याध्ययनादपि श्रेयस्करममन्यत । उक्तं हि मनुना—

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥
२।११८

अत एव शिक्षणक्रमेऽपि पूर्वं व्रतादेशनं ततः वेदस्याध्यापनविधिरुद्दिष्टः—

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥
२।१७३

अपि च—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥

शौचं स्नानादि, आचारः गुरुसेवा मधुरभाषणादिः, अग्निवत् आत्मप्रकाशायोर्ध्वगमनाय समर्पणभावनायै च अग्निकार्यं, पापविनाशाय च संध्या सावित्रीजपो वा निर्दिष्टः । उभयकालिकसन्ध्यायाः प्रयोजनं पापनाशनमुक्तम्—

पूर्वां सन्ध्यां जपन्स्तिष्ठेन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥
२।१०२

सन्ध्यामकुर्वन् छात्रः शूद्रवत् सर्वस्माद् द्विजकर्मणो वहिष्कर्तुमादिष्टः ( २।१०३ ) । यतोहि विधिवत् सन्ध्योपासनेन प्राणायामेन वा इन्द्रियाणां वशीकारः पापक्षयश्च भवति । तदभावे प्रज्ञाविनाशः । उक्तं चापि—

इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ९९

ब्रह्मचर्यं सर्वत प्रधानतम व्रतमासीत् । तदनुष्ठानाय ब्रह्मचारिणो मधुमांसादिसेवनं, गन्धमाल्यस्त्रीसेवनं नृत्यगीतवादन च वर्जनीयमुक्तम् । अत एवायं विद्याध्ययनकालः ब्रह्मचर्याश्रम इति नाम्नैव व्यपदिष्टः । नात्र वैकल्पिको विधिरितराश्रमवत् । अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनै शनैः । गुरौ वसन् ब्रह्माधिगमिकं तपः संचिनुयात् ॥" ( २।१६४ )
यतो हि "वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ।
( २।१६६ )

यथा सन्ध्यामकुर्वन् शूद्रवद् भवति तथैव--

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।
(२।१६८)

शूद्रेण समस्तावद् यावद् वेदे न जायते ।।
(२।१७२)

एतेषां 'वेदानां प्रदानादेवाचार्यं पितरं प्रचक्षते ।' ( २।१७१ ) । एतत् सर्वं विद्याध्ययनमाहात्म्यं दर्शयति । परमश्रेयःकरी विद्या सद्वृत्तां चेत्युभयं सर्वतोऽपि ग्रहीतुं यतेत ।

श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ।।
(२।२३८)

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ।।
(२।२३८)

स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्वतः ।।
(२३९)

शुभा विद्या, सद्वृत्तं, शिल्पजातं, स्त्रीरत्नं च सर्वतः समादेयानि स्वीकृतानि । इयं कन्या यवनकुलोत्पन्ना खीष्टमते लब्धजन्मा म्लेच्छेत्युक्त्वा परिहरणीया इति विचारो न मनुसम्मतः ।

इत्थं प्राक्काले शिक्षणालयेषु चरित्रनिर्माणाय, विद्यालाभाय च शिक्षा प्रदीयते स्म । इन्द्रियनिग्रहोऽपि ज्ञानोपाय एवांगी क्रियते स्म । अत एव प्रथमं व्रतादेशशिक्षणं ततो वेदाध्ययनम् । परं नैतेन मन्तव्यं यत वेदानामध्ययनाध्यापनमेव तेषु प्रवतते स्म । प्रत्युत लौकिकं, वैदिकं तथाध्यात्मिकमिति त्रिविधं ज्ञानं दीयते स्म । ( मनु २। ११७ ) लौकिकज्ञानं वर्णधर्मानुरूपं स्वाजीविकार्थं समाजसंस्थार्थं च प्रदीयते स्म । धर्मार्थकामानां शिक्षार्थं धर्मशास्त्राणि, अर्थशास्त्राणि ( Political science ), कामशास्त्राणि (Psychology etc.) च पाठ्यन्ते स्म । कामशास्त्रेषु तावत् कथं कामाः मनसि जायन्ते, कथं तेषां शोधनं, सन्मार्गे प्रवर्तनं, कथं वा गृहस्थाश्रमेऽपि संयम्य सेवनं विधेयमिति सर्वं शिक्ष्यते स्म । नत्विदानींतनवत् तानि स्वच्छन्दानुचर्यां शिक्षयन्ति स्म ।

वर्णभेदतः अध्यापनविद्या, शस्त्रास्त्रविद्या, कृषिकर्म, वाणिज्या, गोपालनं ( DairyFarming ) इत्येतेषां विशेष शिक्षा ( Spacialization ) आदित एवाभूत् ।

## दिनचर्या

प्राक्काले विद्याध्ययनाय श्रद्धा-तपःब्रह्मचर्यमिति त्रयं प्रधानतमं साधनमासीत् । तथा हि भगवान् पिप्पलादः ब्रह्मपरान् कात्यायनादीनुपसन्नान् प्राह--'भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ, यथाकामं प्रश्नान् पृच्छत, यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ।' तथा चोक्तं गीतायाम्-- 'श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।' अत्रापि श्रद्धा, तत्परता (तपः) संयतेन्द्रियत्वं ( ब्रह्मचर्यं ) चेति त्रयं ज्ञानोपलब्धिसाधनम् उक्तम् । तथा च मनुः--

औषधान्यगदो विद्या दैवी च विविधा स्थितिः ।
तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम् ।।
( ११।२३७ )

तथा च 'ब्रह्मचारी समिधा मेखलया श्रमेण लोकांस्तपसा पिपर्ति ।' इति अथर्ववेदे ब्रह्मचारिणः समिधादिधारणं क्रमेण ज्ञानदीप्तेः, बद्धपरिकरतायाः, शारीरिकपरिश्रमस्य, कार्यसिद्धये सर्वविधकष्टसहिष्णुत्वस्य च द्योतकं वर्तते । दण्डधारणं च आत्मदमनस्य नियन्त्रणस्य च लिंगमासीत् । गुरोः शुश्रूषा आदरः श्रद्धा च शिक्षाकाले आव-

श्यकमंगम् ।

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते। कर्णौ तत्र पिधातव्यं गन्तव्यं वा ततोऽन्यतः ।।(२।२००)।

### विद्याग्रहणस्याधिकारी

एवं श्रद्धया तपसा ब्रह्मचर्येण निवसन्नेव छात्रो विद्याग्रहणस्य अधिकारी आसीत्। असूयकायानृजवेऽयताय प्रमादिने वा विद्या न प्रदीयते स्म। कन्या विद्या च न कदाचित् गुणहीनाय दातव्या इत्यासीत् तदानीन्तनः सिद्धान्तः।

कामममरणात्तिष्ठेत् कुमार्यृतुमत्यपि।
न चैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्।।
(९।८९)

तथैव--
विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना।
आपद्यपि च घोरायां न त्वेनामिरिणे वपेत्।।
(२।११३)

यथा वा-'विद्यया सार्धं म्रियेत न विद्यामूषरे वपेत्।' इति छान्दोग्यब्राह्मणम्।।

यतोहि निधि – विद्या वा स्याद् हिरण्यं वा– पात्राय प्रदीयते न पुनः इतस्ततो विक्षिप्यते। एतेन सिद्धान्तेन देशस्य हानिर्जाता लाभो वा इति विचारणीयविषयः।

### विद्या-शुल्कम्

प्राचीनसमये विद्याग्रहणाय न किमपि शुल्कं विद्यार्थिना अध्ययनसमये दातव्यमासीत्। गुरोः शुश्रूषा तपः इन्द्रियजयः व्रतपालनं स्वाध्यायपरायणता चैव विद्याग्रहणाधिकारायालमासीत्। विद्यां समाप्यैव यथाशक्ति गुरवे हिरण्यादीनां दक्षिणाऽदीयत न तु ततः पूर्वम्।

न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्।।
(मनु. २।२४५)

भैक्षचर्ययाऽऽत्मनो गुरोश्च वृत्तिरजायत। एतेन सधना निर्धना वा सर्वे समानं विद्यालाभं प्राप्नुवन्। विनम्राः अप्रमादिनो जितेन्द्रियाः अनुशिष्टाः विद्याविनयसम्पन्नाश्चाभूवन्।

इयं प्राचीना शिक्षाप्रणाली आत्मनो बुद्धयाश्च विकासाय, मनसो निग्रहाय, सामाजिकजीवनलाभाय च फलवती आसीत्। तत्प्रभावादेव सुमहत्संस्कृतवाङ्मयमद्यापि जीवति, अद्यापि स्वप्रभावमक्षुण्णं वितनोति।

देशकालानुरूपं बहव उपायाः अद्यापि अनुसरणीयाः सन्ति। तेनैव मानवजीवनस्य निर्माणं स्वसंस्कृतिसंरक्षणं च संभवति।



## कविकुलगुरुः कालिदासः

मेघदूते प्रकृतिः स्वयं चेतनीभूता कथानकस्य पात्रतां च नीता। कालिदासः खलु प्रेम्णः सौन्दर्यस्य च कविः, दाम्पत्यप्रेम्णः चित्रणे दक्षः। कालिदासः शृङ्गाररसस्य कविः इति वस्तुतः सश्रद्धम् स्मरणीयम्। ये जनाः शृङ्गारशब्दश्रवणेनैव कुण्ठिताः भवन्ति ते न समीक्ष्यवादिनः रसरूपेण शृङ्गारस्य शान्तस्य च नास्ति भेदः। भरतमुनिनापि पवित्रवस्तुमात्रस्य प्रतिपादनार्थं शृङ्गारशब्दस्य प्रयोगः कृतः। कालिदासस्य शृङ्गारः रस-पदवीं गत इति कवेरस्य परमोत्कृष्टत्वं मेघदूतस्य च तादृशशृङ्गाररसपूरिततया काव्योत्तमत्वं सुस्पष्टम्।

– डा. श्री विश्वनाथभट्टाचार्यः।



# तस्य साम्ये स्थिता प्रज्ञा ब्रह्मज्ञशुकदेववत्

( ले० श्री जगन्नाथः श्रीअरविन्दाश्रमम्, पाण्डिचेरी )

पुरा कदाचित् श्रीशुकदेवः स्वपितुर्वेदव्यासस्य आज्ञया आत्मज्ञानं प्राप्तुं विदेहराजस्य महाराजजनकस्य मिथिलापुरीं जगाम। तत्र स सुन्दरप्रसाधनैः सज्जितान् गजान् अश्वान् रथान् नरनारीश्च अपश्यत्। परं तस्य मनसि कश्चिदपि विकारो न उत्पन्नः। ततोऽसौ यदा प्रासादस्य पुरतः प्रथमप्रवेशद्वारम् प्रापत् तदा द्वारपालाः तं तत्रैव आतपे अवरुद्धवन्तः, उपवेष्टुमपि न प्रार्थयन् न वाऽपृच्छन् कुशलादिकम्। स किंचिदपि खिन्नो न भूत्वा आतपे अतिष्ठत्। तथा तिष्टतस्तस्य त्रीणि दिनानि व्यतीतानि। चतुर्थदिने कश्चिद् द्वारपालः तं सम्मानपूर्वकं द्वितीयद्वारस्य देहल्याः शीतलच्छायायां प्रापयत्। स तत्रैव आत्मचिन्तने निरतोऽभवत्। न स आतपेन अपमानेन वा दुःखम् अनुभूतवान्, न वा शीतलछायया सम्मानेन च सुखम्।

ततः राजमन्त्री तम् उपेत्य आदरपुरःसरं मनोरमप्रमदावनम् अनयत्। तत्र पंचाशत् तरुण्यः तं भोजनम् अकारयन्, तम् आदाय च हसन-खेलन-गायनपरायणा बहुविधहावभावप्रकाशनपराश्च प्रमदाभवनस्य शोभां दर्शयितुम् आरभन्त। निशायां ताः भूषितपर्यङ्के बहुमूल्यं दिव्यं च आस्तरणम् आस्तीर्य तस्मिन् तम् उपवेशयामासुः। स पादौ प्रक्षाल्य रात्रेः प्रथमप्रहरे प्रभुं ध्यायितुम् आरभत, मध्ययामे शयनमकरोत्, चतुर्थप्रहरे च पुनः ध्याननिरतोऽभूत्। ध्यानसमयेऽपि शतशः युवतयः तं पर्यवारयन् परिवारयन्त्यः उपाविशन्, परं ताः शुकदेवस्य मनसि कथंचिदपि विकारलेशं जनयितुं नाशकन्।

एवं गते अन्येद्युः महाराजः जनकः तत्र आगत्य तस्य पूजाम् अकरोत्, तम् उच्चासने उपवेश्य च अर्घ्य – पाद्य – गोदानादिविधिभिः सम्मानयामास। ततः तस्य अनुज्ञां गृहीत्वाऽसौ स्वयं भूमौ उपविष्टः तेन सह संलापं समारभत।

सलापस्य अन्ते जनकमहाराजः श्रीशुकदेवमवदत्––मुनिवर! भवान् सुखदुःखे, शीतोष्णे, नृत्यगाने, हर्ष–शोकौ, लोभ–क्षोभौ, भय–भेदौ, इत्येतेभ्यः सर्वेभ्यो मुक्तः परमज्ञानी इति। भवान् स्वज्ञानम् अपूर्णं मन्यते इति एतावती एव भवतः अपूर्णता। अत्रभवान् परमविज्ञानघनः सन् अपि स्वप्रभावं न वेत्ति। जनकस्य प्रबोधनेन अनेन तस्य निजस्वरूपस्य बोधो जातः।

## कथासारः

छायया न सुखं यस्य सन्तापो नातपेन च।
न वा सम्मानतो हर्षो न शोकोऽप्यपमानतः ॥१॥
न च यस्य चलेच्चित्तमङ्गनापाङ्गवीक्षितैः।
तस्य साम्ये स्थिता प्रज्ञा ब्रह्मज्ञशुकदेववत् ॥२॥

---

## कविकुलगुरुः कालिदासः

शकुन्तलाऽत्र प्रकृतिकन्या तस्याः तादात्म्यमेव लताभिः वल्लरीभिः तिर्यग्भिः च। तत एव शकुन्तलायाः प्रस्थानावसरे प्रकृतिदेवी स्वयं वियोगाश्रूणि मुञ्चति। शकुन्तला प्रणयमूढापि विवेकिनी, भोगोत्सुकाऽपि तापसी, वासनाकलुषिताऽपि निसर्गपूता। कण्वस्य वात्सल्यपूर्णोक्तिः विश्वसाहित्येऽपि निरुपमा, शाश्वतिकश्च कन्यानुरागः प्रदर्शकः।

––डा श्रीमती वनमालाभवालकरमहोदया

# का भाषा देवभाषा ?

ले० श्री इन्दु-रायः श्रीअरविन्दाश्रमम्, पाण्डिचेरीः

शास्त्रविदा पण्डितप्रवरेणोक्तम्——संस्कृत-
ाषा हि देवभाषा या गीर्वाणवाणीति कथ्यते ।

केचित् तामिलभाषाभाषिण ऊचुः——तामिल-
ाषायां भाषते श्रीभगवान्, न तु इतरभाषायाम् ।

उत्तरप्रदेशवासिनोच्चैर्घोषितम्—— विश्वभाषा
हु हिन्दीभाषा यैव व्यवह्रियते दिवि देवैः सम्भाष-
ाय ।

श्रुत्वेमां गर्वोक्तिं सुतीव्रं प्रतिवादं चक्रु
ंगीयाः स्वभाषाप्राधान्यं मन्यमानाः ।

महाराष्ट्र वीरपुंगवोऽवादीत्——अलं विवादेन।
हाराष्ट्रभाषायां व्याजहार शिवप्रतीकः शिव-
ाजः । सा एव भाषा शिवभाषा देवभाषा वा ।

खृस्तानधर्मिणा पृष्टम्——किं नु प्रभवति
ांग्लभाषा विषयेऽस्मिन् ?

अपरः कश्चित् तीव्रं प्रत्यवदत्——मृतप्राया
लु लातिनभाषा अद्यत्वे इहलोके, परलोके तु
ालपन्ति देवा लातिनभाषायाम्, नात्र कोऽपि
न्देहावकाशः ।

आवक्षोलम्बितश्मश्रु प्रमृश्य कर्णौ स्पृष्ट्वा
ु जगाद मोहमदीयः——न ज्ञातं भवद्भिः प्रकृत-
त्त्वम् । कथयति विभुः आरवीभाषायाम्।
ौराणग्रन्थो ह्यस्य प्रमाणम् ।

अन्ये च बहवो विभिन्नभाषिणः अस्मिन्
वषये भागमग्रहीषुः ।

स्वमतानि पुरस्कुर्वाणानामित्थं विवदमानानां
षां महती वाग्वितण्डा समजनि । सुचिरं विचार-
विनिमयानन्तरमपि ऐक्यमतं न जातम् । अन्ततः,
श्नस्यास्य समाधानं भगवन्मुखादेव प्राप्तव्यमिति
निश्चितम् ।

नातिदूरे अनुच्चा गिरिशिला काचिदवर्तत ।
तामारुह्य सर्वे ते भगवन्तं प्रार्थयन्तस्तत्पुरतः
प्रश्नमेतमुपस्थापयामासुः ।

यवनिकान्तरालाद् भगवता तथा अवादि यथा
सर्वे ते स्वप्रश्नोत्तरं पृथक्रूपेण प्रापुः ।

किंचित्कालानन्तरं प्रहृष्टमनसस्ते स्वस्वगृहं
जग्मुः । परं मतभेदस्तु पूर्ववदेव प्रावर्तत ।

तामिलभाषी स्वमित्रं प्राह——अपि तं भवता
कीदृशी सनातनी शुद्धोच्चारणसंवलिता संस्कृत-
शब्दलेशवर्जिता च वाक् व्याहृता भगवता ?

उत्तरप्रदेशवासिनौ मिथः प्रजल्पतः——कथितं
भगवता हिन्दीभाषायां या एव अस्माकं राष्ट्र-
भाषा मातृभाषा च । अस्यां उत्कर्षः कथमधुना
अवज्ञायते ?

इत्थं सर्वे ते स्वभाषां देवभाषां मत्वा प्रहर्षं
लेभिरे ।

वनचराः खेचराश्च एतत्सर्वं पश्यन्त आसन् ।
ते ऊचुः——बधिराः खलु इमे भावप्रवणा मनुष्याः ।
न ते अशृण्वन् भगवन्तं वदन्तमस्माकं भाषायाम् ।

मुनिः कश्चिद् अवादीत्——न किमपि उक्तं
विभुना । स मौनी आसीत् । ज्ञाता मयाद्य नीर-
वतायाः परा कोटिः ।

संगीतज्ञः कश्चिदाह——न स मौनी आसीत् ।
स जगौ । आपूर्णो मम कर्णौ भगवत्कण्ठनिःसृत-
व्यसंगीतसुधारसेन ।

तान् सर्वानुपहस्य अभाणि केनचित् नास्तिकेन——आविर्भवति यो नानारूपैः विविधजनानां
पुरतः स ऐन्द्रजालिक एव, न स विशेषसत्त्वस्वरूपः, अतः स अविश्वसनीयः ।

प्राज्ञः कश्चिदाह——ननु ऐन्द्रजालिकः, तर्क-

बुद्ध्योरगम्यः स सनातनः पुरुषः मायया येन जगदिदं कल्पितम् ।

वादप्रतिवादा वर्द्धमाना आसन् । विमर्शविषयः समाप्ति न आयात् ।

ततः भगवान् गजाननस्तत्र प्रादुर्भूय तानादिदेश--रच्यताम् काचित् कथा शिक्षाप्रदा रुचिकरी च अस्मिन् वितर्के बालबोधनाय ।

तैरुक्तम्--प्रौढानां बुद्धिमतां च मनसि या कथा प्रहेलिकेव प्रतिभाति, बालानां कृते अपि सा अवगाह्या भवेत् ?

गणपतिराह--एवमेतत् । प्रौढानां यत् दुर्बोधं तदेव बालानां सुबोधम् ।

अथ श्रीगणपतेराज्ञया श्रीराजगोपालचारिमहोदयेन कथेयम् लिखिता यस्याः आंग्लानुवादतः सारांशो गृहीत उपस्थापितश्चात्रास्माभिः ।

---

# तदाद्रष्टुः स्वरूपेऽवस्थानम्

श्री स्वामी वेदानन्दो वेदवागीशो गुरुकुलभज्जरः, रोहतक

"तदा द्रष्टुः स्वरूपेऽवस्थानम् ।" सूत्रमिदं सन्दिग्धं पुरस्तान्नो नर्न्तीति । असन्दिग्धेन च तेन भवितव्यम् । तस्मात्पक्षप्रतिपक्षखण्डनमण्डनदिशा विदुषां सम्मुखे स्थाप्यते येन सम्यग् विमृश्य त्रुटीर्बोधयन्तो निजविचारांश्च ख्यापयन्तो मामनुगृह्णीयुरन्ये च बुभुत्सवः सत्यमर्थं लभेरन्निति प्रयोजनमस्ति मे । स चायमस्ति प्रकारः सूत्रव्याख्यानस्य--

अथ द्रष्टृग्रहणेनाचार्यः किं न्याय्यं मन्यते ? आत्मेत्याह । कथं प्रतिपत्तिः ? इह हि शरीरे प्राधान्येन योगविषयकौ द्वौ पदार्थौ स्तो दृश्यं च द्रष्टा च । दृश्यं नाम बुद्धि र्यस्तां पश्यति स द्रष्टेत्युपचर्यते । आह हि भगवान् पतञ्जलिः--द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।" इति ।।

एवं तर्हि निरुद्धासु चित्तवृत्तिषु चित्तस्यैव द्रष्टुरात्मनः स्वरूपेऽवस्थानं प्राप्नोति । कथम् ? यदा हि चित्तस्य वृत्तयो निरुद्धाः, वृत्तीनामभावान्निराश्रयं सत्तात्त्वावतिष्ठेत, अन्यदत आत्मनः स्वरूपात् । अपि चैष श्लोकः प्रमाणम्--"यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।।" क्व पुनरिदं पठितम् ? योगिराजकृष्णस्य श्लोको न चषोऽप्रमाणमर्हति भवितुम् । न ब्रूमोऽप्रमाणमिति, किन्तर्ह्यस्थानेऽयं श्लोकः पठ्यते । चित्तस्य निरोधाय हि योगिराज एनमधिजगे । न चात्र चित्तस्य परिकर्मारभ्यते ।

एवमपि--आत्मन्येवावस्थास्यति चित्तम् । आह हीश्वरो यजुर्वेदे--"यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ।"३४.१।। आत्मनि सद्भावात् तच्चित्तं दैवमित्युच्यते तच्छयनादुत्तिष्ठतः पुरुषस्यात्मस्थानं विहाय शरीर एव दूरमुद्गच्छति । सुप्तस्य च पुरुषस्य पुनस्तथैवात्मानं याति । सत्यमभिहितमेतत्परमत्र न सुषुप्तिर्नि-

रूप्यते । कस्तर्हि ? समाधिः ।। अत्र कः समाधि-सुषुप्त्योर्विशेषः ? अयमस्ति विशेषः--असम्प्रज्ञाते समाधौ नायमात्मा चित्तमपेक्षते । अनपेक्ष्यमाणं हि तत्प्रतिक्षणं स्वकारणं प्रतिष्ठते । सुषुप्तौ पुनरयमात्मा जागरितायामुत्तरस्यामवस्थायामनेन कर्म करिष्यामीति तदपेक्षते । इदमस्ति कारण चित्तात्मनि तिष्ठतीति । समाधौ पुनरयमात्माऽऽसमाधिभ्रेषान्न चैतन्यं जहाति । सुषुप्तौ तु सर्वथा जडीभूतस्तिष्ठति । उत्तिष्ठत एव तस्य चैतन्यानुनुभवो जायते । तस्मान्न जातुचिच्चित्तमसम्प्रज्ञातसमाधौ तिष्ठत्यात्मनीति ! अत उत्तरं पठति--"स्वप्रतिष्ठा तदानीं चितिशक्ति र्यथा कैवल्ये ।"

युक्तं पुनश्चितिशक्तेरेव स्वरूपेऽवस्थानं स्यात् ? बाढं युक्तम् । कथम् ? स्वकारणं प्रतिष्ठमानेषु चित्तगुणेषु चितिशक्तिरेव केवलेदानीमवशिष्यते । निरुद्धासु चित्तवृत्तिषु सैवेदानीं स्वरूपेऽवतिष्ठेत अस्ति प्रयोजनमेतत् ? किन्तर्हीति । द्रष्टृग्रहणेन तावन्नार्थः । अन्तरेणैव द्रष्टृग्रहणं स्वकारणं प्रतिष्ठमाने मनसि किमन्यत्स्वरूपेऽवस्थातुमर्हत्, अन्यदत आत्मनः ।। ननु च भोः 'तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ।" अस्मिन्नपि सूत्रे कैवल्यं निरूपयता सूत्रकृता 'दृशि' ग्रहणमकारि । कैवल्यं च नाम स्वरूपप्रतिष्ठा चितिशक्तिरिति । तद्वदिहापि स्वरूपप्रतिष्ठाप्रसङ्गे कथन्न द्रष्टृग्रहणमुररीक्रियते? अस्त्यत्र भेदः । कः? व्युत्थितचित्तः पुरुषः कथं योगयुक्तः स्यादिति साधनानि निरूप्य कदा कथं चास्या दृक्शक्तेः कैवल्यं भविष्यतीति सूत्रमेनत्सूत्रकृत्पपाठ । तत्केवलं वाचनिकमेव । अत्र पुनः सम्प्राप्तेऽसम्प्रज्ञातसमाधौ यदायमात्मा दृश्य न पश्यति, तदा खल्वस्य द्रष्टृत्वमशक्यं प्रतिपादयितुम् । तदेतद् द्रष्टृग्रहणं सर्वथाऽप्रयोजनमेव । ननु च भोः स्पष्टार्थमिदमाचार्यस्य द्रष्टृग्रहणं मृष्यताम् । स्पष्टार्थकं नाम पदं तत्र प्रयोक्तुमर्हति, यत्र सन्देहः स्यात् । न चास्त्यत्र सन्देहः । अयमस्ति--"तदा स्वरूपेऽवस्थानम् ।" इतीयत्युच्यमाने चित्तं हि पुरस्तात्प्रकृत, तत्तस्यैव स्वरूपेऽवस्थानम् स्यात् । किं रूपे ? प्रख्यारूपे । द्रष्टृग्रहणे पुनः क्रियमाणे न दोषो भवति । चित्तविषय उक्तम् । किमुक्तम् ? एतत्पुरस्तादुक्तम्--निरुद्धासु चित्तवृत्तिषु तत्स्वकारणं प्रतिष्ठते । यदि हि स्वरूपे तिष्ठेत्; न जातुचिच्चित्तस्य गुणानां पुरुषार्थशून्यता स्यात् । असति पुरुषार्थशून्यत्वे कैवल्यं न स्यात् । तदेतद्--द्रष्टृग्रहणमिहाकर्त्तव्यं क्रियते, यत्र कर्त्तव्य तत्र न क्रियते । क्व कर्त्तव्यं न क्रियते ? "वृत्तिसारूप्यमितरत्र ।" इत्यत्र कर्त्तव्यं न क्रियते । तत्रापि नार्थो द्रष्टृग्रहणेन । कथम् ? 'इतरत्र' पद हि तत्र पठति वृत्तिपदञ्च । यत्र वृत्तिस्तत्र द्रष्ट्राऽवश्यं भाव्यम् । वक्ष्यति हि भाष्यकारः "एकमेव दर्शनं ख्यातिरेवदर्शनम् ।" तस्मात्तत्राप्यतरा द्रष्टृग्रहण जायतेऽर्थप्रतिपत्तिः । अपि च तत्र द्रष्टृप्रत्यायकं पदमितरत्र' पठितमेव । भवेत्तर्हीयदेव सूत्रम्--"तदा स्वरूपेऽवस्थानम्" इति । इयतापि न भवितव्यम् । कुतः ? प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदीदमात्मनः स्वरूपप्रतिष्ठाप्रतिपत्यर्थमारभ्यते, शास्त्रात्तो क्रियमाणं सूत्रं किम्प्रयोजनं स्यात्--"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । एकेनोक्तत्वादर्थस्यापरेण वाक्येन न भवितव्यम्, उक्तार्थानामप्रयोग इति । न हि सूत्राभिधायी महर्षिरभिहितमर्थं पुनरभिधत्ते । ननु च भोः एकेनोक्तत्वादर्थस्य किमर्थानि भूयांसीमानि सूत्राणि--तदभावात्संयोगाभावो हान तद्दृशेः कैवल्यम् ।। २.२५ । तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ।। ३ ५०।। सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ।। ३.५५।। अथ मतमेतद् विध्यन्तरेण कैवल्यमभिधीयते, अत्राप्यस्ति विध्यन्तरम् । किम् ? निरुद्धासु चित्तवृत्तिषु कारणलयात्पूर्वं स्वकारणं च प्रातष्ठमाने चेतसि चितिशक्तिः स्वरूपप्रतिष्ठा स्यादिति ।

सत्यम्, न त्वनेन द्रष्टृपदरहितेनापि न्यासेन सोर्थः शक्यः प्रतिपत्तुम् । यद्येतावत् प्रयोजनं स्यात् । 'तदा स्वरूपे' इत्येव ब्रूयात् । अवस्थानपदमपि न प्रयुञ्जीत । प्रयुज्यमानया सप्तमोविभक्त्यैव तत्प्रतीयमानत्वात् । अधिकरणे हि सप्तमी विधीयते । अधिकरणश्चाधारः । आधारः पुनः स्थितिरेव । तदेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः—नानेन सूत्रेण चितिशक्तेः स्वरूपप्रतिष्ठा प्रतिपाद्यत इति ।

तत्तर्ह्यस्मै प्रयोजनायान्यतरत्सूत्रं कर्त्तव्यम्? न कर्त्तव्यम् । कथम्पुन. स्वरूपप्रतिष्ठा गम्येत? 'तदा' शब्दग्रहणात् । तदा शब्दं ह्यसौ सूत्रादौ पठति स स्वरूपप्रतिष्ठार्थं प्रतिपत्तव्यः ।। ननु च भोः 'द्रष्टुः स्वरूपेऽवस्थानम्'इति त्रिभिः शब्दैस्तु स्वरूपप्रतिष्ठाऽशक्या प्रतिपादयितुम्, कथमयमेको वण्ठरण्डाकल्पस्तदा शब्दः स्वरूपप्रतिष्ठां प्रतिपादयिष्यति ? नायं वण्ठरण्डाकल्पः । गतेन सूत्रेणायमात्मानं सम्बध्नाति । तत्र च स्वराय प्रतिष्ठा गम्यते ।। कथम्? 'योगश्चित्तवृत्तिनिरोधः' द्विविधस्तत्र योगोऽभिहितः । तत्रासम्प्रज्ञाते योगे यदा सर्वा वृत्तयो निरुद्धास्तदाऽयमात्मैकाकी भूत्वाऽऽत्मकल्पेनावतिष्ठते । यश्चार्थः पारिशेष्यात् सिद्ध्यति नान्यं तत्र यत्नमपेक्षते सूत्रकारः । अमुमेवार्थं भाष्यकारः स्वरूपप्रतिष्ठाशब्दं 'तदानीं' शब्दात्पूर्वं पठित्वाभिव्यनक्ति—'स्वरूपप्रतिष्ठा तदानीं चितिशक्तिः ।' तस्मात्पूर्वसूत्रस्यैवायं स्वरूपप्रतिष्ठाप्रतिपादनविषय इत्यवोचदाचार्यः ।

अथ स्वरूपप्रतिष्ठा सती चितिशक्तिः किमवस्थेति विधित्सया सूत्रपदानीमानिन्यसति 'द्रष्टुः स्वरूपेऽवस्थानम्' इति कथं ह्येषा द्रष्टुः स्वरूपेऽवस्थीयते ? अत उत्तरं पठति—"यथा कैवल्ये ।" यथा कैवल्ये देहं विना स्वरूपप्रतिष्ठा चितिशक्तिर्द्रष्टुः स्वरूपेऽवतिष्ठते, तथैव प्राक्शरीरविमोक्षणाच्चरमदेहो जीवन्मुक्तः स्वरूपप्रतिष्ठ आत्मा कैवल्यात्पूर्वमपि द्रष्टुः स्वरूपेऽवतिष्ठत इति । तदिदं सूत्रं शास्त्रान्ते क्रियमाणस्यापि सूत्रस्योत्तरकालमङ्गभूतं विज्ञायते । कस्य ? पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" अस्य ।

अथ कोऽयमात्मव्यतिरिक्तो द्रष्टा नाम, यस्य स्वरूपे चितिशक्तिरवतिष्ठते ? ब्रह्मेत्याह । कथं ज्ञायते ? व्याख्यानात् । किमिह व्याख्यानम् ? सूत्रस्य निर्वचनं व्याख्यानम् । किम्पुनर्निर्वचनम् ? निश्चयेन वचनं निर्वचनम् । यो ह्युत्सूत्रं ब्रूयान्नादो गृह्येत । तदुच्यतां को भवतां पुरुषकारो येन द्रष्टृशब्दो ब्रह्मार्थमाह । अयमस्तिछन्दोवत्सूत्राणि भवन्ति । यथा छन्दसां मन्त्राणां नान्तरेण निर्वचनमर्थः शक्यते प्रतिपत्तुं तथैव सूत्राण्यपि नान्तरेण निर्वचनं शक्यन्ते प्रतिपत्तुम् । सूत्रकारो हि समाधिप्रज्ञायां संस्कृत्य संस्कृत्यैकैकं पदं स्थापयति—'तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति तत्रावस्थानपदेन प्रयुज्यमानेन भगवत आचार्यस्याभिप्रायो लक्ष्यते को द्रष्टृशब्दस्य पदार्थ इति । धातोः प्रागुपस्थितोऽत्रोपसर्गोऽन्यत्र यमर्थमाह तमेवात्राभिधत्ते । बहुह्यस्य प्रयोगविषयः । तद्यथा—ऋषिप्रशंसा चैवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति । निरु ७.३ । इत्यवचः ।। पर्वतमारोहति, पर्वतादवरोहति, इत्यवरोहणम् ।। सन्त्यस्मिन् पुरुषे गुणाः, अस्मिश्चावगुणा, इत्यवगुणाः ।। छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।। अष्टाध्यायी ५.२.८९।।

इति पर्यवस्थाता । इत्येतस्मिन्प्रयोगविषयेऽवोपसर्ग उत्कृष्टात् पदार्थादपरस्यावरतामाह । तद्वदिहापि प्रयुज्यमानोऽवस्थानशब्दः कस्माच्चिद् वस्तुनोवरतामाचष्टे चितिशक्तेरात्मनः ।। तत्किमन्यदर्हति भवितुमन्यदतो ब्रह्मणः । जगति हि त्रयः पदार्थाः सन्ति––दृश्यमात्मा ब्रह्म च । तत्र व्याख्याताभ्यां दृश्यात्मभ्यां व्यतिरिक्तं ब्रह्मैवावशिष्यते । तस्यैव स्वरूपे निराश्रया सती चितिशक्तिरवतिष्ठेत । दृष्टो ह्यवगुणवान् गुणवन्तमाश्रीयमाणः । तद्यथा–लता वृक्षं परिष्वजते । योषित् पुरुषमवलम्बते । बालोऽम्बामाश्रयति । शिष्यो गुरुं सेवते । तथैव स्वरूपप्रतिष्ठापि चितिशक्तिरल्पगुणत्वाद् ब्रह्मण्येवावतिष्ठते । एष खल्वपि श्लोकः स्थाने सङ्गृहीतो भवति––"अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्शनैः शनैः । सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।। मनु ६।९२।।

यद्येवं ब्रह्मन् शब्द एव तर्हि कस्मान्नोपात्तो, यस्मिन्नुपादीयमानेऽसन्देहः स्यात् । न चापीदानीन्तनाः सूत्रं व्याचक्षाणा विप्रतिपन्नबुद्धयो जायेरन् ? विशेषार्थम् ।। वैशेषिक आचार्यो विशेषार्थमभिधित्सुर्द्रष्टृ शब्दं प्रयुङ्क्ते न ब्रह्मन् शब्दः । का खल्वाचार्यस्याभिधित्सा ? द्रष्टा दृश्यमपेक्षते, दृश्यं च द्रष्टारम् । द्रष्टृ ह्यत्र ब्रह्म, दृश्यं च चितिशक्तिरिति । आदित आरभ्याऽऽसम्प्रज्ञातसमाधेर्ब्रह्म निरन्तरमवैक्षत चितिशक्तिम् । यच्च चितिशक्तिरनुतस्थौ तदखिलं द्रष्टृपश्यत् । पश्यति ह्याचार्यः––द्रष्टृशब्द एवोपादेयः, शक्ष्यामि चैनं ब्रह्मपर्यायवाचिनमुपवर्णयितुम् अतो द्रष्टृशब्द एवोपात्तो न ब्रह्मन् शब्दः ।

ननु च भोः सम्पन्नेऽसम्प्रज्ञातसमाधिना कार्ये नान्यत् किमप्यवशिष्यते यदर्थं तस्येदानीं द्रष्टृत्वं स्यात् । अतस्तस्यापि ब्रह्मणो द्रष्टृत्वं सहैव निवर्तेत **न** निवर्तते । कथम् ? एतदग्रे व्युत्पादयिष्यामः ।।

अथ कथं प्रतिपद्यते चितिशक्तावल्पगुणाः सन्तीति ? इयमस्ति प्रतिपत्तिर्यदियमानन्दार्थं प्रयतते तं कुतश्चिल्लभेयेति । यदि स्वस्यामानन्दः स्यान्न तदानीमन्यतोऽपेक्षते । अतो मन्यामहे––असम्प्रज्ञाते समाधावसति दृश्ये केवला सती चितिशक्तिर्यत आनन्दमुपलभते, तद् ब्रह्मैव । तच्च बृहत्त्वाद् ब्रह्मेत्याख्यायते । न ह्यल्पे सुखमस्तीति ।

अथेदानीमिदं वक्तव्यं—ब्रह्मणो यावानानन्दः किं सर्वमुपलभते, आहोस्विदल्पम् ? इदमुत्तारता तावदयम्प्रष्टव्यः—आतते बहुले गभीरे समुद्रे स्नानं विदधदयं कियता पयसा तृप्तिमाप्नोति । प्रसृतेषु सूर्यरश्मिषु वा कियतातपेनोष्णतामादत्ते ? स वक्ष्यति—यावता जलातपेन यत्र तत्रस्थः सर्वत्र वा परिभ्रमन् जीवात्मा सन्तुष्यति तावतैव तस्य प्रयोजनं नाधिकेन । तद्वदिहापि सर्वत्र व्यापके ब्रह्मणि यावतानन्देन तस्य तृप्तिर्जायते तावतैव तस्य प्रयोजनं नाधिकेनेति प्रतिपद्यताम् । नह्ययं परब्रह्मणः सर्वमानन्दमादातुमर्हः । तत्तर्ह्येतत्प्रतिपत्तुमन्यतरत्सूत्रं कर्त्तव्यम् ? न कर्त्तव्यम् । कथम्पुनरयमर्थः प्रतिपत्स्यते ? अवस्थानपदोपादानात् । यदयमवस्थानपदं प्रयुङ्क्ते, तत्प्रत्याययत्याचार्यः––यावद् ब्रूयादवस्थानम्, तावदवरस्थानमिति । यस्यात्मनः स्थानमेव ब्रह्मणोऽवरं कथं स तस्य सर्वमानन्दं भुञ्जीत !

ननु च ब्रह्मणि स्थितिरपि पुरस्तादवस्थानपदस्य प्रयोजनमुक्तम् । इदं वा स्यात्तद्वा, एकतरेण शक्यं भवितुम् ।। अस्तु तर्हीदमेव । का पुनस्तस्या गतिः ? अन्तरेणापि तत्रावोपसर्गं तस्याश्चितिशक्तेर्ब्रह्मणि स्थितिर्गम्यते । कथम् ? अस्तु

सूत्रमियदेव--"तदा द्रष्टुः स्वरूपे स्थानम्" यावद् ब्रूयात् स्थितिस्तावत्स्थानमिति । यद्येवमत्राप्यन्तरेणैवावोपसर्गमानन्दस्य साधीयोऽवरत्वं गम्यते । कथम् ? यो हि यस्मिन् तिष्ठति, नासौ कदाचित्तस्य समतामेति । तदेष प्रयुज्यमानोऽवोपसर्गः सवथानर्थक एव । न खलूपसर्गमात्रं स्थानशब्दोपि न प्रयोक्तव्यः । कथन्तर्हि तस्याश्चितिशक्तेर्ब्रह्मणः स्वरूपे स्थितिर्गम्येत ? लोकव्यवहारात् । तद्यथा-कश्चित्कञ्चित्पृच्छति, क्व विष्णुमित्रः ? स उत्तरमाह--"प्रासादे" अत्र 'प्रासाद' इत्युक्ते विनैव स्थितेः प्रयोगं विष्णुमित्रस्य तत्र स्थितिर्गम्यते । कः खल्वत्र स्थित्यर्थमाह ? सप्तमीविभक्तेः प्रयोगः सप्तमी चाधिकरणं ब्रूते, तच्चाधिकरणमाधार एव । न चाधारः स्थितिमन्तरा शक्यो वक्तुम् । तद्वदिहापि "तदा द्रष्टुः स्वरूपे" इयत्येवोच्यमाने तस्याश्चितिशक्तेर्ब्रह्मणः स्वरूपे स्थितिर्गम्यत एव । यद्येषोर्थो न प्रतीयेत तदा तस्याधिकरणमेव निष्प्रयोजनम् । सूत्रं च नाम यतो न लघीयः यस्मिन्प्रयुक्तैः शब्दैर्महतोऽर्थौघान् प्रतिपद्येरन् तदेवं सिद्धे सति यदवस्थानशब्दं प्रयुङ्क्ते तज्ज्ञापयत्याचार्यः--अस्त्यस्यान्यत्प्रयोजनमिति । किम् ? स एवेदानीं तस्यापि द्रष्टृशब्दस्य व्याख्यानावसरो यदर्थो द्रष्टृशब्दः सूत्रे प्रयुक्त इति । कथम् ? यद्यस्य स्थानं तत्तस्यैव भवति नान्यस्य । अपरस्तु स्वकार्याणि संसेध्य स्वस्थानं पुनरावर्तते । तद्वदिहापि-ब्रह्मणो यत्स्थानं तत्तस्यैवान्तेपि भवितुमर्हति । चितिशक्त्या तु तत आनन्दं प्राप्य निर्वर्तितव्यम् । कियन्तं कालमुषित्वा निर्वर्तितव्यम्? यावता कालेनापवर्गाय कृतं कर्म परिपच्येत । तस्यैनं कालं को वेत्तुमर्हति ? ब्रह्मेत्याह । तस्मात्तत्राप्यस्ति तस्य ब्रह्मणो द्रष्टृत्वम् । अतस्तस्य दृष्टृत्वं कैवल्येपि न शक्यं प्रत्याख्यातुम् । तत् तर्हि कैवल्यान्निवर्तनाय नियतकालता वक्तव्या ? अवश्यं वक्तव्या । कथं वक्ष्यति ? एवं वक्ष्यामि -- "तदा द्रष्टुः स्वरूपे नियत काल." इति । स तर्हि सूत्रभेदः कर्त्तव्यः ? न कर्त्तव्यः । कथम्पुनर्नियतकालता गम्येत ? अवस्थानपदग्रहणात् । अवस्थानपदं ह्यसौ गृह्णाति । असत्यन्यस्मिन्प्रयोजने नियतकालार्थं तत् पद भविष्यति । किं शब्दाधिक्यादर्थाधिक्यमाहोस्विद् गम्यतेऽनेन नियतकालतेति ? गम्यते । कथम् ? लोकवत्-तद्यथा लोके, कश्चित्कञ्चिदाह-अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु वृत्तिषु प्रयोक्तॄणाम् । स एतत्प्रतिपद्यते-नियतकाला वर्णा इति। ते हि प्रयोक्तॄणां वृत्तौ नियतकालं स्थित्वा निवर्तन्ते । तद्वदिहापि नियतकालमयमात्मा ब्रह्मणि स्थित्वा पुनः संसारं प्रतिपद्यते । कियान् तर्हि स कैवल्यकालः ? देवा वेत्तुमर्हन्ति ।

ननु च भोः "स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये" इत्याह पुरस्ताद् भाष्यकारः । 'यथा' शब्दश्च सादृश्ये प्रयुज्यते । तत्कैवल्यसदृशमसम्प्रज्ञातसमाधौ निवर्तनं कथं प्रतिपत्तव्यम् ? अत्रापि न तस्याश्चितिशक्तेरसम्प्रज्ञातसमाधिः सर्वदा भवति । ततो निवृत्यासौ सम्प्रज्ञातसमाधौ तिष्ठति । एनमेवार्थं निदर्शयितुमाचार्यः पठति—"वृत्तिसारूप्यमितरत्र" इति । कथमनेन सम्प्रज्ञातसमाधिर्गम्यते ? पठिष्यति हि भाष्यकारः—एकमेवदर्शनं ख्यातिरेव दर्शनमिति । अवतरणिकायाञ्चापि ब्रूते--चितिशक्तिस्तथापि भवन्ती न तथा' इति ।। तस्मात्सूष्ठूच्यते--"यथा कैवल्ये" इति ।।

अथ स्वरूपग्रहणं किमर्थम् ? "तदा द्रष्टर्यवस्थान' मितीयत्युच्यमाने न ज्ञायते चितिशक्तिस्तत्र

कस्मै प्रयोजनायावस्थितेति । स्वरूपग्रहणे पुनः क्रियमाणे यत्तास्यैव रूपमानन्दस्तस्मिन्नेवेयमवतिष्ठते, इति जायते प्रतिपत्तिः ।

रूपग्रहणं तर्हि शक्य प्रत्याख्यातुम् । कथम् ? तदा द्रष्टुः स्वस्मिन्नवस्थानमित्येव द्रष्टृरूपेऽवस्थानं भविष्यति । न ह्यन्यत्स्वं द्रष्टुरस्त्यन्यदतो रूपात् । एवन्तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयति सूत्रकृत्--अस्त्यन्यद्रूपात्स्वं द्रष्टुरिति । किं पुनस्तत् ? अर्थः । किमेतस्य ज्ञापने प्रयोजनम् ? अर्थसहितस्य रूपस्य ग्रहणं भवति, नार्थमात्रस्य, न रूपमात्रस्येति ॥

तेन स्वरूपप्रतिष्ठायाश्चितिशक्तेरानन्दसहिते ब्रह्मणि स्थितिरानियतकालं भवतीति सिद्धम् ॥ "तदा द्रष्टुः स्वरूपेऽवस्थानम् ।"

# स्वाधीनभारतपञ्चकम्

लेखकः श्री रमाशङ्करभट्टाचार्य्यः, अनुसन्धानसंस्थानम्, संस्कृतविश्वविद्यालयः, वाराणसी

**विद्या यत्र सदैव कर्मसहगा सर्वप्रजासेविता**
**प्रत्यक्षागमयुक्तिभिश्च प्रमिता शक्तिप्रदा विद्यते ।**
**कापट्यच्छललोभदम्भविरताचार्यैश्च यत्रार्चिता**
**सोऽयं भारतदेश एव जयतु स्वाधीनभावोदितः ।१।**

**अर्थो यत्र परिश्रमेण सुलभो विद्वत्कृता योजना**
**युक्तार्थं परियच्छतीह किमपि व्यर्थं भवेत् कर्म न ।**
**यत्रार्थः खलु सार्थकश्च सुधियां सम्यग् विभागेन वै**
**सोऽयं भारतदेश एव जयतु स्वाधीनभावोदितः ।२।**

**शक्तिर्यत्र जनप्रसादनकरी दुःखौघहन्त्री सतां**
**या वै दुर्जननाशिनी सुखकरी धर्मार्थकामप्रदा ।**
**हेतुश्चापि समुन्नतेः शमदयासौन्दर्य रत्नप्र सूः**
**सोऽयं भारतदेश एव जयतु स्वाधीनभावोदितः ।३।**

**न्यायो यत्र समो दरिद्रधनिषु ह्यध्यात्मनिष्ठायुतः**
**यः सत्कर्मगतेर्न बाधक इह स्वाच्छन्द्यदातापि च ।**
**मर्यादाप्रतिपालकः खलमनोभीतिप्रदो राजते**
**सोऽयं भारतदेश एव जयतु स्वाधीनभावोदितः ।४।**

**साम्यं यत्र समाजबन्धन इह द्वन्द्वेन हीना नराः**
**ना विद्वान् खलु दृश्यते क्वचिदपि श्रेणीविरोधो न च ।**
**सिद्धिर्यत्र च लभ्यते खलु चतुर्वर्गस्य मैत्र्या नरैः**
**सोऽयं भारतदेश एव जयतु स्वाधीन भावोदितः ।५।**

# स्वाधीनता – रहस्यम्

( ले०—श्री मुनि देवराजो विद्यावाचस्पतिः गुरुकुलझज्जरम् )

अद्य वयं स्वाधीनताविषये किञ्चिल्लिखामः। वयं त्वेवं मन्यामहे स्वाधीनताविषयकं किञ्चिदस्त्येव न यस्याः कृतेरेतावत्कोलाहलं वरिवर्त्तीति। पूर्वमस्माभिः इदं विचार्यते स्वाधीनताशब्दस्य कोऽर्थः। स्वस्याधीनः स्वाधीनः तस्य भावः स्वाधीनता। यथा स्वामीशब्दे स्वशब्दो वर्त्तते तथैव स्वाधीनताशब्देऽपि स्वशब्दो वर्त्तते। स्वामीशब्दे तु यस्य इमानि इन्द्रियाणि स्वानि सः स्वामी। स्वाधीनताशब्दे यदि स्वशब्देन इन्द्रियाण्युच्यन्ते तर्हि तेभ्यः अधीनता कथमस्माभिरनुभूयते तदस्ति विवेच्यम्। उपनिषद्युक्तमस्ति—इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः।

एवमस्माभिर्विज्ञायते इन्द्रियाणामवरत्वमात्मनश्चपरत्वमिति। इन्द्रियाणि विषयपरकाण्येव आत्मा तु सर्वाणि इन्द्रियाणि वशीकृत्यावतिष्ठते। इन्द्रियाणि यदा विषयान् गृह्णन्ति तदा काम, क्रोध, लोभ, मोह, भय, शोक, मद, मत्सरप्रभृतिभ्यः विषयेभ्यः आप्लुतानि भवन्त्येव, यदि आप्लुतानि न स्युः तदा इन्द्रियाणि निर्वृत्तिकानि भवेयुः। तस्यामवस्थायां इन्द्रियेभ्यः स्वतन्त्रोऽयं आत्मा मुक्तेरधिकारी भवेत्। सा तु आत्मनोऽवस्था असंसारिकी जायेत। संसारेऽस्मिन्निवसन्नात्मा कामक्रोधादिवृत्तिषु कार्याणि कुर्वन्नवतिष्ठते। संसारे निवसतो मनुष्यस्य कर्त्तव्यमिदं वर्त्तते यद्वृत्तीनां समतुलनं न विहन्येत, यदि समतुलनस्य विघातो भविष्यति तदैव बाधाबन्धनं वा भविष्यति। बाधनालक्षणं दुःखं इति न्यायेन सूत्रेण वा दुःखोत्पत्तिर्भवत्येव। तदा तु 'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ' त्रिविधानां दुःखानामुत्पत्तिः—आधिभौतिक, आध्यात्मिक, आधिदैविक—दुःखानामुत्पत्तिर्जायते। यद्येषां दुःखानामुत्पत्तिः सर्वथाऽपि न स्यात् तदा स अत्यन्तः पुरुषार्थ उच्येत। तर्हि अस्यार्थः एवं भवति यत्कथमपि संसारे निवसद्भिरस्माभिः दुःखजनकानां वृत्तीनां समतुलने यत्नो विधातव्यः। यदा समतुलने न्यूनताऽऽगमिष्यति तदैव दुःखोत्पत्तिर्भविष्यति। इदमत्र तात्पर्यं यद्वृत्तीनां समतुलने अस्माभिर्यत्नो विधेयः। असमतुलनत्वं मृत्योः स्वरूपं वृत्तीनां समतुलनमेव जीवनम्। कामक्रोधादिवृत्तीनां असमतुलनत्वं कथं प्रवर्त्तते इति विचार्यते अस्माभिः।

१ पुरुषाः परस्परं कन्यादिभिश्च वा संसर्गे आगताः दृश्यन्ते तदा संसर्गकाले आसु व्यक्तिषु बहुवारं कामवृत्तिः जागत्र्येव, सा वृत्तिः प्रबला चेद्भवेत। तदा मनसि असन्तुलनं भवति। अस्यामवस्थायां यदा मनसि वशीकारो न भवेत् तदा तस्याः कार्यरूपेण उन्मुखता भवति। असफलता चेदसन्तोषो वा भवेत्तदा व्यक्तिषु परस्परंवैमनस्यं जायते। बहुवारं तु तद्वैमनस्यं आत्मघातरूपेण परिणमते इति नाविदितं बुद्धिमद्भिः।

२ क्रोधद्रोहईर्ष्याप्रभृतिवृत्तीनां समुद्गमे मनसः समतुलनाऽभावे तासां वृत्तीनां प्रगाढता समुत्पद्यते। अनेन प्रगाढेन शरीरधातूनां काठिन्यं कठोरता वा संजायते। सैषा कठोरता ( स्किलरोसिस ) शब्दे-

नोच्यते । सैषा कठोरता आयु: क्षयकरी भवति । जीवनस्य क्षयः अस्मादेव प्रतीयते । धातूनां तन्तुषु कोमलता यावत्यां मात्राया-मवतिष्ठते तावत्यामेव व्यक्तीना जीवनं भवति। अत: इदमनेनानुमीयते यदि अस्माभिः जीवनस्य रक्षा कर्तव्याऽस्ति तदा धातूनां तन्तुषु कोमलतायाः रक्षणं कर्तव्यमिति । यदि वयमेतत्करणेऽसमर्थाः भवेम तदा मृत्युपाशेन बद्धा भवेम । एव ज्ञायते अस्मासु मृत्युः कथं समधिकरोति ।

३ यदा मनुष्यः लोभवृत्तिसमुद्गमे लुब्धः सन् भोजनग्रहणे हीनमिथ्यातियोगे सम्यग्भोजनं न गृह्णाति, तदापि परिपाकवशात् धातुषु काठिन्यं संजायते । मार्दवं कोमलता च विनष्टा एव भवतीति समुपलभ्यते । सैषा कठोरता मृत्योः स्वरूपं इति वेदनीयम् । एवमेव सर्वासां वृत्तीनामयमेव परिणामो भवति, येन परिणताः धातवः कोमलताया विनाशेन काठिन्यस्योद्गमेन च मृत्युपाशे बद्धाः जन्तवो दरीदृश्यन्ते । अतएवानुमीयते अस्माभिः सर्वे जनाः विकृतप्राणेन सर्वत्र सदा मृत्युपाशे निमग्नाः सन्तीति । कश्चिदपि सुविज्ञो वा स्यात् मूर्खो वा मृत्युपाशाधिगमने न मुक्तो बभूव भविष्यति वा । सर्वाः वृत्तयः यदा दुर्वृत्तयो भवन्ति तदा शोकवृत्तिषु परिणमन्ति । अतएवोक्तं 'शोकातिगो मोदते स्वर्गलोके' अनेनैव ज्ञायते सर्वा वृत्तयः यदा दुरधिगमा भवन्ति तदा शोकवृत्तिषु परिणमन्ति । केनापि हिन्दीकविनोक्तम्--

कामक्रोध अरु लोभ की
जब लग मन में खान ।
तब लग पण्डित मूरखा
सब हैं एक समान ।।
सब हैं एक समान
इसे कभी मत भूलिये ।
याद रखिये सर्वदा
स्वर्ग सुधा रस पीजिए ।।
कह कविराज मुनि देवराज
सुनै जो इनकी वानी ।
कहलावे इस लोक में
महामहिम व ज्ञानी ।।

"स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ।"

एवं खलु विवेचनेन सिध्यति मनसैव सर्वं कार्यं भवति अर्थात् मन एव सर्वमस्ति । मनसो वशीकरणेन इन्द्रियाण्यपि वशीभूतानि भवन्ति । अतः मनसो निवर्हणे सर्वथापि प्रयत्नो विधेयः एवं बुद्धिमद्भिराचार्यैरुक्तम् । नात्र मनागपि उपेक्षा विधेया । अतएव उच्यते सत्यस्य परिपालनम् सावधानतया विधेयम् । सत्यस्य परिपालनेनैव सर्ववृत्तीनां निरोधो जायते । अस्यैव नाम योगो भवति । महामुनिना पतञ्जलिनोक्तं योगदर्शने— 'योगश्चित्तवृत्तिनिरोधः ।' वृत्तीनां निरोधः कथं क्रियते ? निरुद्धाः वृत्तयः पुनः समुत्तिष्ठन्ति । संस्काराधीनाः चित्तवृत्तयः । वृत्तिभिः संस्काराः संस्कारैश्च वृत्तयः प्रादुर्भवन्ति । तदित्थं वृत्तिसंस्कार चक्रमनिशमावर्तते । एवं वर्तमाने सति वृत्तीनां निरोधे संस्काराणामपि निरोधः स्वत एवायाति, न केवलं निरोधः परं समूलोन्मूलनं भवेत्तदैव पारतन्त्र्यापहानिः स्वाधीनतायाश्च लाभः स्यात् । अस्मिन्लाभे कथ विधातव्यमित्येष प्रश्नः समुदेति । एषा खलु ब्राह्मी स्थितिः, 'नैनां प्राप्य

विमुह्यति अर्थात् वृत्तिसंस्कारचक्रपाशान्मुक्तो भवति। तस्य ब्रह्मणो लक्षणमुच्यते भगवद्गीतायां 'निर्दोषं हि समं ब्रह्म।' एतदेवाधिकृत्य तत्रैव 'योग' लक्षणमपि व्यधायि 'समत्वं योग उच्यते' अनेन समत्वयोगेनैव चित्तवृत्तिनिरोधात्मको योगः संसिद्धो भवति। योगस्य साधनारूपेण 'चित्तवृत्ति-निरोधः' इत्युक्तं भवति। एतत्साधनमपि तदैव भवति यदा साधकः चित्तवृत्तिषु समत्वं स्थापयति। विषमत्वं चेत्तदा तत्रोद्विग्नता सन्तिष्ठते। काम-क्रोधलोभादिवृत्तीनां समुद्गमनमेव चित्ते उद्वि-ग्नतायाः सूचको भवति। उद्विग्नता न स्यात् तदा चित्तं शान्तसंकल्पं सौमनस्कं च भवेत्। पति-पत्नी-पिता-पुत्र-गुरु-शिष्यः इत्यादिरूपेण यावन्तः सम्बन्धाः विद्यन्ते तेषामिदमेव प्राधान्येन प्रयोजनं यत्ते व्यवहारकाले कामक्रोधादिवृत्तिषु प्रवर्त्त-मानानस्मान्सूचयेयुः कदा कदा वयमुद्विग्नाः सन्तः पराधीना अपि स्वाधीनताऽभिमानिनः वञ्चयन्ति प्रेक्षकानितरान् जनान्।

अद्य तु प्रत्यहं दरीदृश्यते, न कोऽपि वाञ्छति यत् कश्चिदन्यः तं निरुन्ध्यात्, यथा स करोति तथा करोतु, यदि गर्ते पतति पततु नाम सः,का नो हानिः। यदि व्यवहारः इत्थमेव चलेत तदा कारु-ण्यस्य तु लोप एव जातः एव मन्तव्यम्।

यदि कश्चित् स्वाधीनताभिमानी ज्वरेणान्येन वा केनापि रोगेण समाक्रान्तः स्यात् अन्यं कमपि जनं साहाय्यार्थं वाञ्छेत् तदा कारुण्यवशात् तस्य साहाय्यं लब्ध्वा नितान्तं प्रसीदति तस्य चेतः, एवमेवास्माभिः न क्षोभः करणीयः किन्तु सहन-शीलतया स्वस्य दोषस्य मार्जनं विधातव्यम्। क्षोभस्य कर्ता कारयिता चोभावपि पापीयांसौ भवतः। जीवनसूत्रमिदं 'क्रोधानृते वर्जय' इति उपनयन काले एव आचार्यः उपदिशति ब्रह्मचारिणे। ततोऽभ्यसमानः ब्रह्मचारी एवाध्ययनकाले न क्रोधं करोति नापि च स क्षोभमापन्नो भवति। न जानन्ति अद्यत्वे अध्यापकाः एकं वारं क्रोधकरणेन महती वीर्यहानिः सञ्जायते. अत एव ब्रह्मचारिणे नियमः कृतोऽस्ति 'क्रोधानृतेवर्जय।'

सर्वे जनाः वाञ्छन्ति यत् तेषां शरीरे वीर्यवृद्धिः स्यात्, प्रार्थनाञ्च कुर्वन्ति 'वीर्यमसि वीर्यं मयि धेहि' प्रयत्नं विना प्रार्थना सफला न भवति। स च प्रयत्नः मनसः साम्यस्थितिरूप एव। कार्यकाले समुत्पन्ने क्रोधवशात् क्षोभवशाद्वा न तां स्थितिं धारयितुं शक्नुवन्ति। पराधीना अपि ते स्वाधीनता-भिमानिनः गुरुशब्दं भजन्तः कलङ्कयन्ति तस्य शब्दस्य माहात्म्यम्। अत एव भगवता मनुना स्पष्ट-मुक्तम् —'अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनं वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता।' एवं सति सुविज्ञैः जनैः साम्यावस्थामभ्यसद्भिः तडातडिप्रयोगेण हस्तः संकोचनीयः। आशासे स्वाधीनतारहस्यमधिजिगांसमानैः आत्मनः परेषां सर्वेषामिति यावत् कल्याणं भविता इति नास्ति संशयलेशोऽपि। ओम् शम्।



# सर्वजनहितकरोऽयं शिक्षासन्देशः

पं० नृसिंहदेव शास्त्री व्या. सर्वदर्शनाचार्यः गुरुकुल विश्वविद्यालय हरिद्वारम्

अयि महाभागा नरा नार्यश्च शिक्षामन्तरा कोऽपि देशः कोऽपि समाजश्च कस्मिन्नपि कर्मणि क्वापि क्षेत्रे चस मुन्नततरो न भवितुमर्हति । अत एव मत्प्रदर्शितशिक्षानिर्वचने शिक्षितैरशिक्षितैर्दीक्षितैरदीक्षितैश्च विवेकशीलै निपुणदृष्ट्या गम्भीरतर विवेकेन च नैजं मनो योजनीयम् । का नाम शिक्षा किञ्च तस्या निर्वचनमिति विशदीकृत्य प्रदर्श्यते । शिक्ष विद्योपदाने, इत्यस्माद्धातोःक्तिन् प्रत्ययं प्रबाध्य (गुरोश्च हलः) इतिसूत्रेण भावेऽप्रत्यये जाते पुनः स्त्रीत्वाधिकारात्तस्माट्टापि कृते सति शिक्षण शिक्षा–इति शब्दो निष्पद्यते । यद्यपि शक्लृ शक्तौ, शक विभाषितोमर्षणे, इत्येताभ्यां धातुभ्यामपि सनि प्रत्यये कृते सनिमीमाघु, इति सूत्रेणेसादेशे द्वित्वेऽभ्यासलोपे च स्कोरिति सूत्रेण स लोपे षत्वे कषसंयोगे क्षत्वे ततः क्तिन् प्रत्ययं निराकृत्य (अप्रत्ययत्) इति सूत्रेण, अकारप्रत्यये स्त्रीत्वात् टापिच कृते जायते शिक्षाशब्दः । तथापि पूर्वोक्तसिद्धिप्रकार एव ज्यायान् यतोहि प्रक्रियालाघवात् सिद्धिप्रदर्शनं येन केनाऽपि प्रकारेण क्रियतां नास्ति कश्चन शब्द सिद्धिव्यत्यासः सत्यवयवार्थे रुढचर्थस्यासम्भवात् । शिक्षायाः सर्वप्राणिषु किमु, सर्वजडपदार्थेषु महावश्यकता दरीदृश्यते यतोहि शिक्षां विना सौष्टवं सौन्दर्यञ्च क्वापि कदापि त्रिकावच्छेदेनापि न समायास्यतीति निश्चप्रचम् । स्थावरास्तरुगुल्मादयो जंगमाः पशुपक्षिणोऽपि च यथायोग्यं साधारणशिक्षां कामयन्ते परञ्च विशेषशिक्षापात्राणि मानवा एव । तरुगुल्मादयाऽपि सशिक्षिताः सन्तो विशेषमधुररसमयानि फलानि समुत्पादयितुं क्षमन्ते । पशवोऽपि शिक्षिता भवन्तः मानवसंकेतकर्मणि नैपुण्यमायान्ति । पक्षिणोऽपि शुकपिकादयो मानवकल्पानि व्यक्तवचांसि समाचरितुमर्हन्ति किं बहुनेति । तथाप्यस्यैवातिस्पष्टप्रतिपत्तये वाणभट्टकृतिः प्रमाणत्वेन प्रदर्श्यते । कृतप्रणामायां–मणिकुट्टिमोपविष्टायां चाण्डालकन्यकायां तस्यां पूर्वोक्तो धवलवासाः पुरुषस्तं शुकमादाय किञ्चिदुपसृत्य राज्ञे प्रदर्शितवान् अब्रवीच्च हे देव ! अयं विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहासकथालापनिपुणः, गीतश्रुतीनां ज्ञाता, काव्यनाटकाख्यायिकाख्यानकप्रभृतीनाम् अपरिमितानां सुभाषितानां पाठकः स्वयञ्च कर्ता, परिहासपेशलः, वीणावेणुमुरजादीनाम् अद्वितीयः श्रोता, नृत्यप्रयोगदर्शननिपुणः, चित्रकर्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, गजतुरंगपुरुषस्त्रीलक्षणाभिज्ञः, सकलभूतलरत्नभूतो वैशम्पायनो नाम शुकः सर्वरत्नानामुदधिरिव देवो भाजनमितिकृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता । एतत्पुष्टयेऽन्यदपि प्रमाणं श्रीशंकराचार्यदिग्विजयस्थं प्रदीयते–तथाहि भगवान् शंकराचार्यो वैदिकधर्मप्रचाराय पाखण्डखण्डनाय च स्वगृहतो निर्गत्य क्रमशो परिभ्रमन् नर्मदातीरे विश्रम्य च कृताह्निकः सन् मण्डनमिश्रालयं प्रति चचाल । मार्गे च तदीया दासीर्दृष्ट्वा पप्रच्छ भगवान् मण्डनमिश्रस्य गृहं क्वेति तदाऽद्भुतस्वरूपं शंकरं दृष्टवा संतोषवत्यः स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति । द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः इत्यादि त्रिभिः श्लोकैरुत्तरं ददुः । एवंभूतैः प्रबलतरप्रमाणैः पशुपक्षिणां कृते षडङ्गवेदादिशिक्षा प्रतिफलति तर्हि मानवानां कृते किमुत इति। शिक्षायाः केवलसाक्षरतामात्रे पर्यवसन्नता न मन्तव्याऽपितु विद्योपदानमात्रे तथाहि पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश । तथा, आयुर्वेद, धनुर्वेद, गन्धर्ववेद, अर्थशास्त्र, इत्युप-

वेदाश्चत्वारः। पूर्वोक्तचतुर्दशभिः संकलनेनैषामष्टादशविद्यास्थानानि भवन्ति। शिक्षाशब्दस्य वेदाङ्गेष्वपि शिक्षा–कल्प–व्याकरण, निरुक्त, छन्दः, ज्योतिष्इतिवत्परिगणना वर्तते परमयं शिक्षाशब्दः परिशिक्षणमात्रे व्यवह्रियते जनैरितिध्येयम्। एष शिक्षाशब्दो ज्ञानविज्ञाने चरित्रे च सर्वत्र व्यवह्रियमाणो दृश्यते किं बहुना सर्वभूतभौतिकविद्योपादानाय सर्वाध्यात्मिकविद्याग्रहणाय च परमसमर्थ अत एव सर्वे प्राणिनो विशेषतः सर्वे मानवाः शिक्षामाददीरन् येन फलचतुष्टयमाशुतया लभेरन्। ये देशा अद्य ज्ञानविज्ञाने समुन्नताः सन्ति तत्र तदीया मानवाः प्रायः शिक्षिता वर्तन्ते। यदाऽस्माकं भारतदेशे प्रायः सर्वमानवाः शिक्षिता आसन् तदा भारतदेशोऽय समेषामन्येषामपि देशानां कृतेऽनुकरणीयोऽभवत्। सर्वशिक्षायाः प्रभावेणैव भारतस्य विषये 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' इति प्रकथनं संगतमासीत्। सामान्यतो नहि अपितु विशेषतो मानवजीवने शिक्षाया अपूर्वं महत्त्व वर्तते। विशेषशिक्षयैव मानवो मानवतां लभते। मानवानामन्तर्हिता गुणा विशेषशिक्षयैव प्रकाश्यन्ते शिक्षयैव मानवाः समाजे समादृता भवन्ति समाजस्य च कल्याणमपि विधातुं प्रभवन्ति। प्रत्येकदेशस्य शासनसूत्रं प्रायः शिक्षितानामेव हस्तगतं वरीवृत्यते। अशिक्षिता मानवाः स्वदेशस्यानेकान् प्रश्नान् सम्यगवगन्तुमपि न क्षमन्ते। आधुनिके वैज्ञानिके युगे भौतिक शिक्षाया अत्यावश्यकता दरीदृश्यते। यैः साधनै र्मानवस्य मस्तकहृदयशरीराणि समानरूपेण सुसंस्कृतानि सुविकसितानि च भवन्ति तानि सर्वाणि साधनानि शिक्षायामन्तर्भूतानि सन्ति।

यदा वयं पश्यामस्तदा महान् खेदो भवति यदद्य प्रायः सर्वेऽपि शिक्षिता जनाः शिक्षाया वास्तवस्वरूपं परिहायेतस्ततः प्रधावन्ति। स्वार्थसिद्धिरेव शिक्षायाः साम्प्रतिकमुद्देश्यं प्रतीयते। किमस्य पतनस्य कारणमिति चेद् विचारयामस्तर्हीदमेवान्ततोगत्वा निश्चीयते यच्छिक्षाया वर्तमानस्वरूपमतिविकृतं समजनि। परञ्चातिसूक्ष्मदृष्टया शास्त्रीयेऽर्थे शास्त्रीय सामर्थ्य निर्णेतॄणां सकललोकशास्त्रविचारदक्षाणां शिक्षाशास्त्रविषयकं निर्णयं वीक्ष्य महाखेदसागरे निमज्जति मनः। शास्त्रधौरेयाः केचन बद्धपरिकरीभूय ब्रुवते यत् "स्त्रीशूद्रौ नाऽधीयतामिति श्रुतिप्रमाणेन स्त्रीणां शूद्राणाञ्च कृते धर्ममोक्षशिक्षाशास्त्रे वेदाध्ययनपूर्वकं नास्त्यधिकार इति। अपरञ्च "शूद्रो यज्ञेऽनवक्लृप्तः" अष्टवर्षं ब्राह्मणमुपनयात" तथा वसन्ते ब्राह्मणोऽग्नीना दधीत इत्यादिवचनबलेन कृतोपनयनानां प्राप्ताग्न्याधानानां ब्राह्मणक्षत्रियवैश्यानामेव वेदाध्ययनशिक्षाऽधिकार इति प्राप्ते ब्रूमो वयम्, यथामीमांसकाः "विश्वजिता यजेत" इति वाक्ये फलश्रुतिर्न दृश्यते तथा स स्वर्गः स्यात् सर्वान् प्रति,अविशेषात्–इति फलत्वेन स्वर्गं कल्पयन्ति, एवमिहापि स्त्रीशूद्रविषयेऽपूर्वोपनयनाग्न्याधानादीनां कल्पना क्रियतां का विप्रतिपत्तिरिति। किञ्च जनकसञ्चितवस्तुषु ज्येष्ठकनिष्ठपुत्राणां समेषां समोऽधिकारो वर्तते तथैवेश्वरसृजनपदार्थेषु सर्वेषां जनानां तुल्योऽधिकारः सहर्षं स्वीकरणीयः को विरोधोऽत्रेति। यतो हि परिणामस्वरूपा हि–भावा अपरिणम्य क्षणमपि नावतिष्ठन्ते ऋते चितिशक्तेरिति नियमेन यद्यत्र विषयेऽस्मिन् समये परिवर्तनमपि भवेत् तर्हि सर्वथा वर्तमानराज्यशासनेन सह सामञ्जस्यं समुत्पद्येत। यदि वयमेतद्देशप्रसूतानां शूद्राणां स्त्रीसमाजस्य च कृते वेदाध्ययनशिक्षां न दास्यामस्तर्हि तेऽवज्ञाय विधर्मं प्रवेक्ष्यन्ति। मुक्तहृदयेन समधिक्रियन्तां तत्र विषयेऽन्तरालता काचन मा विधेया तेन ते स्वयं सन्तोक्ष्यन्ति स्वयञ्च निवर्तिष्यन्ते। प्रतिसमये राज्यशासनवद् धर्मशासनमपि परिवर्तनीयम् आप-

त्तिकाले मर्यदा नास्ति, इति नियमेन । एवञ्च स्मृतिरपि समुद्घोषयति यथा—कलौ न क्षत्रियाः सन्ति कलौ न वैश्यजातयः । ब्राह्मणाश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम् ।। अपरञ्च विद्वांस एव शास्त्रस्य मुखं परिवर्तयितुमपरिवर्तयितुमन्यथापरिवर्तयितुं समर्था भवन्ति यथा भगवन्तः शकराचार्याः स्वामिदयानन्दप्रभृतयइति । विदुषां कृते सर्वत्र शास्त्रेषु निष्कण्टकाजिह्माराजपद्धतिरेव किं भूरिणेति ।

"निषादस्थपतिं याजयेत्" इति श्रूयतेऽत्र किं निषादस्थपतिशब्दे षष्ठीतत्पुरुषो बहुव्रीहिरुत कर्मधारय इति संशये सति निश्चायका विद्वांस एव नानार्थे तात्पर्यात् विशेषावगतिरिति स्वरचित न्यायेन । तथा च वर्षासु रथकारोऽग्नीनादधीत, इत्यनेन रथकारस्य सौधन्वनापरपर्यायस्याधानं विहितं परन्तु—अध्ययनविधिसिद्धज्ञानाभावान्नास्योत्तरकर्मस्वधिकारः किन्तु तदाधानं लौकिकाग्निगुणक विश्वजिन्न्यायेन स्वर्गफलकं निश्चिन्वन्तीति बोध्यम् । इयं सर्वा लीला विदुषामेव नहीश्वरस्य, विश्वजिन्न्यायवत् सर्वान् प्रतीश्वरस्तु पर्जन्यवद् द्रष्टव्यः । पुरातनकालतो विदुषां विचारधारा यत्र तत्र संस्कृतभाषायाः प्रचारस्य प्रसारस्य च प्रतिबन्धिका संजाताऽन्यथेयं राष्ट्रभाषापदं प्राप्नुयात् किमधिकेनेति । अस्याः शिक्षानिरोधेन राष्ट्रस्य सर्वोन्नति विनिष्टा । वैज्ञानिकै र्निमितानि वस्तूनि वायुयाना दीनि सर्वान् उपकुर्वन्ति प्रत्युत वैदिका याज्ञिका मीमांसकाश्च सुचारु तरेण तद्द्वारैव यात्रां प्रकुर्वन्ति । वैदिकशिक्षाप्रचाराय स्त्रीणां शूद्राणां च कृते महर्षिश्रीदयानन्देन महान् प्रयत्नोव्यधायि, तत्प्रचारे—एव तेषां निधनं जातम्इतिमहाकष्टम् । ते महाभागा इत्थमगादिषुर्यदीदमेव सत्यं स्त्रीणां शूद्राणां कृते वेदाध्ययनशिक्षाधिकारोनास्ति तर्हि 'इङश्च' ३।३।२१ इति सूत्रस्य वार्तिकम्—यथा 'अपादाने स्त्रियामुपसंख्यानंतदन्ताच्चवाङीष्, इति वार्तिकेन घञि विकल्पेनङीषिचकृते उपेत्य अस्या अधीयते—इति उपाध्याया उपाध्यायीति रूपद्वयं निष्पद्यते एवञ्चान्यथानुपपत्त्या स्त्रीणां कृते वेदाध्ययनाध्यापनशिक्षाधिकारः सूच्चितो भवति । अत एव कठी, बह्वृची, अध्वर्युरित्यादिव्यहाराः सिद्धयन्ति । किञ्च—आचार्यस्य स्त्री आचार्यानी परञ्च या स्वयं व्याख्यात्री सा आचार्या इत्यादि प्रयोगबलेन स्त्रीणां कृतेऽकाट्योवेदशिक्षाधिकारः । ब्रह्मचर्येण कन्यायुवानं विन्दते पतिम्" अथर्व० कां० ११। प्र० २४। अ० ३। मं० १८। श्रौतसूत्रेऽपि "इमं मन्त्रं पत्नी पठेत्" एवं प्रमाणेनापि वेदशिक्षायां स्त्रीणामधिकारः । सर्वेषां जनानां कृते शूद्राणामपशूद्राणां वा कृते वेदादिशास्त्र पठन पाठनशिक्षाधिकारविषये यजुर्वेदस्य षड्विंशत्यध्यायेऽस्य द्वितीयो मन्त्रः । "यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय ।। यजु० अ० २६। मं० २। अभिसन्धिरयं सर्वेषां मनोरपत्यानां सर्वत्र वैदिकशिक्षायां जन्मसिद्धोऽधिकारोऽतएव सर्वेऽपि यथाशक्ति यथामति सर्वशिक्षायैयतेरन् । ऋषीणां दर्शनं तत्त्वविषय भवति तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवात् व्यवहारकाले तेऽपि—अदृष्टतत्त्वसदृशा भवन्ति—अतः तद्वचसाऽपि पदपदार्थयोः सत्यत्वं न मन्तव्यमिति वैयाकरणसिद्धान्तलघुमञ्जूषायां श्रीनागेशभट्टा इति निवेद्य विरम्यतेऽन्यत्सर्वमवदातम् ।

# साहित्य-समीक्षा

( समालोचनार्थं प्रति पुस्तक की दो प्रतियां पत्रिका कार्यालय में आनी चाहियें )

## कल्याण ( हिन्दी )

( भगवन्नाम-महिमा और प्रार्थना-अङ्कः )

सम्पादकौ–श्री हनुमान प्रसाद पोद्दार, श्री चिम्मनलाल गोस्वामी, प्राप्तिस्थानम्–गीता प्रेस गोरखपुर। पृष्ठ संख्या–७००, मूल्यम्–७.५०, विदेशे–१०.००।

गोरखपुरनगरात् प्रकाश्यमानस्य सुप्रसिद्धस्य 'कल्याण' पत्रस्यायं बृहद् विशेषांकः समालोचनार्थं सम्प्राप्तोऽस्माकं हस्ते विद्यते। अस्मिन् वर्षे 'भगवन्नाममहिमा और प्रार्थना अंक' इति विषयमुपजीव्य बुद्धिमतां प्रकाण्डपण्डितानां, भक्तिप्रवणानां साधुमहात्मनां च विचारोत्तेजकैर्लेखैः पल्लवितोऽयं विशेषाङ्कः कस्य मानसं नावर्जयति ? अद्यतने रागद्वेषशोकमोहादिपरिपूर्णे विविधाधिव्याधिभीतिभरितेऽसारेऽस्मिन् संसारे यद्यस्ति किञ्चिच्छान्तिप्रदमवनसाधनं तदनवरतं भगवन्नामस्मरणमेव विद्यते। सत्यस्वरूपात् भक्तहृदयादुत्थितः प्रार्थनाप्रवाहापूरस्तादृशस्तीव्रसंवेगवान् भवति यत् कूटस्थः स्थाणुरपि प्रवाहपतितो न तत्र स्थातुं शक्नोति। भक्तस्य विरहवह्नौ सुसन्तप्तं पतितञ्च तन्नयनाश्रु किमु व्रजं वज्रादपि कठोराणि द्रवीकरोति। भक्त एव विजानाति भक्तस्य हृदयशक्तिसंवेगम्। ममातिप्रियविषयेष्वेकतमोऽयं विषयः भगवन्नामस्मरणरूपः। कलिकालवशात्कलुषितं रागद्वेषपरिपूर्णं भारतहृदयं प्रक्षालयितुं परिमार्जितुं वा एतादक् साहित्यमेव क्षमम्। अस्यात्युत्तमसामग्रीसम्पन्नस्य विशेषांकस्य प्रकाशनाय वयं सम्पादकमहाभागानामभिनन्दनं कुर्मः। अस्याङ्कस्य देशविदेशेषु प्रभूतं प्रचारं वाञ्छामः।

## धन्वन्तरि

( वनौषधि विशेषांकस्य तृतीयो भागः )

प्रकाशकः – धन्वन्तरि कार्यालय विजयगढ़ ( अलीगढ़ )।

विशेषांकसम्पादकः–श्री आयुर्वेदसूरि श्री प० कृष्णप्रसादः त्रिवेदी, बी. ए. आयुर्वेदाचार्यः।

स्थायि सम्पादकाः — श्री वैद्य देवीशरण गर्ग आयुर्वेदोपाध्यक्षः श्री ज्वालाप्रसाद अग्रवाल बी.एस. सी., श्री दाऊदयाल गर्ग, ए एम बी. एस। पृष्ठ संख्या–५४३, मूल्यम्–८.५०।

धन्वन्तरिपत्रस्य वनौषधिविशेषाङ्कोऽयमस्माभिरवलोकितः। अस्मिन् दृष्टिपातेन प्रतीयते यदयं तृतीयो भागोऽपि सम्पादकवर्यैः भूरिपरिश्रमेण सुसम्पादितः। अस्मिन्नङ्के २१४ वनस्पतीनां सुविस्तृतं वर्णनं कृतमस्ति। १५९ वनस्पतीनां चित्राण्यपि प्रदत्तानि। सर्वप्राणिनां मानवानां च समग्रं जीवनं वनस्पतीनामोषधीनां च सम्यक् सेवनेन सुस्थिरं निरामयं सारवच्च सम्पद्यते। यदि चिकित्सकाः केवलं स्वार्थान्धा वित्तमोहेन मूढा भूत्वा आयुर्वेदविद्यामनर्थकरीमेव मन्येरन् तत् सर्वत्र मृत्योः साम्राज्यं विततमिति मन्तव्यम्। परं यदि परोपकारभावनया प्रेरिताः सन्तः तेषां गुणवीर्यादीनां सुविज्ञातारो भवेयुस्तत् पृथिव्यां सर्वाः प्रजाः निरामयाः भूत्वा पूर्णायुषजीविन्यो व्याधिभीतिरहिताः निरातङ्का भवेयुरित्यत्र नास्ति संशीतिलेशोऽपि। परमद्यापि न विद्यते स्थितिः सन्तोषप्रदेति ब्रुवते केचन। ओषधीनां प्रशासितुः सोमाधिपतेः राज्यस्य विस्तारं केन लब्धम्? ओषध्यन्तर्गतशक्तिवीर्यगुणादिकस्य पूर्णज्ञानं केन विहितम्? बहुव्ययसाध्योऽयं विषयो भूरिपरिश्रमपेक्षते। सर्वकारसाहाय्येन विना न कथमपि सेत्स्यतीति मन्तव्यम्। अस्यामवस्थायां धन्वन्तरिवैद्यानामेव महान् प्रयासो भृशं साधुवादार्हः। इतः पूर्वमपि वनौषधिविशेषांङ्कस्य भागद्वयं प्रकाशितं तैरिति भूयोभूयोऽभिनन्दनीयास्ते। अस्यातिस्तुत्यस्य महतः प्रयासस्य

साफल्याय परमपितरं प्रभुं प्रार्थयामहे । देशविदेशेषु प्रभूतं प्रचारं कामयामहे ।

## वीरभूमि हरियाना

### नाम और सीमा

लेखकः—श्री भगवान् देव आचार्यः ।

प्रकाशकः—हरियाना साहित्य संस्थान, गुरुकुल जज्झर, जिला रोहतक (पंजाब)। पृष्ठ संख्या १५६, मूल्यम् ४)।

अस्य पुस्तकस्य लेखकोऽयं संकल्पधनो महातपाः आचार्यः श्री भगवान् देवो विद्यते । यथाऽयं तपस्वी दर्शनमात्रेण परिश्रमस्य साक्षात् मूर्तिरिव प्रतीयते तथैव तल्लिखितं पुस्तकमपि भूरिपरिश्रमं व्यनक्ति । हरियानाप्रदेशस्य नाम तस्मै कदा केन प्रदत्तमिति का चास्य सीमेत्यादिकं विषयमुपजीव्य तर्कप्रमाणाभ्यामुपबृंहितमैतिह्यविदां धरातलमारुह्य साधुविवेचनं विहितम् । अस्य नामनिर्धारणे येऽनेकेऽसम्मता हेतुवादा अत्र पुस्तके प्रदर्शितास्तेषां तर्कप्रमाणपुरस्सरं सम्यक् समाधानमनेन विदुषा विहितम् । लेखकमहोदयस्य नामनिर्धारणविषये स्वकीयं मन्तव्यमित्थमस्ति—

१. हरस्य यानम्=हरयाणम्, यानं=निवासस्थानम् । यह प्रदेश हर=शिव व शिव के पुत्रों का निवास स्थान रहा है, इस लिए इस को हरयाण कहते हैं ।

२. हरस्य यानानि=विमानानि गच्छन्ति यस्मिन् प्रदेशे सः हरयानः=हरयाणः । जिस प्रदेश में हर के विमान चलते हों वह प्रदेश हरयाणा कहलाता है ।

अत्र किञ्चिद्विचार्यते —— लेखकमतानुसारं सृष्ट्यादौ समुत्पन्नः कश्चित् हरः शिवो वा पुरुषविशेषस्तस्याधिपत्यवशादस्य प्रदेशस्य हरयाना नाम सम्पन्नं तन्न सम्यक् प्रतीयते । अस्मन्मते तु हरयानाप्रदेशवास्तव्या भगवतः परब्रह्मणोऽसंख्यनामसु विशिष्टरूपेण हरस्यैवोपासका आसन् । अन्यच्च दुःखनिहन्ता हरोऽयं वृषभारूढ इति प्रसिद्धिः । यतो हि यत्र गोवृषभाणां बाहुल्यं भवति तत्रैव दुःखानां हरणं जायते । अतएवालङ्कारगर्भितां सरणिमनुसृत्य पूर्वसूरिभिर्हरस्य यानं गोवृषभा इत्युक्तम् । तत्र प्रदेशे गोवृषभाणां बाहुल्यात्, सततं च गोवृषभाणामितस्ततः सञ्चलनं गमनं यानं हरस्यैव गमनं यानमिति मन्तव्यम् । अस्माद्धेतोः 'हरयाना' नाम सम्पन्नम् ।

यौधेयगणाधिपतेरादिपुरुषस्य हरः शिवो वा नाम भवतु न वा भवतु न तेनात्र प्रयोजनम् । यतः पृथिव्यां शासनं तु परमप्रभोरेव भवति राजा च भगवतः परमपुरुषस्य प्रतिनिधिरूपेण शासनमधितिष्ठतीत्येषा प्राक्तनी परिपाटी । एवमेवास्य प्रदेशस्य सर्वे वास्तव्याः क्षत्रशक्तिसम्पन्ना युद्धप्रिया आसन् । अस्माद्धेतोः यौधेयनाम तेषां चरितार्थं सर्वेभ्यश्च प्रियमासीत् इत्यस्त्यस्माकं सामान्यजनानुबन्धिनी विचारसरणिः । न वयमैतिहासिकाः । ऐतिह्यदृष्ट्या तु विदुषा लेखकेन यल्लिखितं तत् साधु समीचीनमिति मनसि पदं दधाति । वयमस्यात्युत्तमपुस्तकस्य विरचनाय लेखकमहोदयस्याभिनन्दनं कुर्मः प्रभूतं प्रचारञ्च कामयामहे ।

—भगवद्दत्तो वेदालङ्कारः



# सम्पादकीयटिप्पराय:

अयि गीर्वाणवाणीप्रणयिन: सुरभारतीसेवाव्रतिन: सहृदया: प्रियपाठका: प्रणामपुरस्सरं सविनयं निवेद्यन्ते यत् गुरुकुलोत्सवावसरे विगतवर्षइवास्मिन् वर्षेऽपि गुरुकुलपत्रिकाया: शिक्षा-विशेषांकोऽयं वैशाखमासस्य प्रथमायां तिथौ भवतां सेवायां प्रहीयते । अस्मिन्नङ्के बहूनां विद्वद्धौरेयाणां भारतीयसंस्कृतिपुनरुज्जीवनसमयाचाराणां पण्डितवर्याणां लेखा भवतां हृदयावर्जका नूनं भविष्यन्तीत्याशासे । भारतवर्षस्य भौतिकाभ्युन्नतिक्षेत्रे त्वयं विज्ञानवाजी समुत्प्लुत्यातिरंहसा प्रधावमानो विलोक्यते नास्त्यत्र संशीतिलेशोऽपि परं केवलमसौ वैरोचनीं विद्यामेव पुष्णातीति बोध्यम् । भारतीयसंस्कृतेराधारभूताया: सर्वविद्यानामधिष्ठातृरूपाया अध्यात्मविद्याया मनागप्युन्नतिर्जातेति न श्रूयतेऽपितु ह्रास एव सर्वत्रावलोक्यते । पुराकाले त्वाधारभूतस्याध्यात्मवृक्षस्यैवेमानि प्रफुल्लानि चतु:षष्टिकलापुष्पाणि फलवत्यो विज्ञानशाखाप्रशाखाश्च परिगण्यन्ते स्म । अध्यात्मविद्या विद्यानामित्याभाणक: समेषां हृदि सततं जागरूक आसीत् । सर्वाधारभूतामेतामध्यात्मविद्यां विहाय केवलं भौतिकाभ्युन्नतिस्तदुद्देश्यं सम्पूरयितुं क्षमा न । अद्यतने युगे भारते केवलं भौतिकोन्नत्यै सर्वं प्रयत्नजातं क्रियमाणं दरीदृश्यते । आत्मतत्वस्य विकासाय देशभक्तिस्वसंस्कृतिप्रेमानुशासनविनयादिगुणानां सम्प्राप्त्यै न किञ्चिदपि प्रयत्यते । अस्यायं परिणामो यत् सर्वप्रदेशषु छात्राणामुद्दण्डतोच्छृङ्खलतादिदुर्गुणा दृग्गोचरीभवन्ति । पुराकाले तक्षशिलानालन्दादिविश्वविद्यालयेषु छात्राणामौद्धत्यमनुशासनहीनतादिदोषा: किं श्रूयन्ते स्म ? अधुना न केवलं छात्रा एव विकृतिदशामापन्ना प्रत्युत तेषां गुरवोऽपि रुग्णा: सञ्जाता: । उत्तरप्रदेशबंगप्रदेशादिराज्यानां शिक्षका सत्याग्रहं कर्तुं केन प्रच्छन्नशक्तिना प्रेरिता: ? अत: परिपक्व: सन्नयं शिक्षाविकृतिव्रणोऽधुना चिकित्सकस्य व्रश्चनमपेक्षते ।

राष्ट्रस्य का सम्पर्कभाषा स्यादिति प्रश्ने समुपस्थिते सर्वराज्यनेतृवर्गै: संसद्सदस्यैश्च हिन्दीभाषापक्षे यो निर्णयो व्यधायि तस्य विरोधकरणाय विद्यार्थिभी राष्ट्रीय सम्पत्तेर्विनाशसमकालमेव परमयोगीश्वरस्य श्री अरविन्दमहाभागस्याश्रमोऽपि वह्निसात् कृत: । किमेतत् हिन्दीविरोधकरणं विद्यते? क: सम्बन्धो हिन्दीभाषयाऽऽश्रमस्य ? अस्मन्मते तु सर्वं तत्ताण्डवनृत्यं न तावत् हिन्दीविरोधकरणाय यावदध्यात्मशक्तिविरोधाय विद्यते । अयमासुरशक्तीनां देवशक्तिविरोध: । भारते शिक्षाक्षेत्रे आसुरशक्तीनां प्रवेश: सञ्जात इति बोध्यम् । अन्यच्च एतादृशं संघर्षमराजकतां वा विलोक्य संविधानशास्त्रे परिवर्तनं क्रियते चेत् तल्लोकनीतेर्लोकतन्त्रस्य विलोप: प्रारब्ध इति मन्तव्यम् । यतो वयं हिंसककार्येभ्यो भीतभीता: संविधानमपि गोपायितुं न समर्था: । साम्प्रदायिकवैषम्यं जानपदीयविरोधत्वं जातीयपक्षपातादिकं भाषीयदुराग्रहत्वादिकमेवमादयो देशपतनहेतवो दोषा विनैकत्वदर्शनं नापयास्यन्ति । तदेकत्वदर्शनं कथं समुपजायेतेति विषमोऽयं प्रश्न: । अस्मन्मते वेदशास्त्रोपनिषद्गीतायोगशास्त्रादीनामध्ययनं भवेत् । धर्मेतराणामुत्कृष्टविचारपूर्णा: समन्वयसम्वादात्मकधर्मोपदेशा अपि ग्राह्या: । संस्कृताध्ययनं सर्वत्रानिवार्यरूपेण विधातव्यम् । यतो हि संस्कृतं देववाणी निगद्यते तत्रास्ति तत् सामर्थ्यं येन संकीर्णमनोवृत्ति: प्रपलायते चित्तञ्च दिव्यधरातलमारोढुमर्हति । अनेके शिक्षायोगा: समये समये संघटिता: परमद्यापि हीनधरातलाद् दिव्यधरातलं नारूढा नश्चित्तवृत्ति: । अत: शिक्षाक्षेत्रे आमूलचूलपरिवर्तनं विधातव्यमित्यस्त्यस्माकं विचारसार: ।

अन्ते सहृदयै: प्रियपाठकैर्विद्वद्भिर्लेखकै: सविनयं प्रार्थना विद्यते यदस्मिन् मासेऽस्माकं रुग्णवशादस्मिन् विशेषांके यत्र तत्र त्रुटि: सम्भाव्यते तन्नीरक्षीरविवेकिनो राजहंसा: क्षमिष्यन्ति । —सम्पादक:

ओ३म्

# गुरुकुल-पत्रिका

## [ शिक्षा-विशेषाङ्कः ]

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]

चैत्रमासः २०२१ वि०, मार्च-अप्रैल १९६५ ई०

## —— हिन्दी भाग ——

### श्रुति-सुधा

१ ओ३म् स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥

यजु. ११।४४ ।

**पदार्थ**

हे (अर्वन्) विज्ञानयुक्त पुत्र तू विद्याग्रहण के लिये (स्थिरः) दृढ़ (भव) हो (वाजी) नीति को प्राप्त होके (वीड्वङ्गः) दृढ़ अति बलवान् अवयवों से युक्त (आशुः) शीघ्र कर्म करने वाला (भव) हो तू (अग्नेः) अग्नि सम्बन्धी (सुषदः) सुन्दर व्यवहारों में स्थित और (पुरीषवाहणः) पालन आदि शुभकर्मों को पालन करने वाला (पृथुः) सुख का विस्तार करने हारा (भव) हो ।

**भावार्थ**

हे अच्छे सन्तानों ! तुम को चाहिये कि ब्रह्मचर्य सेवन से शरीर का बल और विद्या तथा अच्छी शिक्षा से आत्मा का बल पूर्ण दृढ़ कर स्थिरता से रक्षा करो और आग्नेय आदि अस्त्रविद्या से शत्रुओं का नाश करो इस प्रकार माता-पिता अपने सन्तानों को शिक्षा करें ।

— स्वामी दयानन्द ।

# आर्यसमाज की शैक्षणिक प्रवृत्तियां : एक मूल्यांकन

श्री प्रो० भवानीलाल भारतीय एम. ए., आर. ई. एस.
अध्यक्ष : हिन्दी विभाग गवर्नमेंट कालेज, पाली ( राजस्थान )

आर्यसमाज के प्रवर्तक महर्षि दयानन्द का व्यक्तित्व बहुमुखी था। उन्होंने पुरातन वैदिक धर्म के पुनरुत्थान, समाज सुधार तथा देश को स्वाधीन बनाने के सम्बन्ध में जहां अपने विचारों और कार्यों से देशवासियों का नेतृत्व किया वहां शिक्षा के क्षेत्र में भी उन्होंने भारत वासियों का मार्ग-दर्शन किया। सत्यार्थप्रकाश के द्वितीय तथा तृतीय समुल्लास इसी दृष्टि से लिखे गये है जिनमें बालकों के लालन-पालन, उन के शिक्षण तथा उन्हें सुसंस्कृत बनाने के विषय में लेखक ने अपने महत्वपूर्ण विचारों को संग्रहीत किया है। संस्कृत भाषा के माध्यम से शास्त्रीय विषयों के अध्ययन अध्यापन की परिपाटी हमारे देश में शताब्दियों से प्रचलित रही है। काशी, पूना, नवद्वीप, मिथिला, जयपुर आदि पुरातन संस्कृत शिक्षा-पद्धति के केन्द्र रहे हैं। महर्षि ने स्वयं भी मथुरा के दण्डी विरजानन्द की पाठशाला में ढाई तीन वर्ष रह कर व्याकरण तथा अन्य शास्त्रों का इसी प्राचीन प्रणाली से अभ्यास किया था। स्वामी विरजानन्द की कृपा से जब उन्हें आर्ष अनार्ष ग्रन्थों के गुणा-वगुणों का बोध हुआ तो उन्होंने आर्ष ग्रन्थों के पठन की एक विधि बनाई। किस क्रम से इन शास्त्रीय ग्रन्थों का अभ्यास किया जाय। यह महर्षि ने सत्यार्थप्रकाश के उपर्युक्त दोनों समुल्लासों में बताया है। संस्कृत व्याकरण के सुगम बोध के लिए उन्होंने वेदांगप्रकाश के नाम से चौदह खण्डों में व्याकरण के गूढ़ विषय को हिन्दी भाषा के माध्यम से प्रस्तुत किया। 'व्यवहार भानु' तथा 'संस्कृत वाक्य प्रबोध' नामक उन के लघु ग्रन्थ संस्कृत पठन-पाठन व्यवस्था के अन्तर्गत छपे, जिनके विषय में महर्षि की एक विस्तृत योजना थी। अष्टाध्यायी का हिन्दी भाष्य भी उन्होंने दो खण्डों में प्रकाशित कराया।

ग्रन्थ निर्माण के अतिरिक्त वे जहां-जहां अपने भ्रमण के दौरान में गये, वहां उन्होंने संस्कृत पाठशालायें भी स्थापित कीं, यद्यपि कालान्तर में उन्हें ये पाठशालायें बन्द कर देनी पड़ीं, क्योंकि उपयुक्त अध्यापकों का अभाव तथा श्रम एवं तपस्यापूर्वक आर्ष ग्रन्थों का अध्ययन करने वाले छात्रों का अभाव ही इसका कारण हुआ। स्वामी जी केवल पुस्तकीय ज्ञान के ही पक्ष में नहीं थे। उन की दृढ़ धारणा थी कि जब तक देश के नवयुवकों को उद्योग, कला कौशल तथा यांत्रिक व्यवसायों की शिक्षा नहीं दी जायेगी तब तक देश की आर्थिक समृद्धि नहीं हो सकती। इसी दृष्टि से उन्होंने कुछ युवकों को जर्मनी भेजा ताकि वहां रह कर वे औद्योगिक शिक्षण प्राप्त करें। महर्षि के सुप्रसिद्ध शिष्य तथा भारत में क्रान्तिकारी प्रवृत्तियों के भाग्यविधाता पं० श्याम जी कृष्ण वर्मा उनके जीवनकाल में ही आक्सफोर्ड विश्वविद्यालय में संस्कृत के प्राध्यापक पद पर नियुक्त हो गये थे और उन का स्वामी जी से नियमित रूप में पत्राचार होता था।

महर्षि के देहान्त के पश्चात् उन के स्मारक के रूप में १८८६ में डी. ए. वी. स्कूल लाहौर की स्थापना की गई जो बहुत शीघ्र ही डी. ए. वी. कालेज के रूप में परिणत हो गई। महात्मा हंसराज ने अपने अपूर्व त्याग द्वारा इस महान् शिक्षण संस्था की आजन्म प्रिंसिपल तथा प्रबन्धक के रूप में सेवा की। आर्यसभाज के शिक्षा-शास्त्रियों में महात्मा जी का नाम स्वर्णाक्षरों से लिखा जायेगा। डी. ए वी. कालेज की स्थापना के समय उस के संस्थापकों का दृष्टिकोण समन्वय प्रधान था। वे

इस कालेज में प्राचीन संस्कृत भाषा, साहित्य, दर्शन तथा सम्पूर्ण वैदिक साहित्य के विधिवत् अध्ययन की व्यवस्था देखना चाहते थे। साथ ही साथ भौतिक विज्ञान, सामाजिक ज्ञान (सोसल साइंसेज) तथा अंग्रेजी भाषा और साहित्य का अध्यापन भी इस कालेज में हो यह उन्हें अभीष्ट था। प० गुरुदत्त विद्यार्थी जैसे पुरानी पीढ़ी के नेताओं तथा मनीषियों ने भी डी. ए वी. कालेज के आंदोलन को व्यापक बनाने में जो अपना अमूल्य योगदान दिया उसका एकमात्र कारण यही था कि वे इस विद्यालय द्वारा महर्षि दयानन्द के शैक्षणिक दृष्टिकोण की पूर्ति सम्भव समझते थे। परन्तु शीघ्र ही उन का सुख-स्वप्न भंग हो गया। उन्हें प्रतीत होने लगा कि डी. ए वी. कालेज के संचालक पाश्चात्य ज्ञान विज्ञान तथा अंग्रेजी भाषा एवं साहित्य के अध्यापन के लिए जितने प्रयत्नशील हैं उतने संस्कृत तथा वैदिक वाङ्मय के लिए नहीं। तब उन्हें डी. ए. वी. कालेज से निराशा होने लगी और उन्होंने अपना हाथ भी उस की व्यवस्था से खींच लिया।

डी. ए. वी. कालेज को अपने निर्धारित लक्ष्य में असफल होता देख कर आर्य प्रतिनिधि सभा पंजाब के तत्कालीन प्रधान महात्मा मुंशीराम ने ऋषि के शिक्षा-सिद्धान्तों को मूर्त रूप प्रदान करने के लिए सभा की अन्तरंग में गुरुकुल स्थापना विषयक प्रस्ताव रक्खा और स्वयं उसे मूर्त रूप देने में प्राण-पण से जुट गये। महात्मा जी को गुरुकुल के लिए यथेष्ट आर्थिक सहायता अविलम्ब उपलब्ध हो गई और उन्होंने गुजरांवाला में गुरुकुल की स्थापना कर दी, जो कुछ समय पश्चात् ही मुन्शी अमनसिंह जी द्वारा प्रदत्त भूमि में गंगा पार की रेती में कांगड़ी ग्राम में चला गया।

स्वामी श्रद्धानन्द के श्रम और त्याग ने गुरुकुल कांगड़ी को देश की एक महत्त्वपूर्ण शिक्षण-संस्था बना दिया जो प्राचीन तथा आधुनिक शिक्षा-पद्धति का एक सुन्दर सामञ्जस्य था। गुरुकुल ने अनेक उच्च कोटि के विद्वान् स्नातक देश को प्रदान किये जिन्होंने लेखक, पत्रकारिता, धर्मप्रचार, शिक्षा, आयुर्वेदादि अनेक क्षेत्रों में देश, धर्म तथा समाज की अपूर्व सेवा की। स्वामी श्रद्धानन्द के पश्चात् आचार्य रामदेव के सुयोग्य संचालन में गुरुकुल कांगड़ी उत्तरोत्तर उन्नति करता गया। कांगड़ी के नमूने पर ही ज्वालापुर में महाविद्यालय की स्थापना हुई। इस के संस्थापक स्वामी दर्शनानन्द थे। स्वामी जी को गुरुकुल स्थापित करने का एक खब्त सा था वे कहीं भी तनिक सी सुविधा देख कर गुरुकुल की स्थापना कर देते और उस का संचालन कार्य वहां के लोगों को सौंप कर आगे चल देते। पुनः कभी आ कर उस संस्था को देखने का भी अवकाश उन्हें नहीं मिलता। महाविद्यालय ज्वालापुर में लौकिक संस्कृत का अध्यापन निपुणता से होने लगा। उत्तर प्रदेश में प्रतिनिधि सभा द्वारा गुरुकुल वृन्दावन की स्थापना हुई। प्रारम्भ में महात्मा नारायण स्वामी (तत्कालीन मुन्शी नारायण प्रसाद) उस के मुख्याधिष्ठाता और आचार्य रहे। इस गुरुकुल ने आचार्य विश्वेश्वर, आचार्य द्विजेन्द्रनाथ शास्त्री, कविरत्न मेधाव्रताचार्य जैसे उत्कृष्ट विद्वान् स्नातक आर्यसमाज को प्रदान किये।

गुरुकुल स्थापना का यह चक्र एक समय देशव्यापी हो गया। उत्तर प्रदेश तथा पंजाब में तो बीसों गुरुकुल खुले ही, दिल्ली में गुरुकुल इन्द्रप्रस्थ, राजस्थान में गुरुकुल चित्तौड़गढ़, बिहार में गुरुकुल वैद्यनाथ धाम, बम्बई में गुरुकुल सूपा व सोनगढ़, मध्यप्रदेश में गुरुकुल महेश्वर, दक्षिण हैदराबाद में गुरुकुल घटकेश्वर आदि सैकड़ों गुरुकुलों की स्थापना हुई। प्रत्येक प्रान्त के आर्यों को गुरुकुल स्थापित करने का नशा सा था। आगे चल कर

गुरुकुल भी अपने आदर्शों से च्युत होने लगे। अनेक गुरुकुल तो नाममात्र के लिए ही गुरुकुल रह गये। उनमें हाई स्कूल तथा अन्य सरकारी पाठ्यक्रमों के अनुसार शिक्षण होने लगा। महर्षि द्वारा निर्धारित पाठविधि को अपने विशुद्ध रूप में शायद हो किसी गुरुकुल में अपनाया गया हो। अनार्ष ग्रन्थों का पठन-पाठन भी कुछ अपवादों को छोड़ कर सर्वत्र होता रहा। आज आर्ष पठनपाठन विधि को संरक्षण देने वाले गुरुकुल बहुत कम रह गये हैं। कन्या शिक्षण के लिए गुरुकुल देहरादून गुरुकुल हाथरस, नरेला :तथा बड़ौदा के कन्या महाविद्यालय के नाम उल्लेखनीय हैं। नारी शिक्षा के क्षेत्र में इन संस्थाओं की देन महत्वपूर्ण है।

डी. ए. वी. कालेज लाहौर के अनुकरण पर ही पंजाब तथा अन्य प्रान्तों में भो डी. ए. वी. कूलों तथा कालेजों को स्थापना हुई। इनमें सर-ारी पाठविधि को ही अपनाया गया है। 'दयानंद था वैदिक' शब्दों को लाज रखने के लिए 'धर्म शिक्षा' की व्यवस्था भी रहती है। परन्तु यह धर्मशिक्षा का पठन-पाठन नितान्त उपेक्षित दिशा में रहता है। दयानन्द कालेजों के संचालन में आर्यसमाज की प्रभूत जन तथा धन शक्ति व्यय होतो है। पंजाब की डी. ए. वी. कालेज कमेटी का करोड़ों का वार्षिक बजट होता है। इस कमेटी द्वारा जालन्धर, अमृतसर, अम्बाला, शोलापुर, दिल्ली आदि नगरों में विशाल कालेजों का संचालन होता है। इसी प्रकार कानपुर का दयानन्द कालेज उत्तर प्रदेश का सबसे बड़ा कालेज है, जिसमें सहस्रों की संख्या में छात्र ज्ञानार्जन करते हैं।

संस्कृत शिक्षा में भी आर्यसमाज ने अपना महत्त्वपूर्ण योगदान दिया है। सैकड़ों छोटी-बड़ी संस्कृत पाठशालायें आर्यसमाजों में चलती हैं। इसी प्रकार प्रौढ़ शिक्षण, रात्रि पाठशालायें तथा दलित वर्ग के लोगों के लिए शिक्षण आदि की विविध प्रवृत्तियों का संचालन कर आर्यसमाज ने शिक्षा कार्य को अत्यधिक प्रगति प्रदान की है। वस्तुतः आर्यसमाज ने शिक्षा प्रचार के क्षेत्र में जो कार्य किया है वह श्लाघनीय है। FATHER INDIA के लेखक श्री रंगा अय्यर ने ठीक ही लिखा है—"Arya Samaj Schools aim at fostering nationalism. Even their critics recognise that they are genuine educational institutions, very different from political mushrooms which non-cooperatian called into existence." अर्थात् आर्यसमाज के विद्यालयों का उद्देश्य राष्ट्रीयता को जाग्रत करना है। उन के समालोचक भी यह स्वीकार करते है कि वह असहयोग के दिनों में अचानक स्थापित हुये अल्पजीवीं राष्ट्रीय स्कूलों से भिन्न वास्तविक शिक्षण संस्थायें हैं।



# अवकाश के समय का सदुपयोग

( लेखक—श्री अगरचन्द जी नाहटा )

संसार में यदि कोई सबसे मूल्यवान् वस्तु है तो वह है समय ! जो समय बीत जाता है, उसे वापस प्राप्त नहीं किया जा सकता। प्राणियों के जीवन का समय सीमित है। उसका एक-एक पल बड़ी तेजी से छीजता जा रहा है। अञ्जलि के जल की तरह प्रतिक्षण छीजते हुए समय का एक दिन अन्त आ ही जाता है और हमारे सारे मनोरथ यहीं धरे रह जाते हैं। वैसे भी लोगों की प्रायः शिकायत रहती है कि क्या-क्या करें, काम तो बहुत करने हैं, पर समय नहीं मिलता। बहुत-से काम, जिन्हें हम बहुत ही महत्व के एवं उपयोगी समझते हैं, करना चाहते हुए भी समयाभाव से नहीं कर पाते। सूक्ष्म समय का मूल्य आंकना बड़ा ही कठिन है। क्षणभर के प्रमाद, आलस्य या देरी से हम बहुत बार महान् लाभ से वञ्चित रह जाते हैं।

वैसे तो मनुष्य हर समय किसी-न-किसी प्रवृत्ति में लगा ही रहता है, पर सभी प्रवृतियां आवश्यक, उपयोगी एवं लाभप्रद नहीं होती। जीवन-यापन के लिये तो कुछ प्रवृतियां अनिवार्य होती हैं; पर विचार करने पर लगता है कि अनावश्यक और असत् प्रवृतियों में ही हम बहुत समय खो देते हैं। हर मनुष्य काम ही करता हो, ऐसी बात भी नहीं है। हमारा बहुत-सा समय बेकार और निकम्मा भी जाता है।

काम करते २ या काम पूरा कर लेने के बाद विश्राम की आवश्यकता होती है, जिससे काम करने की शक्ति का पुन. संचय होता है। प्रकृति ने ही ऐसा विधान बना रखा है, दिन में काम करें और रात में नींद लेकर विश्राम भी करें, जिससे दिनभर के किये हुए काम की थकावट दूर हो जाय और दूसरे दिन पूरी ताजगी के साथ पुनः काम में जुट जायें। प्रवृतियां भी सब समय मनुष्य एक ही न करके सब प्रकार की करता है—कोई व्यक्ति खड़ा-ही-खड़ा नहीं रह सकता, थोड़े समय बाद बैठने की भी आवश्यकता हो जाती है। कुछ समय खेल-कूद में बीतता है, कुछ समय बात-चीत में। इस तरह मन, वचन और शरीर का अर्थात् इन्द्रियों का उपयोग विविध प्रकार से होता रहता है। कुछ समय तक तो आंखें निरन्तर देखने का काम करती हैं, पर थोड़े समय बाद हमें नेत्रों के बंद करने यानी विश्राम देने की आवश्यकता हो जाती है। इस तरह काम और विश्राम में समय बीतता जाता है। पर विश्राम आलस्य के या निठल्लेपन के लिये नहीं, विश्राम काम की शक्ति बढ़ाने के लिये ही है।

प्रकृति के साथ २ मनुष्य ने भी अपनी सुविधा के लिये काम के साथ अवकाश का भी समय निकाल रखा है। जैसे सप्ताह में ६: दिन काम करके रविवार को छुट्टी मनायी जाती है, ताकि मनुष्य काम से उकता न जाय और अपने बचे हुए अन्य प्रकार के काम छुट्टी के दिन पूरे कर सके। मनोरञ्जन, मिलना-जुलना, कहीं आना-जाना, आवश्यक सामान खरीदना आदि कार्य, जिन्हें वह छः दिनों में नहीं कर सका सातवें छुट्टी के दिन कर सके। इसी तरह बहुत से और भी छुट्टी के दिन होते हैं, जिन दिनों में उसे निश्चित कार्यों से अवकाश मिलकर अन्य काम करने की सुविधा मिल जाती है। विद्यार्थियों को परीक्षा से पहले कुछ दिन परीक्षाओं की अच्छी तैयारी करने के लिये छुट्टियां मिलती

हैं, इसी तरह परीक्षा के बाद भी लम्बी छुट्टियां मिलती हैं, ताकि परीक्षा के दिनों में उन्हें जो अधिक श्रम करना पड़ता है, उसकी थकावट दूर हो जाय, इधर परीक्षा-पत्रों को जांचकर परीक्षाओं का परिणाम घोषित करने के लिये अध्यापकों आदि को भी समय मिल सके। इसी तरह इतने वर्षों तक कार्य कर लेने के बाद सरकार की ओर से भी उसे अवकाश-निवृति मिल जाती है।

अब प्रश्न यह रहता है कि हम अवकाश के दिनों में समय का उपयोग किन कामों में करें। चार आश्रमों में विभाजित भारतीय जीवन में इसकी सुन्दर व्यवस्था मिलती है। बाल्यावस्था में विद्याध्ययन अर्थात् योग्यता की प्राप्ति करके गृहस्थाश्रम में अपने कौटुम्बिक जीवन के सुसंचालन में लगें। इसी तरह अर्थोपाजन, संतानोत्पादन करने के बाद वानप्रस्थ स्वीकार किया जाय जिसमें सेवामय जीवन दूसरों के लिये लाभप्रद हो। साथ ही अपनी आध्यात्मिक उन्नति भी करें। संकुचित कुटुम्ब की ममता से अपने को ऊपर उठाकर विश्ववात्सल्य के भाव को जागृत करें और सब के हित में अपने जीवन को समर्पण कर दें। वास्तव में अवकाश का उपयोग भी हमें अपनी आध्यात्मिक उन्नति और आत्मकल्याण में ही करना उचित है। विद्यार्थी अपनी छुट्टियों के दिनों में आस-पास अशिक्षित लोगों को शिक्षित बनाने का प्रयत्न करें। व्यर्थ ही इधर-उधर घूमने, गप्पें मारने तथा खेलने आदि में समय बर्बाद न करें। अच्छे २ ग्रंथों के स्वाध्याय से अपने ज्ञान को परिपुष्ट करें और दूसरों को ज्ञान का दान करें। आज हम देखते हैं कि लम्बी २ छुट्टियों से विद्यार्थियों का जीवन बरबाद सा होता है। वे इन दिनों में कई बुरी आदतें डाल लेते हैं। इससे घर वाले भी परेशान होते हैं और स्वयं का जीवन भी बिगड़ता है। वास्तव में उनके सामने कोई ध्येय या आदर्श नहीं होता कि इन छुट्टियों का उपयोग किस तरह से करें।

अब से कुछ वर्षों पहले शिक्षालयों में छुट्टियां बहुत ही कम होती थीं। हम जब पढ़ते थे तब केवल प्रतिपदा को ही छुट्टी होती थी। इसके बाद महीने में चार छुट्टियां होने लगी। पर ग्रीष्मावकाश आदि की लम्बी छुट्टियां तो इधर कुछ वर्षों में ही बढ़ी हैं, इससे विद्यार्थियों का तनिक भी लाभ नहीं हुआ, अपितु बहुत हानि हुई है। आजकल वर्ष में ४-६ महीने छुट्टियों में ही बीत जाते हैं। यदि इतने समय में मनोयोगपूर्वक पढ़ाई की जाय तो जिस श्रेणी में पहुंचने के लिये आज ८ वर्ष लगते हैं, वह ४-५ वर्षों में ही पूरी हो सकती है। तीन वर्षों के बचत का भावी जीवन में बड़ा भारी महत्व है। शिक्षा का सार तो पूर्वापेक्षा बहुत गिर चुका है। पहले के पढ़े ५ वीं कक्षा के विद्यार्थी आज के ८ वीं कक्षा के विद्यार्थियों से बहुत तेज होते हैं। इस तरह विद्यार्थियों के अमूल्य जीवन की बरबादी को रोकने का राष्ट्रिय सरकार एवं उसके हितैषी माता-पिता एवं अध्यापकों का परम कर्तव्य होना चाहिये।

औद्योगिक क्षेत्र में भी हम देखते हैं कि रविवार आदि छुट्टियों के दिनों का उपयोग मजदूर शराब पीने, सिनेमा देखने आदि बुरी बातों में ही करते हैं। उनको भी अपने अवकाश के समय का सदुपयोग अपनी योग्यता विकास में करना और नये २ कामों को सीखना चाहिये उस समय सबको सम्मिलित होकर अपने परिवार, देश और राष्ट्र की उन्नति कैसे हो, उत्पादन कैसे बढ़े, बरबादी कैसे मिटे—इस सम्बन्ध में विचार-विमर्श करना चाहिये। संत–समागम, प्रार्थना, ईश्वर-भजन कीर्तन, अच्छे ग्रन्थों का पढ़ना, अपने बच्चों को

सुसंस्कार की ओर प्रेरित करना, पीड़ित एवं दुखी व्यक्तियों की सेवा करके समय का सदुपयोग करना चाहिये। अवकाश प्राप्त व्यक्तियों को भी इसी तरह स्व-पर-कल्याण में लग जाना चाहिये। जीवन का एक क्षण भी प्रमाद एवं बुरे कामों में नष्ट न हो इसका पूरा विवेक रखना ही मानव-कर्तव्य है।

अपने सभी काम नियत समय पर करके अपना एवं दूसरों का बहुमूल्य समय बचाइये, व्यर्थ की बातों में थोड़ा समय भी बरबाद नहीं करना चाहिये। व्यवस्थित ढंग से काम करके हम अपने कार्यों में समय के अपव्यय को बचा सकते हैं।

जीवन थोड़ा है और कार्य अनेक करने हैं। आयुष्य प्रतिक्षण छीजता जा रहा है और न जाने कब पूरा हो जाय। अतः भगवान् महावीर के महान् उद्‌बोधक संदेश को सदा ध्यान में रखिये। 'समयं गोचया पमाचरा' अर्थात् हे गौतम ! एक क्षण भी प्रमाद न कर। जैन दर्शन में कहा है कि समय बहुत ही सूक्ष्म होता है। हमें पूर्ण जागृति के साथ उसके एक-एक पल का सदुपयोग करके जीवन सार्थक करने का प्रयत्न करना चाहिये।

जो व्यक्ति वर्षों तक काम करके अवकाश ग्रहण करते हैं, उनके वर्षों के अनुभव का लाभ नवयुवकों को मिलना चाहिये अतः जिन व्यक्तियों ने जिन-२ कार्यों में कुशलता प्राप्त की हो, अवकाश ग्रहण करने के बाद उन्हें दूसरों को योग्य बनाने में समय लगाना चाहिये; क्योंकि आज के बालक और युवक ही भावी राष्ट्र के कर्णधार होते हैं, उनके विकास में अपना सहयोग देना राष्ट्रिय कर्तव्य का पालन तथा समय का सदुपयोग है।

---

# चेतावनी !

( गुरुकुल जन्मोत्सव के अवसर पर लिखित )

## गुरुकुलो ! उनको न जाना भूल।

किन कठिन कठिनाइयों से जूझ।
अन्धतम घड़ियों में रस्ता बूझ।
स्वप्न पलकों पर सजाए मौन।
स्नेह जल से सींच करके कौन।
कर तुझे पुष्पित बने खुद धूल।
गुरुकुलो उनको न जाना भूल॥

है न अब वह तीव्र झंझावात,
हैं दिशाएं स्वच्छ सद्यः स्नात,
पूर्व से अरुणिम किरण की कोर,
रंग रही तरुपल्लवों के छोर,
पास के जिनकी कृपा से कूल।
गुरुकुलो उनको न जाना भूल॥

कुछ रहे अपलक नयन हैं हेर,
डगमगाएं पग न बढ़ती बेर,
सरल जीवन और उच्च विचार,
था तुम्हें जिनसे सदा ही प्यार,
इस प्रगति के पालने में भूल।
गुरुकुलो उनको न जाना भूल॥

श्री अनन्तानन्द—

# स्वाध्याय के लिये चुनी हुई पुस्तकें

## वैदिक साहित्य

| | |
|---|---|
| वेदोद्यान के चुने हुए फूल (सजिल्द) | ५.०० |
| वेद का राष्ट्रीय गीत (सजिल्द) | ५.०० |
| मेरा धर्म (सजिल्द) | ७.०० |
| वरुण की नौका (दो भाग) | ६.०० |
| अग्निहोत्र (सजिल्द) | २.२५ |
| आत्म-समर्पण | १ ५० |
| वैदिक स्वप्न विज्ञान | २.०० |
| वैदिक अध्यात्म विद्या | १ ७५ |
| वैदिक सूक्तियां | १.७५ |
| ब्राह्मण की गौ (सजिल्द) | .७५ |
| वैदिक ब्रह्मचर्य गीत | २.०० |
| वैदिक विनय (तीन भाग) | ६.०० |
| वेद गीतांजलि | २.०० |
| सोम सरोवर (सजिल्द) | २.०० |
| वैदिक कर्त्तव्य शास्त्र | १ ५० |
| सन्ध्या सुमन | १.५० |
| स्वामी श्रद्धानन्द जी के उपदेश | ३ ७५ |
| आत्म मीमांसा | २.०० |
| वै. पशु यज्ञमीमांसा | १.०० |
| सन्ध्या रहस्य | २.०० |
| अथर्ववेदीय मन्त्रविद्या | १.५० |
| ईशोपनिषद्भाष्य (सजिल्द) | २.०० |
| अध्यात्म रोगों की चिकित्सा | २.५० |
| ब्रह्मचर्य संदेश | ४.५० |
| आर्य संस्कृति के मूल तत्त्व | ४.०० |
| स्त्रियों की स्थिति | ४.०० |
| एकादशोपनिषद् | १२.०० |
| विष्णु देवता | २.०० |

## ऐतिहासिक तथा जीवन चरित्र

| | |
|---|---|
| भारतवर्ष का इतिहास ३य भाग | ४ ५० |
| बृहत्तर भारत | ७.०० |
| योगेश्वर कृष्ण | ४ ०० |
| स्वामी श्रद्धानन्द जी महाराज | १ २५ |
| स्वामी दयानन्द का पत्र व्यवहार | .७५ |
| गुरुकुल की आहुति | .५० |
| अपने देश की कथा | १.३७ |
| दी मिडिल ईस्ट ( इङ्गलिश ) | ३.०० |

## स्वास्थ्य सम्बन्धी ग्रन्थ

| | |
|---|---|
| स्तूप निर्माण कला ( सजिल्द ) | ३ ०० |
| प्रमेह श्वास अर्शरोग | १.२५ |
| जल चिकित्सा विज्ञान | १.७५ |
| होमियोपैथी के सिद्धान्त | २.५० |
| आसवारिष्ट | २.५० |
| आहार | ५.०० |

## संस्कृत ग्रन्थ

| | |
|---|---|
| संस्कृत प्रवेशिका प्रथम भाग | .८७ |
| सस्कृत प्रवेशिका २य भाग | .८७ |
| बालनीति कथा माला | १.७५ |
| साहित्य सुधा संग्रह | १ २५ |
| पाणिनीयाष्टकम् (दो भाग) | प्रतिभाग ७.०० |
| पचतन्त्र पूर्वार्द्ध ( सजिल्द ) | २.५० |
| पंचतन्त्र उत्तरार्द्ध, सजिल्द | २.०० |
| सरल शब्द रूपावली | १.२५ |
| सरल धातु रूपावली | १.६० |
| सस्कृत ट्रांसलेशन | १.२५ |
| पचतंत्र (मित्र सम्प्राप्ति) | .७५ |
| पंचतंत्र (मित्र भेद) | १ ५० |
| संक्षिप्त मनुस्मृति | .५० |
| रघुवंशीय सर्गत्रयम् | .२५ |

पुस्तकों का बड़ा सूचीपत्र मुफ्त मंगाइये । धार्मिक संस्थाओं के लिये विशेष रियायत का भी नियम है ।

पुस्तक भण्डार, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार (जि० सहारनपुर) ।

# गुरुकुल पत्रिका




पारेगङ्गं पुण्यभूमौ सन् १९२४तमे वर्षे दैवकोपात् गंगाजलप्रवाहग्रस्तो
गुरुकुलस्य प्राचीनपुस्तकालयान्तर्भागः ।

वर्षम् १७ | आषाढमासः २०२२, जून-जुलाई १९६५ | अङ्कः ११

वार्षिकशुल्कम्
...शे ४), विदेशे ६)

गुरुकुलकांगड़ीविश्वविद्यालयः, हरिद्वारम्

व्यवस्थापकः—श्री पं० सत्यव्रतो विद्यामार्तण्डः, एम०पी०

मूल्यम्
४० पैसे

# गुरुकुल - पत्रिका

आषाढ़मासः २०२२ वि.
जून-जुलाई १९६५ ईस्वी
पूर्णाङ्कः २०३





व्यवस्थापकः
श्री पं. सत्यव्रतो विद्यामार्तण्डः
मुख्याधिष्ठाता,
गुरुकुलकांगड़ीविश्वविद्यालयस्य


## अस्मिन्नङ्के




**वार्षिकं मूल्यम्**
देशे ४.००
विदेशे ६.००
मूल्यम् : ४० पैसे

अङ्कः ११
वर्षम् १७

**सम्पादकः**
श्री भगवद्दत्तो वेदालंकारः
**प्रबन्धकः**
श्री प्रेमदेवः

ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]

आषाढ़मासः २०२२ विक्रमी, जून-जुलाई सन् १९६५ ई०



मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री ४–५ पादनिचृत् ( ५ ह्रसीयसी वा ) गायत्री

## श्रुति-सुधा

युवाकु हि शचीनां युवाकु सुमतीनाम् ।
भूयाम वाजदाव्नाम् ॥ ऋ० १।१७।४ ।

इन्द्र और वरुण की सामीप्यता की इच्छा हमें इस लिये है कि (हि) जिस से (वाजदाव्नाम्) वेग व बल प्रदान करने वाली (शचीनां युवाकु) शक्तियों का बल व उन का मेल तथा (सुमतीनां युवाकु) श्रेष्ठ मतियों का बल व उन का मेल (भूयाम) हम में हो जावें ।

युवाकु पद एक तो 'यु मिश्रणामिश्रणयोः' धातु से निष्पन्न हो सकता है । दूसरे 'युवां कामयते' इस व्युत्पत्ति के आधार पर भी युवाकु शब्द बन सकता है । यहां 'युव' शब्द यौवन अर्थात् बल का उपलक्षण है । इन की सामीप्यता से मनुष्य की कर्म-शक्ति व ज्ञान-शक्ति दोनों की वृद्धि होती है ।

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।
क्रतुर्भवत्युक्थ्यः ॥ ऋ ० १।१७।५ ।

(इन्द्रः) इन्द्र (सहस्रदाव्नां) सहस्र रूप में प्रदान करने वालों में (उक्थ्यः) स्तुत्य (क्रतुः भवति) कर्ता व प्रदाता होता है और (वरुणः) वरुण (शंस्यानां) प्रशंसनीयों में सर्वश्रेष्ठ होता है ।

इन्द्र दिव्य शक्तियों का प्रदाता है और वरुण शत्रुवारक शक्तियों में सर्वश्रेष्ठ है अतः वह सर्वातिशायी प्रशंसा के योग्य है ।

तयोरिदवसा वयं सनेम नि च धीमहि ।
स्यादुत प्ररेचनम् ॥ ऋ० १।१७।६

(तयोः) इन्द्र और वरुण इन दोनों की (इत्) निश्चय से (अवसा) रक्षा से (वयं) हम (सनेम) दिव्य ऐश्वर्य के भागी बनें (च) और (निधीमहि) निधि वाले बनें (उत) और हमारे पास (प्र रेचनं स्यात्) पुष्कल तथा अतिरिक्त धन हो ।

जो बातें सामान्य भौतिक धन के लिये उपयुक्त हैं वे ही आध्यात्मिक दिव्य धन के लिए भी उपयुक्त होती हैं । आध्यात्मिक धन भी शनैः २ बढ़ता है, उस का संग्रह होता है और उसका व्यय भी होता रहता है । यह आवश्यक नहीं कि जो दिव्य शक्ति व दिव्य ज्ञान उपलब्ध हो गया है वह सदा रहे । आसुरी शक्तियां उस दिव्य धन को विनष्ट भी करती रहती हैं । अतः उस की रक्षा के लिये सतत अध्यवसाय की आवश्यकता होती है ।

इन्द्रावरुण वामहं हुवे चित्राय राधसे ।
अस्मान्त्सु जिग्युषस्कृतम् ॥ ऋ० १।१७।७ ॥

(इन्द्रावरुणौ) हे इन्द्र और वरुण ! (अहं) मैं (चित्राय राधसे) विविध व अद्भुत धन के लिये (वां) तुम दोनों को (हुवे) आह्वान करता हूं । (अस्मान्) हम को तुम (सुजिग्युषः कृतम्) श्रेष्ठ रूप में विजयी बनाओ ।

दिव्य ऐश्वर्य की प्राप्ति के लिये महान् संघर्ष करना पड़ता है । आसुरी शक्तियों पर विजय प्राप्त करनी पड़ती है ।



# पञ्चाम्बुकेशरी लालालाजपतरायमहोदयः

(ले० विद्याभूषणः पं० श्रीगणेशरामशर्मा, झालावाड़ः (राज०)

भारतेऽत्रास्माकं देश यैर्महानुभावैः स्वतन्त्रता–संग्रामेऽग्रगण्यनेतृत्वेनान्दोलनं गतिशीलं कृतम्, महान्तः सङ्घर्षा यातनाः पीडा वेदनाश्च सोढाः, सर्वस्वमपि समर्प्यन्ते स्वप्राणानामाहुतिश्चापि प्रदत्ता, तथाविधेषु पुरुषश्रेष्ठेषु देशभक्तेषु सर्वंसहेषु पञ्चाम्बुकेशरिणो लालालाजपतिरायमहाभागस्याभिधानं धन्यं यावच्चन्द्रदिवाकरौ भारतीयेतिहासे स्वर्णाक्षरैर्लिखितं शाश्वतं स्थास्यतीति निश्चप्रचम् ।

अधुनास्मद्देशेऽमीषां लाललाजपतिमहोदयानां जन्मशताब्दीमहोत्सवसमारोहः सर्वकारेण प्रजाभिश्च तत्स्मृतिसंरक्षणायोद्याप्यमानोऽस्ति, तस्मै महाप्राणाय महापुरुषाय वीरकेशरिणे श्रद्धाञ्जलयः समर्प्यमाणाः सन्ति, तद्विषये पत्रपत्रिकासु लेखकाव्यादीनि, संस्मरणानि च प्रकाश्यमाणानि वर्तन्ते । अतः संस्कृतसाहित्यस्य संस्कृतभाषायाश्च सेवकत्वेन तुच्छलेखकत्वेन च मयापि संस्कृतपत्रपत्रिकाणां पाठकेभ्यो लालामहोदयस्य जीवनवृत्तान्तं, देशसेवां, समाजसेवां तथान्यानपि तांस्तान् गुणगणविशान् समधिकृत्य वक्तव्यमेति प्रसङ्गोऽयमधस्तादवतार्यते । आशास्यते, पाठकेभ्यो विषयोऽसौ रोचकः स्यात् ।

आसीत् सोऽपि समयो यदा भारतस्य स्वातन्त्र्यसंग्रामसैनिकेषु 'लाल-बाल-पाल' इति नाम्ना ख्याता देशभक्तत्रयी गौराङ्गशासकानां कृते शिरःशूलभूतासीत् । महाराष्ट्रप्रदेशे बालगङ्गाधरतिलकमहाभागो, बंगप्रदेशे विपिनचन्द्रपालमहोदयस्तथा पञ्चाम्बुप्रान्ते स एष लालालाजपतरायश्चेति नेतृत्रयी स्वातन्त्र्यान्दोलनस्य प्रमुखं नेतृत्वं चकार । एवं विधानां महामनीषिणां, महामनसाम् महाप्राणानां मध्येऽसौ लाजपतरायोऽन्यतम आस्ते ।

महाभागस्यास्य लालालाजपतरायस्य जन्म सन् २८, जनवरी १८६५ खैष्टदिनाङ्के पञ्चाम्बुप्रान्तस्य फिरोजपुरमण्डलान्तर्गते धूडिके नाम्नि ग्रामे बभूव । स खल्वग्रवालवैश्यकुलं स्वजन्मना विभूषितवांस्तस्य पिता च राधाकृष्णमहाशयो बभूव । बाल्यकालादेवैतस्य स्वास्थ्यं दुर्बलमक्षमं चाभूत् परन्तु तस्य प्रतिभातीव प्रखरतरा भास्वरा चासीत् । प्रायेणाऽस्वस्थोऽपि सः स्वकीयेऽध्ययनकाले श्रेष्ठेषु विद्यानुरागिषु छात्रेष्वगण्यत गुरुजनैः । तदानीं तस्य स्वास्थ्यदौर्बल्यादार्थिक्याः स्थितेरक्षमत्वाच्च तद्विद्याध्ययने नानाविघ्नबाधाः समादेतुः परन्तु कुशाग्रबुद्धित्वाद्योग्यतया च स सर्वा बाधा अतिक्रम्य सहाध्यायिषु विशिष्टोऽग्रगण्यश्च छात्रः स्वगुणैर्मन्यते स्म ।

अथ सन् १८८५ खीष्टाब्दे स खलु वाक्कीलत्वस्य परीक्षामुत्ततार । ततस्तेन वाक्कीलत्वस्य व्यवसायोऽपि च समारब्धः । व्यवसायेनानेन स धनार्जनमपि प्रभूतं कर्तुमारेभे परन्तु समाजसुधारसम्बन्धिषु तस्य स्वाभाविक्या अभिरुचेर्हेतोः स शनैःशनैस्तथाविधासु कर्मप्रवृत्तिष्वधिकाधिकं मनो दधे । स हि स्वात्मना सञ्चितं धनं समाजसुधारसम्बन्धिषु कार्येषूत्स्रष्टुमारेभे । अन्ततः स वाक्कीलत्ववृत्तिं परित्यज्य स्वात्मानं पूर्णतया सामाजिकेषु देशस्योद्धारकार्येषु च नियुयोज । सोऽनाथविधवादीनां कृतेऽनाथाश्रमान् विधवाश्रमांश्च संस्थापयामास । तेन स्वकीयाभ्यामनन्यमित्राभ्यां लालाहंसराजगुरुदत्तविद्यार्थीत्येताभ्यां सम्मन्त्र्य 'दयानन्द-एंग्लो-वैदिक-कालेज' इत्याख्यस्य महाविद्यालयस्य स्थापनापि व्यधीयत । इत्थं क्रमेण समाजसुधारकार्याणि, देशोन्नतिकार्याणि, शिक्षोन्नतिकार्याणि च कुर्वाणोऽसौ लालालाजपतिरायमहाभागो देशसेवार्थं राजनीत्यामपि सक्रियं भागं गृहीतुमारेभे । स खल्वत्यन्तमुत्कृष्टो वाग्मी वक्ता प्रतिभासम्पन्नो लेखकश्चासीत्ततोऽस्मिन्

राजनीतिक्षेत्रेऽपि साधीयसीं प्रगतिं कर्तुमारेभे ।

अथ लालामहाभागस्य देशभक्तिपूर्णान्विचारांस्तथा तादृशेषु कर्मकलापेषु तस्याव्याहतां सक्रियतामवलोक्य सन्१९०८ खीष्टाब्देऽत्र भारतशासको गौराङ्गसर्वकारस्तस्मिन् राजद्रोहाभियोगं स्थापयामास । तमपराधिनमुद्घोष्य बन्दिनं कृत्वा माण्डले कारागारं तत्कालीनाः शासकाः प्रेषयामासुः गच्छति काले सः कारागारबन्धनान्मुक्तो बभूव ।

ततोऽसौ लालामहोदयः सन् १९१४ खीष्टाब्देऽमरीकादेशं जगाम । यद्यपि स ततः स्वदेशं प्रति प्रतिनिर्वर्तितुमियेष परन्तु गौराङ्गाणां विद्वेषात्तेषां कूटनीतिगतापकौशलाच्च स्वदेशागमनाय 'पारपत्रं' प्राप्तुं न पारयामास । अस्मिन् व्यतिकरे सः पञ्चवर्षाणि यावदमेरिकामेवाध्युषितुं विवशो बभूव । स तत्र धनाभावान्महान्ति कष्टानि, महाक्लेशांश्च सेहे । तस्य क्लेशकष्टव्यथादीनामनुमानमेतावतैवानायासं कर्तुं शक्यते, यदसौ महापुरुषस्तत्रामरीकायां पाचकत्वस्य, भृत्यत्वस्य चापि कार्याणि स्वीकर्तुं विवशो बभूवागत्या । यदा भारतीयैर्जनैस्तस्यार्थिकं काठिन्यमज्ञायत तदा भारतदेशादस्मात्तस्मै प्रभूतं धनं सम्प्रेषितम् । सत्यामपि धनोपलब्धौ जातायां स तद्धनं नात्मार्थमुपयुयोज, वरं च स्वाभिमानधनो महात्मासौ स्वावलम्बी देशभक्तः सार्वजनीनेषु सत्कर्मसु प्रदत्तवान् । अमरीकामधिवसन्नपि सोऽयं लालालाजपतिरायमहोदयः पत्रपत्रिकासु लेखनिबन्धलेखनैः पुस्तकप्रणयनैर्वक्तव्यप्रसारणैश्च भारतीयासु प्रजासु देशभक्तिभावान् नवजाग्रतिनवचैतन्यापादकान् समापूरयंस्तस्थौ । प्राप्तकालमसावमरीकातो भारतवर्षं स्वदेशमाजगाम ।

अथ सन् १९२० खीष्टाब्दे भारतीया जनास्तं प्रति सम्मानादरभाववशात् कालिकातानगरे कांग्रेसाध्यक्षपदे प्रतिष्ठाप्य तस्य महान्तमादरं सत्कारं चाकार्षुः । सन् १९२६ वर्षे स असेम्बलीति परिषदि तत्सदस्यो निरवाच्यत । तस्यां परिषदि स राष्ट्रियमहासभायाः (कांग्रेसइत्याख्यायाः) पक्षस्य नेता निर्वाचितः । अस्यामसेम्बली-परिषदि लालामहाभागोऽतीव योग्यतया, निर्भीकत्वेन, कौशलेन, प्रभावशालिना प्रकारेण च लोकपक्षस्य समर्थनं चक्रे, यतः स एको वाग्मी वक्ता विधिविधानतन्त्रे व्युत्पन्नो मनीषी च बभूव । स खलु हिन्दी-ऊर्दू-आंग्लभाषेतिभाषात्रितयेऽपि साधिकारं प्रगल्भं भाषितुं समर्थोऽभूत् । भाषणकाले स सिंह इव निर्भयं गर्जन् महाप्राणतया सर्वतन्त्रस्वतन्त्रं स्वाभिप्रायान् प्रकटयति स्म । स्वकीयेन प्रचण्डेनौजस्विना च व्यक्तित्वेन स सर्वान् प्रभावयति स्म, ततो लोकास्तमादरेण 'पञ्चाम्बुकेशरी' इत्याहुः । यथा महात्मा गोपालकृष्णो गोखलेमहोदयो देशसेवार्थं 'भारत–सेवक–समाज'—नाम्नीं संस्थां प्रत्यष्ठपीत्तथैवासौ लालालाजपतिरायमहाभागोऽपि च 'लोकसेवामण्डलम्' इत्याख्यां संस्थां प्रतिष्ठापयामास । स किलास्यै संस्थायै स्वकीयां सर्वामपि च सम्पदं समुत्ससर्जेत्यहो तस्य महामनसस्त्यागभावः ।

अथ स्वातन्त्र्य युद्धे गतिशीले जाते गौराङ्गशासनेन 'साइमन कमीशन' इत्याख्य आयोगो भारतं प्रति प्रेषितोऽभूत् । अस्यायोगस्य बहिष्कारकरणार्थं महाभागेनानेन लालालाजपतरायेण दुर्धर्षो विरोधोऽक्रियत । अस्यायोगस्य विरोधे स मद्रासनगरे समुद्रतटे यदैतिहासप्रसिद्धं महाप्रभावपूर्णं भाषणं बभाषे तदा गौराङ्गा भृशं क्रोधाध्माता बभूवुः । देशस्यास्य प्रजाजनास्तस्य तद्भाषणमतीव प्रशशंसुः । अस्मिन्नेव प्रसङ्गे दुष्टैराङ्गलशासकैर्लालामहोदये महात्मनि प्राणघातका निष्ठुराश्च यष्टिप्रहारा अकार्यन्त । तैरेव प्रहारैर्भग्नस्वास्थ्योऽसौ लालामहोदयो रुग्णो भूत्वा पर्यन्ते वीरोचितां स्वर्गतिं प्राप्य भारतस्य स्वातन्त्र्य

संग्रामे स्वात्मनो बलिदानं कृत्वाऽजरामरत्वं लेभे ।

लालालाजपतिरायेऽनेके स्पृहणीयाः प्रोत्कृष्टतराः सद्गुणा आसन् । तथाहि—सामान्ये मध्यमवर्गीये वैश्यकुले समुत्पन्नोऽपि चायं लालामहाभागो बाल्ये वयस्ये वातीव प्रखरधिषणः प्रतिभासम्पन्नो मेधावी च समभूत् । स हि प्रायेण सदा सर्वदा रुग्णो दुर्बलस्वास्थ्योऽपि च शिक्षाप्तयेऽध्ययनतत्परः सपरिश्रमं विद्यायां स्वाभाविकीमभिरुचिं पुपोष । फलतः सोऽयं वाक्कीलकर्मणि साफल्यमवाप्तवान् । स खल्वांग्लभाषायामसाधारणमधिकारं व्युत्पत्तिं च दधे । तस्यांग्लभाषायां वक्तृत्वे लेखने चानन्यसाधारणोऽधिकार आसीत् । यदासौ समाजसेवार्थं सक्रियराजनीत्यां च कर्मक्षेत्रमवततार तदानीमत्र भारते देशेऽस्माकमनेके लोकोत्तरप्रतिभावन्तो विद्वांसो विद्यमाना आसन्। सत्यप्येवं स लेखने भाषणे च तामिमां विदेशीयामपि भाषामांग्लीं सूत्रधारो नटीमिव रङ्गमञ्चे यथेच्छमनर्तयत् । जानन्त्येव तद्विदो यद्धि मिस मेयो नाम्नी काचिद्भारतविद्वेषिणी पूर्वाग्रहग्रहिलांग्लमहिलांग्लभाषायां 'मदर इण्डिया' नाम्नीं पुस्तिकां विलिख्य भारतीयजनानां दोषाख्यानं कृत्वा भारतीयान्निनिन्द तस्योत्तरे 'अनहैपी इण्डिया' इति प्रतिवादपुस्तकं रचयित्वा लालामहोदयो युक्तितर्कवादैः सप्रमाणं च तत्खण्डनं कृतवान् यतोऽसौ विदेशीयैः कृतामात्मनो देशस्य देशबन्धूनां च निन्दावादान् सोढुं न पारयामास । लालामहोदयस्यांग्लभाषाया लेखनशैली चातीव व्यङ्ग्यगर्भा मर्मस्पर्शिणी चित्रविचित्रा लाक्षणिकी चासीत् । स राष्ट्रभाषां हिन्दीं तु सर्वात्मनात्मीयां मातृभाषाम् देशगौरवानुरूपामेव मेने । स हि स्वभाषणेषु हिन्दीभाषायाः पक्षं सदैव समर्थयामास । बहुभाषावित् पर्यटितनानादेशोऽपि स एष महानुभावो लालालाजपतिरायो देशभाषानुरागं हृदयेन द्रढयामास व्यवहारेऽपि च स हिन्दीभाषामधिकाधिकं प्रयुयोजेति तस्य राष्ट्रभक्तेरनुरूपमेव ।

न केवलमसौ लालामहोदयो देशभक्तो राष्ट्रवादी समाजसुधारको विद्वानेवासीद्वरं चैकः श्रेष्ठो महालेखकः साहित्यसेवकः पत्रकारश्चापि बभूव । स हि 'इग्लैण्ड्स डैट टू इण्डिया' 'रिजुविनेशन ऑफ आर्यावर्त' 'भारत का इतिहास' 'श्रीकृष्ण चरित्र' 'दयानन्द' 'शिवाजी' प्रभृतीन् ग्रन्थानपि लिलेख । तत्प्रणीतास्त इमे ग्रन्थास्तस्य साहित्यिकीं प्रतिभां सप्रमाणं प्रमाणयन्ति । स खल्विग्लैण्ड–अमरीकादिषु विदेशेषु निवसन्नपि भारतीयस्वातन्त्र्यान्दोलनस्य समर्थनेऽनेकाः पुस्तिकाः, प्रचारपत्राणि, लेखनिबन्धादींश्च लिलेख । तैरेतैः सर्वैस्तस्यानुपमं प्रतिभानवत्त्वं सुस्पष्टं प्रसिद्धयति । द्वितीये महायुद्धे प्रवर्तमाने लालामहाभागोऽयं 'तरुणभारतम्' पत्रं सम्पादयामास सञ्चालयामास च । स च पुनः 'पंजाबी' 'बन्दे मातरम्' तथा 'भारतदशासुधारक' इत्यादीनि हिन्दीसमाचारपत्राण्यपि सम्पादयामास। यद्यपि तस्य हस्ताक्षरलिपि—उर्दूवर्णमालया लिखिता भवति स्म परन्तु तस्य वाक्यरचना, विचारसम्पत्तिश्च हिन्दीभाषाशैलीयुक्तैवासीत् । स किलाख्यभाषामपि पद्धतिपुरस्सरं शिशिक्षे । तस्याख्यभाषाशिक्षको मोहम्मदहुसैन 'आज़ाद' इत्याख्यः प्राध्यापकोऽभूत् ।

इत्थं विधाय महाप्राणाय, महात्मने, समाजसुधारकाय, देशभक्ताय, नानागुणगणसम्पन्नाय महापुरुषाय वयं तस्य शताब्दीमहोत्सवोद्यापनप्रसङ्गे सश्रद्धं सभक्तिभावं सादरं च श्रद्धाञ्जलीन् समर्पयामः । ——

# अभिभाषणम्

अखिल-भारतीय संस्कृत-महासम्मेलन–पञ्चमाधिवेशनस्य सभापतीनां
आचार्य श्रीनवलकिशोरकाङ्कर–महोदयानाम्

सोऽयं सन्तोषस्य विषयः यद् राजस्थानप्रान्ते अन्यत्रापि च कुत्रचित् संस्कृतशिक्षा-सञ्चालकस्य (Director of Sanskrit Education स्वतन्त्रः कार्यालयः स्थापितः सर्वकारेण, यत्प्रयत्नेन संस्कृतविद्यालयेषु छात्रवृद्धिः अपि अबोभवीत् इत्यपि श्रूयते। किन्तु मदीयेन मतिविलसेन तु ये वराकाः बालकाः तेषां शोभनेन आकर्षणेन, छात्रवृत्यादीनाम् अनल्पेन प्रलोभनेन, प्राध्यापकादीनां सर्वविधेन अनुरोधेन वा आचार्यपरीक्षां शास्त्रिपरीक्षां वा समुत्तरन्ति ते अपि पुनः पुरतः कार्यक्षेत्रस्य अभावात् स्वकीयं भागधेयं सुभृशं दूषयन्तः प्रतिपलं क्लिश्यन्तश्च प्रलोभनदायिनः सुतरां शपन्ते एव। अतः कार्यक्षेत्रस्य विस्तारम् अन्तरा छात्रवृत्यादिप्रलोभन-पद्धत्या संस्कृताध्ययनाय छात्राणाम् आवर्जनं बलिपशूनाम् उत्पादनम् एव केवलं कलयामि।

अयि मान्याः वदान्याः,

यद्यपि अस्माकं प्रमुखाः शासकाः सभा-सम्मेलनादिषु सम्मिल्य समुच्चान् मञ्चान् अधिरुह्य च मुक्तकण्ठं संस्कृतगुणान् गायन्ति, 'स्कूलकालेजेषु' संस्कृतस्य अनिवार्यतायाः महत्त्वं प्रदर्श्य सहसा विनाऽऽयासं प्रयासं च साधुवादं समर्जयन्ति, आचार्य-शास्त्रिपरीक्षोत्तीर्णान् व एम०ए०-बी०ए०-समानान् समुद्घोष्य सहजम् एव जनतायाः धन्यवादान् आप्नुवन्ति, परन्तु प्रायोगिकरूपेण किं ते सर्वसमक्षं गृहीतायाः प्रतिज्ञायाः पूर्त्यै स्तोकम् अपि चेष्टन्ते इति ते एव स्वय स्वकीयोरसि हस्तं निधाय विचारयन्तु।

सत्यं निवेद्यते, यद् ईदृग्विधैः केवलं व्याख्यानदानैः, अथवा प्रदर्शनमात्रैकफलैः अन्यैः आयोजनैः न संस्कृतभाषायाः स्वल्पतमः अपि समुद्धारः सुकरः। उद्धारस्तु तदा एव भविष्यति यदा अन्यविषयाणां बी० ए०--एम० ए०—महोदयानां तुल्यम् एतेषां संस्कृतविदुषाम् अपि सर्वतः कार्यक्षेत्रं प्रसरीसरिष्यति–इति।

क्षम्यताम् अस्माकम् भाग्यविधातृभिः, यतः 'हितं मनोहारि च दुर्लभं वचः'। आङ्ग्लाः भारतीयसंस्कृतेः संस्कृतस्य च शत्रवः अवश्यम् आसन्। किन्तु ते भाषाविज्ञानोपासनायाः भक्ताः अपि आसन्। अतः ते भाषाविज्ञानस्य आधारशिलां संस्कृतां वाचं जीविताम् एव वाञ्छन्ति स्म। आत्मनः संस्कृतेः परवशतया तैः, अथवा तेषाम् चरणचुम्बिभिः भारतवासिभिः मृतभाषा-व्यपदेशेन अस्याः निन्दा अक्रियत, परन्तु अद्य इव सुमधुरैः प्रकारैः न एतस्याः प्रच्छन्नम् उन्मूलनं तैः समारब्धम्। अद्य तु भारतीयैः एव भारते देवभारत्याः क्रियमाणाम् अन्त्येष्टि-समायोजनां पश्यामः। याम् अभि अस्माकं शत्रवः अपि वीक्षितुं न साहसम् अकुर्वन्, शिव! शिव!! अद्य तस्याः एव भारत्याः हत्या अस्माकं हस्तैः अपदयं क्रियते। यां संहर्तुम् आङ्ग्लानां हस्ताः कम्पन्ते स्म लज्जन्ते स्म च तामेवाद्य वयं समूलं समुन्मूलयितुं बद्धपरिकराः गृहीतव्रताः इव च आत्मानं प्रदर्शयामः।

अद्यापि समयः वर्त्तते, अधुनापि न निर्गताः अस्याः प्राणाः, इदानीम् अपि इयं श्वसिति। अतः सम्प्रति अपि सर्वाधाराः देशकर्णधाराः यदि अस्याः संरक्षणम् अभिलषन्ति तर्हि नूनं तैः संस्कृतम् उद्दिश्य कामं क्रियमाणं धनापव्ययम् अपास्य वास्तविकः अकृत्रिमः च कश्चन अस्याः रक्षणोपायः प्रचारणीयः। स च उपायः तेषां हस्ते एकः एव

यत् संस्कृतज्ञानां कार्यक्षेत्रस्य विस्तारः। विस्तार-प्रकारः च अग्रे प्रस्तावोपक्रमे निवेदयिष्यते।

अयि प्रभूतप्रभावाः महानुभावाः,

परन्तु वयं केवलं सर्वकारम् एव शप्त्वा न स्वकर्त्तव्यं पूरयामः। अस्मत्करणीयम् अपि कार्यं बहु विचारणीयं वर्त्तते। यतः संस्कृतह्रासे न केवलं सर्वकारः एव कारणम् अपितु संस्कृतभाषायाः प्रकल्पिता काठिन्यविभीषिका—पिशाचिका अपि अत्र सहयोगं प्रयच्छन्ती क्षते क्षारम् इव प्रक्षिपति। अस्याः पिशाचिकायाः च जन्मदातारः वयम् एव अधन्याः अपि धन्यम्मन्याः बुधमूर्धन्याः स्म। न जाने कथं प्रारम्भतः एव पण्डितप्रकाण्डाः अस्याः काठिन्याय स्पृहयन्ते स्म ? परन्तु यदा इयं लोक-भाषाऽऽसनम् अध्यासीना अवर्तत तदा तु आबाल-वृद्धम् अबाधप्रचारेण न किमपि काठिन्यम् अनु-भूयते स्म लोकैः। परं साम्प्रतं तु अस्माकं प्रपूर्णेन अपुण्येन न इयं लोकभाषा, न राष्ट्रभाषा, न राज-भाषा अस्ति, विश्वभाषात्वस्य तु कथा एव वाचाम् अगोचरा ? अस्यां दशायां यदि संस्कृतस्य काठि-न्यम् उद्घोष्य ततो दूरं धावन्ति लोकाः, न तर्हि किमपि आश्चर्यम्। सत्यं हि विगतेषु द्विसहस्राधि-केषु वत्सरेषु प्रायः काठिन्येन पाथेन ईदृक्षःएव संस्कृतवृक्षः फलितः पुष्पितश्च यस्य आनन्दं केवलं कृतघोरपरिश्रमाः एव आर्यमिश्राः प्राप्तुं शक्नु-वन्ति, न पुनः जगन्ति सर्वाणि। संस्कृतस्य तत् स्वरूपं तिष्ठतु तावत् ग्रन्थेषु, किन्तु इदानीं 'भाष-णाद् भाषा' इत्युक्तदिशा भाषायाः भाषणरूपं यल्लक्षणं तत् तु जनसमूहात् काठिन्यकारणेन लुप्तम् इव आभाति। काठिन्यं च स्ववैदुष्यप्रदर्श-नाय व्याकरणं व्याजीकृत्य अस्माभिः एव उत्पादि-तम् उत्पाद्यते च। दुराग्रहपराः वैयाकरणाः तु इदमेव अभिलषन्ति यद् अस्मद्रसनाभिः एव आस्वादिता इयं सिंह-दंष्ट्रान्तर्गता हरिणीव स्वा-त्मसात् स्यात्। सत्यं हि राहुकवलीकृता इन्दुकला इव व्याकरण—निगलिता सुरभाषा एषा क्षीणक्षीणा जाता। अनुभूयते, यदस्याः कण्ठनलिका एव अव-रुद्धा, येन वराक्याः जीवने अपि सन्देहः समा-यातः। हा हन्त ! एषा 'राष्ट्रभाषा स्याद्' इति तुमुलं कोलाहलं वितन्वानैः अपि सूरिशार्दूलैः उग्र-रोगम् इव अस्याः काठिन्ययोगं विज्ञाय न सार-ल्याय यतितम्।

विद्वद्वर्याः,

व्याकरणकारणेन एव तु एषा भाषा अद्यत्वे सुरक्षिता अस्ति। अहं तु अक्षरशः अस्य तावतीम् एव आवश्यकतां स्वीकरोमि या हि महाभाष्यस्य आरम्भे एव भगवता पतञ्जलिना प्रतिपादिता। नापि अहं व्याकरणविरुद्धं कमपि प्रयोगं प्रयोक्तुं कामये। न इदम् ईषद् अपि मम शेमुषी-विलसितं यत् भाषायाः कृते व्याकरणं व्याधिकरणं वर्त्तते। किन्तु प्रजानां पापेन प्रतिदिनम् अस्माकं बुद्धेः ह्रासः बोभवीति। तेन प्रलम्बसमासानां, दुरूह-प्रयोगाणाम्, अप्रचलितशब्दधातूनां च अवबोधाय बुद्धिव्यायामम् आचरितुम् अशक्ता जनता काठि-न्याय क्रुध्यति ततो दूरं धावति च। देश-काला-वस्थापेक्षो हि भवति प्रेक्षावतां पन्थाः। अतः समयानुसारं व्याकरण-नियमेषु पुनः अवधान-दानम् अनुभवामि। अस्माभिः एव एषा कठिनीकृता अतः समयम् अनुसृत्य अस्माभिः एव एषा सरला सम्पाद्या।

इदं तु अस्माकम् अननुमेयं भागधेयं यद् विद्याप्रचार-समितेः मनस्विनः मन्त्रिणः गीर्वाण-वाणी—समुद्धरण—प्रणयिनः श्रीश्यामकुमाराचार्याः अविगणय्य पुराणपण्डितानां भृशम् आक्रोशम् अस्याः सारल्यसम्पादनाय परितः प्रसाराय च 'साम्प्रतं कीदृशं संस्कृतम् अपेक्षितं वर्तते' अस्मिन् विषये पुस्तकरूपेण एकां योजनां प्रकाशितवन्तः। निश्चितं हि इमे आर्याः आचार्याः सरल-सरलायाः संस्कृत-लेखन-विचारधारायाः प्रवर्त्तकाः प्रतीयन्ते।

अनया शैल्या साधारणाः जनाः अपि संस्कृतम् अवगमिष्यन्ति इत्यत्र नास्ति सन्देहः । नवीना इयं शैली 'भवितव्य' प्रभृतिभिः कैश्चन संस्कृत-पत्रैः अपि अनुसृता-इत्यपि न तिरोहितं तद्विदाम् । यद्यपि 'क्वैकमत्यं महाधियाम्' इति हर्षकवेः आभाणकानुसारं न निखिलाः विद्वांसः साम्प्रतम् अक्षरशः एभिः निश्चितान् सर्वान् नियमान् स्वीचिकीर्षन्ति । किन्तु ये हि संस्कृतभाषायाः सारल्याय, अस्याः राष्ट्रभाषात्वाय, लोकभाषात्वाय च स्पृहयन्ते अथवा राष्ट्रभाषायाः हिन्द्याः **"प्रधान सहभाषा"** पदम् अध्यारूढाम् इमां कामयन्ते, संस्कृतक्षेत्रे अपि च युगान्तरम् आधातुम् ईहन्ते, ते अवश्यम् "वचसस्तस्य सपदि क्रिया केवलमुत्तरम्" इति माघीयं पद्यं प्रमाणीकृत्य अक्षिणी निमील्य केनापि अज्ञातेन प्रभावेण वशीकृताः इव, स्वीकृताः इव, आवेशिताः इव, वशंवदाः इव वा मौनं कलयन्तः इतः ध्यानं प्रयच्छेयुः अनुसरेयुश्च अभिनवां क्रान्तिकारिणीम् इमां शैलीम् ।

एतत्कृते अहम् इदम् अनुभवामि यद् विद्वांसः सम्मिल्य सर्वप्रथमम् ऐकमत्यम् अत्र आपादयेयुः । ततश्च ते राजसाहाय्येन एकस्य ईदृग्विधस्य पण्डितपुरस्य तत्रैव च एकस्य संस्कृतविश्वविद्यालयस्य स्थापनं कुर्युः, यत्र अनया शैल्या पठन–पाठनादिव्यवस्था स्यात् । इदं कार्यं च इयं भारतीय–विद्याप्रचार–समितिः स्वहस्ते गृह्णीयात् ।

अयि प्रणम्याः विद्वद्वरेण्याः,

साम्प्रतं बहुपरिश्रमय्य धीमतः श्रीमतः उपसंहारावसरम् उपसारयामि । इयं हि संस्कृतभाषा अस्माकं महर्षिनिर्विशेषैः पूर्वजैः सविश्वासम् अस्मासु अपूर्वन्यासः इव विन्यस्ता । सर्वतोभावेन अस्याः रक्षणम् अस्माकं परमः धर्मः । अतः यदि तदभीष्टं तर्हि निम्नलिखिताः एते उपायाः अनुष्ठेयाः । एषु कतिचन अस्मत्करणीयाः, केचन च सर्वकारेण सम्पादनीयाः सन्ति । तत्र अस्मदधीनाः इमे उपायाः—

सर्वप्रथमं तु 'अयं न धत्ते संस्कृताध्ययनाधिकारम्' इति धियम् अवधूय सर्वेषु जनेषु विना भेदभावं परम-रमणीय-रमणी-रमणीया इयं गैर्वाणी वाणी प्रसारणीया । तदर्थं च संस्कृतज्ञाः लेखने, भाषणे, पठने, पाठने च सरलसरलां संस्कृतभाषां प्रयुञ्जीरन् । एतत्कृते यथासम्भवं लोकप्रचलितानाम् एव तत्समशब्दानां प्रयोगः करणीयः । नहि 'इन्द्र' शब्दप्रयोगे 'विडौजाः' शब्दः प्रयुज्येत । केवलं पाण्डित्य–स्थापनाय प्रलम्बतमानां समस्तपदानाम्, इदानीम् अप्रचलितानां च लकाराणां सर्वत्र प्रयोगः परिहरणीयः । भाषायाः सारल्य–सम्पादनाय लेखने अस्वाभाविकाः सन्धिप्रयोगाः अपि शत्रुताम् एव आचरन्ति । विना सन्धिप्रयोगं लिखितं मदीयम् एकं पुस्तकं राजस्थान-विश्वविद्यालयस्य कालेजकक्षासु बहोः कालात् पाठ्यते, साम्प्रतं च तत् त्रिवर्षीय (बी. ए) पाठ्यक्रमस्य तृतीयवर्षीयाः विद्यार्थिनः अभ्यस्यन्ति । सारल्यदृष्टया नवीनशैल्या च प्रभूतं प्रभाविताः लोकाः । अतः एषा शैली नूनम् अवलम्बनीया । सहैव अस्माभिः विद्वद्भिः विज्ञान–वाणिज्य–समाजशास्त्र–प्रभृतिविषयकाणि पुस्तकानि अपि विपुलानि सरलसंस्कृते सम्पादनीयानि, येन आङ्ग्लभाषाधिपत्यं विलुप्तं भवेत्, संस्कृतज्ञाः च कूपमण्डूकाः न कथ्येरन् ।

एतदतिरिक्तं सर्वकारेणापि सम्पादनीयाः सन्ति कतिपये उपायाः, येषाम् अभावे विदुषाम् अपि उपायाः सान्तरायाः एव स्थास्यन्ति । तत्र सर्वप्रथमं **१—सर्वकारेण इयं संस्कृतभाषा राष्ट्रभाषायाः हिन्द्याः प्रधानसहभाषा समुद्घोषणीया ।** २–सर्वथोपेक्षितायाः संस्कृतभाषायाः जीविकोपार्जनस्य अक्षमतां दूरीकर्त्तुं संस्कृतविद्वांसः अपि सर्वत्र

राज्यकर्मसु एम० ए०–बी० ए० महोदयाः इव नियोजनीयाः । ३—आङ्ग्लकालेजेषु अपि प्राध्यापकपदे प्राप्ताचार्यपदवीकाः स्थापनीयाः । ४—संस्कृतविद्वद्भ्यः अपि आई० ए० एस०,—आई० पी० एस०—प्रभृतिपरीक्षासु प्रवेशाधिकारः प्रदेयः, तदनुकूलः च परीक्षाक्रमः निर्धारणीयः । ५—ये वै केचन मन्त्रिणः, मुख्यमन्त्रिणः, प्रधानमन्त्रिणः राज्यपालाः, विदेशेषु भारतप्रतिनिधयः वा नियुज्यन्ते, तेषां कृते संस्कृतभाषाज्ञानम् अनिवार्यं भवेत् । ६—सर्वेभ्यः वर्त्तमान-कर्मचारिभ्यः अपि स्वकर्त्तव्य-परिज्ञानाय संस्कृतशिक्षणम् आवश्यकं क्रियेत । एवं कृते न केवलं संस्कृतस्य प्रसारः एव भविष्यति, अपितु भारताद् भ्रष्टाचारादयः अव्यहरणीयाः व्यवहाराः अपि हरिणप्लुतैः पलायिष्यन्ते । ७—सर्वेषां विश्वविद्यालयादीनां निखिलासु परीक्षासु संस्कृतस्य साधारणम् एकं पत्रं निश्चीयेत, येन राष्ट्र-भाग्य-विधायिनः विद्यार्थिनः तुलनात्मकदृष्टया एतन्महत्त्वम् अवगच्छेयुः । सहैव इण्टर–बी० ए०–परीक्षयोः ये हिन्दीविषयं गृह्णन्ति, तेषां कृते संस्कृतविषयग्रहणम् आवश्यकं विधीयेत । **८—सर्वकारेण क्षेत्रीयभाषाणां संस्कृतलिपिः अपि 'देवनागरी' निर्धारणीया । तत्तत्क्षेत्रेषु सन्तु नाम ताः ताः क्षेत्रीयभाषाः किन्तु तासां लिपिः देवनागरी संस्कृतलिपिः भवेत्—एकताप्रसाराय ।**

एवं सर्वकारेण विस्तारिते संस्कृतज्ञानां कार्यक्षेत्रे, संस्कृतज्ञैः च सरलीकृते संस्कृताध्ययने न तद्दिनं दूरं यदा भूय. अपि आसेतुहिमाचलम् आकामरूपगान्धारम् इदं भव्य-विभा-रतं भारतं सुरभारती-भासितं विलोक्येत । नगरे-नगरे, ग्रामे-ग्रामे, गेहे-गेहे, सरणौ-सरणौ, विपणौ–विपणौ च प्रतिमुखं 'रामः रामौ रामाः' इत्येवं संस्कृतस्य जयघोषः शोश्रूयेत, एतद्विजयपताका च सर्वत्र दोधूयेत । किमन्यत् ? अवश्यम् एव गीर्वाणवाणी-प्रभावतः निखिले अपि देशे पुनः वास्तविकं रामराज्यं राराज्येत ।

दयासिन्धवः बुधबन्धवः,

सहजसौजन्येन नैजेन स्नेहेन मदनल्प-जल्पन-समाहित-हृद्भिः श्रीमद्भिः खलीकृतः सविशेषः समयः, प्रदर्शितः च अमरभारतीं प्रति प्रभूतप्रभावः श्रद्धाभावः, तत्कृते समुपस्थितेभ्यः सर्वेभ्यःबुध-बन्धुभ्यः समर्प्य अनेकशः साधुवादान् विरमामि अस्मात् कर्मतः—इति महीयतां श्रुतिमहती सरस्वती । अथवा इदमपि भवतु भरतवाक्यम्—

प्रान्ते प्रान्ते भवतु भवतात् संस्कृतस्य प्रचारः,
देशे देशे सरतु सरताद् वेद–विद्या–प्रसारः ।
गेहे गेहे लसतु लसताल्लोक–सेवा–प्रकारः,
लोकः सर्वो जयतु जयतात् प्राप्त-पाण्डित्यसारः ॥

मुजफ्फर–नगरम्
(उत्तरप्रदेशः) ता० २८-२-६५

—



# चरकसंहिता विजयतेतमाम्

( कविवरः--श्री जनमेजयः विद्यालंकारः, एम. ए., शास्त्री )

न भीती रोगाणां क्वचिदपि न शङ्का च जरसः ।
न दौर्बल्यं देहे न च मनसि नैवात्मनि भवेत् ॥
अधीयानाः शास्त्रं चरकमुनिगीतं प्रतिदिनम् ।
नरा वा नार्यो वा ससुखमिह जीवन्तु सुचिरम् ॥१॥

शरीरे धातूनां कथमपि न वैषम्यमुदियात् ।
समानां धातूनां सततमनुबन्धश्च भवतु ॥
शुभोऽयं सिद्धान्तश्चरकमुनिना प्राङ् निगदितः ।
स्थिरं स्वास्थ्यं दत्त्वा प्रशमयति सर्वा अपि रुजः ॥२॥

चिकित्सायै योगश्चरकमुनिना यो निगदितः ।
प्रयोगोऽसौ शुद्धः प्रशमयति रोगान् बहुविधान् ॥
अहो चित्रं रोगान् जनयति न चान्यान् नवनवान् ।
चिकित्सायाः श्रेष्ठं जगति कथितं लक्षणमिदम् ॥३॥

शरण्या लोकानां बहुतर रुजाक्रान्तमनसां,
सुधाधारासारैर्जगदखिलमाप्याययति या ।
तपः सिद्धिः साक्षात् प्रथितयशसां पुण्यवचसाम् ।
ऋषीणामाद्यानां कृतिरियमुदारा विजयते ॥४॥

किमायुर्वेदोऽयं किमु भवति धर्मप्रवचनं,
रसाढ्यं काव्यं वा किमयमथवा सूक्तिनिबहः ।
इदं नीतेः शास्त्रं किमियमितिहासस्य रचना,
न किं किं पश्यामश्चरकमुनिगीते प्रकरणे ॥५॥

धन्यं पुनर्वसुमृषिं मुनिमत्रिजातम् ।
लोकोपकारनिरतं विरतञ्च लोभात् ॥
आद्यं गुरुं मतिमतां भिषजां वरेण्यं ।
वन्दामहे प्रतिदिनं शिरसा नतेन । ६॥

ज्ञानस्य सूत्रमधिगम्य गुरोः सकाशात् ।
लोकेषु यो बहुतरं बहुलीचकार ॥
तं वन्हिवेशमपि बुद्धिमतां वरिष्ठम् ।
श्रद्धानतेन शिरसा बहुशो नमामः ॥७॥



# गद्यं कवीनां निकषं वदन्ति

प्रो. श्री निगम शर्मा, कांगड़ीगुरुकुलम्

काव्यस्य भेदद्वयम् । दृश्यकाव्यं श्रव्यं काव्यं च। तत्र दृश्यं नाटकादि । श्रव्यं पुनर्द्विधा गद्यं पद्यं च, यत्र चोभयं तत् 'चम्पूकाव्यम्? इति कथ्यते ।

यत्र पुन र्न छन्दोनियमः, तद् गद्यम्, उक्तं च वृत्तगन्धोज्झितं काव्यं, गद्यमेतत् प्रकीर्त्यते । भामहः गद्यकाव्यं द्विविधं मनुते––कथा, आख्यायिका च। दण्डी तु तथा भेदं न स्वीकरोति–– 'अपादः पदसन्तानो गद्यमाख्यायिका कथा ।'

कुतः प्रभृति गद्यस्य प्रारम्भः, इति वक्तुं नोचितम्, मानवः सहजतया यदा वक्तुं प्रारब्धवांस्तदा गद्यमिश्रमेव तस्य वाक्यम् । अत एव यजुषि भूयांसो गद्यसन्दर्भा दृश्यन्ते, ब्राह्मणानि सर्वाणि गद्यप्रायाणि, उपनिषदः खल्वपि गद्ये एव ललितात्मके स्वविषयान् प्रकटयन्ति । सूत्रग्रन्थानां सर्वाणि प्रकरणानि गद्ये वर्तन्ते । तत्र भाष्याणि च गद्यमयान्येव । महाभारते स्थाने स्थाने दृश्यन्ते गद्यच्छटाः । शौनक–गार्ग्य–गालव–शाकटायन–कौत्स–वार्षायणि– स्फोटायन–यास्क–प्रभृतय आचार्या गद्यशैलीम् एव स्वनिबन्धेषु उररीचक्रुः । चरकसुश्रुतयो र्गद्यमतीव प्रौढम् । पतञ्जलि–व्यास–कात्यायनशंकरप्रभृतीनां भाष्याण्यपि रुचिरताया गद्यरचनाकलायाश्च पराकाष्ठामधिरोहन्ति ।

परन्त्वत्र तु अस्माकं चर्चाविषये कोऽप्यन्य एव 'गद्यं कवीनां निकषं वदन्ति' इति यो लिलेख तस्य हृदि वाणः, तस्य कादम्बरी चावश्यमेव स्फुरतः । अत एव अस्मिन् विषये सावधानेन चेतसाऽस्माभिर्विचारः कर्त्तव्यः । कविकलाबन्धुना सुबन्धुना वासवदत्ता, कोमलकान्तपदावलीजुषा दण्डिना दशकुमारचरितम् साध्वलङ्कृतम् । महाभाष्ये सुमनोत्तरा, भैमरथी, उर्वशी, चारुमती प्रभृतीनां कथानाम् उल्लेखो विद्यते । श्रीपालितस्य तरङ्गवती, रामिलसोमिलयोः शूद्रककथा, कस्यचन पुष्पदूतिकम् इत्यादीनां चर्चा चलति । राजा भोजेन मनोवती—शतकरणीहरणयोर्वर्णनमकारि । वाणो भट्टारहरिचन्दस्य प्रशंसां करोति । सूक्तिसुधा मुक्तावल्यां जल्हणः शिलाभट्टारिकां प्रशंसते । भोजेन शृङ्गारमञ्जरी कुलशेखरेण 'आश्चर्य मञ्जरी' च कृता । वादिगङ्गालेन कुसुममञ्जरी, हस्तिमल्लेन लम्भवती विहिता । रुद्रटेन त्रैलोक्यसुन्दरी, अपराजितेन च मृगाङ्कलेखा रचिता । कथाऽऽख्यायिका लेखनक्रमोऽद्यावधि चलत्येव । अम्बिकादत्तव्यासस्य शिवराजविजयः, मेधाव्रतस्य कुमुदिनीच द्रः, क्षमादेव्याः कथामुक्तावली इत्यादीनि प्रसिद्धानि ।

अद्यावधि इत्थं गद्यमयं पद्यमयं च कविकर्मग्रन्थतारकरत्नमण्डिते–साहित्यगगने बहुधा स्फुरति । पद्ये खलु एकेनापि पदरत्नेन सकलमपि पद्यं समुल्लसति परं गद्ये तु वाक्यान्तर्गतप्रतिशब्दस्यैव मनोहारित्वं वाक्यविच्छित्तेः प्रयोजकम् । महामहिमशालिनः सरस्वतीप्रणयिन एवात्र अभ्युदयाय प्रयतन्ते, नान्ये, अत एव गद्यं कवीनां निकषं वदन्तीति वाचो युक्तिरभिरूपाणाम् ।

अनवधिरयं साहित्यपारावारः । अमन्दानन्दसन्दोहम् आत्मनि प्रपूर्य कविः प्रस्तुतनिर्वाहार्थं भूविवरे वा गिरिगह्वरे वा मणिनिकरे वा गुप्तगृहे वा सर्वत्रैव समन्ततो निक्षिपति चक्षुः । यदा च नीलाम्बरं परिदधाना यामिनी कामिनीव

निखिलं महीवलयं पर्यटितुं चलति, तदैव कवेः कल्पनाऽपि प्रतिभया सख्या सह द्वीपाद् द्वीपं सञ्चरन्ती अभिसारिकेव प्रेयांसं सुकुमारं चित्त-निहितं भावं गवेषयति। विश्वासो न चेत्। शृण्वन्तु वाणस्य वर्णनपरम्पराम्। राज्ञी विलास-वती प्रस्तुताऽस्ति सगर्भा वर्णनाय—

"आरूढगर्भतयाऽन्तर्गतकुलशैलामिव क्षितिम्, सलिलनिमग्नैरावतामिव मन्दाकिनीम्, गुहागत-सिंहामिव गिरिराजमेखलाम्, जलधरपटलान्तरित-दिनकरामिव दिवसश्रियम्, उदयगिरितिरोहित-शशिमण्डलामिव विभावरीम्, अभ्यर्णब्रह्मकमल-विनिर्गमामिव नारायणनाभिम्, आसन्नागस्तोदया-मिव दक्षिणाशाम्, फेनावृतामृतकलसामिव क्षीरोद-वेलाम्, गोरोचनाचित्रितदशम्—अनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श।"

पश्यन्तु प्रस्तुतैश्वर्यवर्णनार्थं कवेर्बुद्धिः कुत्र-कुत्र गच्छति, एतेन वर्णनेन प्रतीयते कियत्-प्रभावोऽयं कियद्विभवोऽयं राजा तारापीडः।

यजुर्वेदस्य या परम्परा राजप्रशस्तिषु दरी-दृश्यते, सैव विकसनशीला सती सुबन्धौ दण्डिनि च समुल्लसति। सम्यक्प्रकारेणेयं वाक् एताभ्यां परिमार्जिताऽलङ्कृता च। तस्यैव कापि परा सीमा, चरमं सौष्ठवं वाणस्य पाञ्चालीशैल्यां वरीवर्ति। संस्कृतसाहित्यस्य गद्यकारेषु न वाण-भट्टात् कश्चन श्रेष्ठो लेखकः समजनि, इत्यत्र सर्वेषामालोचकानामैकमत्यमस्ति। वाणस्य गद्य-साहित्यं रसिकहृदयानां विदुषां कृते न च सुकुमारमतीनां सारस्वतपथे प्रारब्धप्रक्रमाणां कृते। पाञ्चालीशैलीसौष्ठवमेवात्र समुज्जृम्भते तत्रापि पदे पदे श्लेषः, स्थाने स्थाने परि-संख्या, समस्तपदानां सौन्दर्यम्, अनुप्रासानां भङ्क्तिः, उत्प्रेक्षाणां दक्षता, उपमानां संयोगः, विरोधाभासानां चमत्काराः, असङ्गतीनां सङ्गतिः, गुणानामनणूनि प्रदर्शनानि; एतानि सर्वाणि वाण-कवेरेव कौशलम्।

सुबन्धोर्वासवदत्तां दण्डिनो दशकुमारचरितं सम्यग् अवगाह्य यदा तच्छैलीं वयं वाणकवेर्गद्य-शैल्या तुलयामस्तदा वाणस्य श्लेषाणां प्रासादिकतां निभाल्य तस्मिन्नपूर्वां शक्तिमनुमिनुमः। तदिदं सत्यं सुबन्धुनेव वाणेनापि कोषभाण्डागारात् अप्रचलितानां शब्दरत्नानां प्रयोगान् विधाय स्व-कोषज्ञतायाः प्रदर्शनं बलादकारि, परं एतेषां शब्दरत्नानां प्रयोगेऽपि यथा सुरुचिरौचित्यं च वाणेन प्रदर्शितं, सानुकूलं सोत्कर्षं च यथा निर्वाहः कृतः, न तस्य गन्धोऽपि सुबन्धोर्वासवदत्तायाम्।

दीर्घकायानां समासानामलङ्कृता शैली यां वेबरमहाशयः सघनं काननं मनुते, तत्रैवाङ्गीकृता कविना वाणेन यत्र हि वर्णनात्मकं वृत्तम्, यथा विन्ध्याटवी, अच्छोदसरः, परं, यत्र वर्ण्यविषयो-ऽतीवसुन्दरोऽतीवनर्ममर्मनिर्भरो वा, तत्र इतः समासनिष्ठशैलीतो विभिन्नता वरीवर्ति, यथा जाबालितपोवनम्। अस्मात् आधीरगम्भीरभङ्कृत-प्रणालीप्रवाहात् यत्र कथोपकथनानि, यत्र वोप-देशवार्ता, तत्र वाणभट्टेन अतीव लघवो लघवः पदविन्यासाः कृताः—शकुनासस्योपदेशे, महाश्वेताया विलापे वा या सरला, सहजा, स्वाभाविकी, प्राञ्जला, प्राणवती शैली, या ऊर्जस्वला प्रभ-विष्णुता दृश्यते, तेन कस्य रहस्यवेदिनः सहृदयस्य सचमत्कारं समाधानं न भवति? क्वचित्क्वचित् लम्बकलेवराणां वाक्यानां मध्ये लघूनि लघूनि वाक्यानि प्रवेशयन् वाणः पूर्वपदावलीं जीवयतीव, प्राणप्रतिष्ठामिव करोति। मानवभावानां विशे-

षतश्च लज्जायाः शीलस्य कुलीनानां कुमारीणां प्रणयचित्रणस्य, भावानामुत्थानपतनयोर्विन्यासश्च वाणशैलीदर्पणे दर्शनयोग्या एव। अलङ्काराणां यथोचितं सचमत्कारं च सन्निवेशो वाणकवेरतिशयतां प्रभविष्णुतां च प्रकटयति। अत एव परवर्तिनः कवयो वाणानुकरणे हृदयनिहितसाहसा दरीदृश्यन्ते तथापि न ते पारयन्ति यथातत्त्वं अनुकर्तुम्। अत एव चाहुः "वाणोच्छिष्टं जगत्सर्वम्" न कोऽपि विषयो न कापि देवमर्त्यचेष्टा वा न किमपि विलसितं वाऽवशिष्टं यद् वाणेन न स्पृष्टम्। वाणानुकरणप्रवृत्तिर्वाणस्य लोकप्रियता वाणसूक्तिसुधासिक्तानां वाक्यानां प्रयोगाश्चास्य प्रमाणानि सन्ति, येन वक्तुं शक्यते यत् गद्यकारा भारतीयसहृदयं वाणं सर्वश्रेष्ठं गद्यकारं मन्वते।

वाणो यं विषयं स्पृष्टवांस्तस्यैव साङ्गोपाङ्गं तावद् वर्णनं कृतवान्, न तत्र किञ्चित्तिरोहितं वा, अवशिष्टं वा। राज्ञः, तपोवनस्य, शान्तिमूर्तेः, यज्ञस्य, गोः, धारायाः, सरोवरस्य, गिरेः, काननस्य, राजनगर्याः, देवमन्दिरस्य, यतिलम्पटस्य, यतेः किमवशिष्टम्, सर्वं सुविहितं सन्निहितं च।

वाणो न कदापि अमुष्मिन्नेव लोके विचरति, अपितु स्वर्णसुन्दरस्वर्गस्य स्वप्नालोके विचरति, अस्माल्लोकादतिदूरं स्वप्नलोकस्य हिरण्यमयी भूमिर्वर्तते। अयं देशो गन्धर्वाणाम्, विदिशाया एको राजकुमारः किन्नरमिथुनमनुसरन् सहसा तत्र प्रविष्टः। अप्सरसां चतुर्दशकुलानि सन्ति। काश्चन वेदवादेभ्यो निःसृताः, काअपि रविकिरणेभ्यः प्रपन्नाः, अपराः सिन्धोर्मन्थनवेलायामुत्थिताः, इतराश्चन्द्रकरेभ्यो निर्मिताः। तास्वेवैकतमा गौरी, यस्या पुत्री महाश्वेता। अत्रैव अस्याः सखी कादम्बरी सह सखीभिर्विलसति। श्रियां सौंदर्ये रूपलावण्ये वाग्विभवे नैता अस्य लोकस्य नार्यः, तथापि मानवभावनानामस्ति अत्रापि सञ्चारः। तथैव प्रेम, तथैव लज्जा, तथैव कुलीनता तथैव मानवरूपाः प्रणय-भावनाः। एतेन न ता ललना अस्माकं मानवललनाभ्यो विभिन्नाः सन्ति। नापि दूरभवाः।

वाणस्यायं स्वप्नः कल्पनाया यथार्थस्य च समञ्जलं सम्मेलनम्। स्वप्नस्य जागरणेन सह ग्रन्थिबन्धनम्। यमेव पक्षमुत्थापितवान् वाणस्तत्रादर्शयथार्थयोर्यावन्तः पक्षाः सम्भवन्ति तान् सर्वानपि सन्निवेशितवान्। राज्ञः-शूद्रकवर्णनप्रस्तावे एकतो यथार्थगुणानाँ समष्टिर्विद्यते, अन्यत्र चादर्शतायाः सङ्केतोऽपि चेतस्यवतरति। तपोवनवर्णनपरम्परायां तपोवनविषयकाणि सर्वाण्यपि वर्णनानि आविष्कृतानि। निस्तब्धतायाः, दुह्यमानानां होमधेनूनां क्षीरधाराध्वनेः, तेन च प्रतिध्वनितं तपोवनम्, सिंह्या सह मृगकिशोराणां निर्भया केलिः, यज्ञमन्दिरात् सुगन्धिमयधूमसन्ततिः, अन्येऽपि विषयास्तथा वर्णिताः सन्ति, नान्यत् किमप्यवशिष्यते। राज्याभिषेकसमये लक्ष्मीनिन्दायां विषमविषयाणां च विषये शुकनासेन यः उपदेशः प्रदत्तः, तत उत्तम उपदेशः कः खलु भवितुमर्हति ? विन्ध्याटवीवर्णनं विविधवनस्पतिपरिचयपारिचायकं वाणस्य, लतानां क्षुपाणां च यथा समन्वयस्तथैव पदसमन्विताः समासाः, भयङ्करताया मूर्तिमयी प्रतिमैव स्थापिता। अतीताः पुराणकथाश्चाप्योताः प्रोताश्च। यो हि पुरुषो न पुराणैः सह परिचयं रक्षति, धर्मशास्त्रं नीतिशास्त्रं च येन न निभालितम्, अश्वगजशास्त्रयोर्नास्ति यस्य प्रवेशः, यौवनागमकाले उदितानां भावानां अङ्गपरिवर्तनानां च यः सूक्ष्मतया नार्हति विशेषं परिद्रष्टुम्, तस्य कृते नूनमेव वाणभारती विन्ध्याटवी एव। तेनावश्यमेव जन्तुकथाविशदे पञ्चतंत्रे हितोपदेशे वा मनोरञ्जनं कार्यम् वाणकवेर्वर्णन-

विषयाः सहृदयताया उच्चकक्षामवगाहन्ते । न खलु तेनालङ्कारा निष्प्रयोजनाः सम्भृताः । तत्रापि सङ्कीर्णासु पदवीथीषु विस्तीर्णं लौकिकं ज्ञानमासादितम्, सूक्ष्मदर्शनतत्त्वानां च प्रदर्शनम् ।

कादम्बरी-पठन-प्रसङ्गेऽन्तःपुरे पुत्रोत्पत्तिकाले यद्दृश्य वयं पश्यामः, तदानींतनानां जनानां रीति-नीतिव्यवहाराणां मान्यताया यच्चित्रण वयं प्राप्नुमः, तत्प्रत्यक्षमिवोपस्थितं प्रतीयते । तच्चित्रणं तथा परिपूर्णं विवरणानि च तथा सूक्ष्माणि सन्ति, यत्पठित्वा भावद्वयमेवायाति । एकतस्तु वाणोच्छिष्टं जगत्सर्वम्, अन्यतश्च गद्यं कवीनां निकषं वदन्ति ।

वस्तुतो वाण एव गद्यकाव्यनिर्माणे प्रचुरचातुरीमधुरः । तस्य कादम्बरीदर्पणे वयं नानाभावानां रत्नच्छायाव्यतिकरमिव व्यतिकरं पश्यामः । भारतस्य संस्कृतेश्च मानवतायाश्च यदन्तर्यद्वा बाह्यं रूपं तत्सर्वं विशालायां कादम्बरीचित्रशालायां नरीनृत्यते ।

साम्प्रतं भारते नानाविधानि मतानि, नानारूपा भाषाः, नानाभूतानि परिधानानि च । एवं वैविध्यं विद्यते । नानाविष्काराणां च व्यतिकरात् समस्तं मानवहृदयं समाच्छादितम् । समुद्रे स्थले गगने चापि तीव्रतराणि यानानि धावन्ति । इयं समस्ता पृथिवी अङ्गनवेदी सञ्जाता, या वेददर्पणे वाणकवेः कल्पनायामासीत् तत्सत्यं समजनि ।

परं यथा यथा जगत्समक्षं आपतति तथा तथा मानवहृदयानि सङ्कीर्णानि जायन्ते । जनाः परस्परं कलहायमाना दरीदृश्यन्ते । शयानाः खलु स्वप्नेऽपि स्वार्थसाधनानि चिकीर्षन्ति । लम्पटाचरणानां आसंसारं विस्तारोऽस्ति, परस्परविश्वासस्य सौहार्दस्य स्नेहस्य मानवताया या नन्दनकल्पना वाणकविना प्रवाहिता सा तु स्वप्नभूता प्रतीयते ।

अत एव जनानां भावमन्दिरेषु न तथाविधाऽऽयुरर्चि दीप्यते, भोग-रोगाक्रान्तानि जनानां स्वान्तानि, अत एव न ततो विततो भवति मनश्चन्द्रमसो ज्योत्स्नाप्रवाहः । अन्यासु भाषासु क्वचन किमपि दृश्यते साहित्यमणेः प्रकाशः, परं भारते तु पद्यबन्धेऽपि गद्यगन्धेऽपि सर्वत्र मनवानरकेलिमात्रं जातमस्ति साहित्यम् अतीव क्षीणं क्षामं उपेक्षणीयं राक्षसक्षुधावृत्ति च !

अत एव भारते प्राचीना गद्यकाराः पद्यकारा वा साहित्यस्य उद्देश्य रचनाया याथार्थ्यं आदर्शाभिमुखतां मनोरञ्जनपूर्वकं कान्तासम्मिततयोपदेशयोगतां प्रदर्शयामासुः । यत्र मानवसंस्कृतेः प्रसन्ना मन्दाकिनी प्रवहति । कल्पनाया यत्र पराकोटिः । उपदेशयुजां वचांसि च यत्र कटुकान्यपि विनेयैर्गृह्यन्ते न च गर्ह्यन्ते । अत एव चोक्तम्— "प्रथमालीढमधवः पिबन्ति कटुभेषजम् ।"

अत्यन्तघोरेऽन्धकारकान्तारे यो विभ्रमवतीं तरन्तीं पृथिवीं सोन्मादां सानन्दां उच्छलत्तरङ्गां पश्यति कल्याणमात्रहेतुकाम् । यत्र सर्वं अतीव मृदुलं सुकुमारं च विभाति । अक्षयाक्षरेषु यस्याः क्षमादेव्या इतिहासः, यस्या एकस्मिन् भागे प्रखरः सूर्यस्तपति, अन्यस्मिंश्च नक्षत्रतारामण्डलपरिव्याप्तं गगनं रत्नसङ्कुलमिव प्रतिमण्डितं मानवकवि प्रतीक्षते, नारङ्गरङ्गमिव ब्रह्मणो रङ्गमञ्चमिव यस्या पृथिव्याः क्षितिजं स्वक्षीनिरीक्षणीयं सर्वथा सुन्दरं आह्वयतीव कवेः कल्पनाम्, विष्णोर्नीलकलेवरप्रतिमे गगनोत्सङ्गे भारहीना बालिकेव यत्रेयं पृथिवी सकौतुका क्रीडति, मानवकृते सेयं प्रकृतिरधुनाऽपि सरला सुभगा च । सर्वं भोजनपानादिकं सर्वे कर्त्तुमर्हन्ति कुर्वन्ति च । परं यदिदं किञ्च अनुभूयते तत्र मानवकुमाराणां कुमारीणां रक्षा, तेषां सम्वर्धनं मानवतायाः परिपूर्णा समृद्धिरभिव्यक्तिश्च, प्रेमसौंदर्यस्य वैभवं प्रभावश्च, सज्जनतायाः सज्जनब्रह्मानन्दावाप्तिश्चात्यन्तं

आवश्यकम् । एते सार्वभौमाः सार्वकालिकाः सिद्धान्ताः । देश-कालसमयानां नास्त्यत्रावच्छिन्नता ।

एतत्सर्वं निभाल्य इतिहास-भूगोल-अर्थशास्त्र-जन्तुविद्या-तर्क व्याकरण-गीत-वाद्य नृत्य–विज्ञान–भाषा–मत–इत्यादीनां च सम्यक् विवेचनं कृत्वा गद्यकविः प्रतिभायां प्रौढिं टीकते । सूक्ष्मावीक्षणे दक्षतां चाप्नोति । यथायथवस्तुतत्त्वयोजनेऽवसरं औचित्यं च लभते ।

अतीव मनोहरमिदं या पृथिव्याः स्मृतिः, पृथिव्यर्थमेव मानवप्रसूनस्य प्रस्फुटनं मुकुलनं गन्धावाप्तिश्च, संसारे मातृभूमिमृत्तिकातो न किमपि वस्तु सुन्दरं समीचीनं वा । देशस्य सा कल्याणमयी भूमिर्यत्र स्थातुं शक्यते, कर्म कर्त्तुं शक्यते, अभिनव पवनं गृहीतुं शक्यते, आशाकुञ्जं सेवितुं शक्यते, चन्द्रतारामण्डनं गगनं द्रष्टुं शक्यते, नास्ति यतो किमपि वस्तु सुन्दरं रमणीयं वा । धन्यः खलु स शिल्पी य एवं विधं गगनं इत्थंभूतां आनन्दजननीं जननीमिव पृथिवीं निर्मितवान् । "कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ।"

जीवस्यार्थोऽयं मृत्योर्निषेधः । मृत्योर्नायमर्थो यत् जीवस्य निषेधः । जीवनस्य निषेधात्मिका परिभाषा नायं यत्मृत्योर्भयमभिलषितम् । जीवनस्य सर्वाधिकरूपा दुर्बलता भयप्राप्तिः । सर्वतोऽधिका शक्तिर्जीवनस्य निर्भयावस्था । सचेतनाया मानवताया गुणोविकसनशीलः । समस्तायाश्चेतनाया लोप एव मृत्युः । ना च कदापि मानवः स्वीकर्त्तुमिच्छति यदयं पुनः पूर्णायां अचेतनावस्थायां निवर्तेत ।

एतत्सर्वं कवेरुपनिषद्भूतं विशेषतस्तु गद्यकवेः । यो हिं एषु स्थलेषु ज्ञानं विना पदसञ्चारं करोति विशृङ्खला खल्वस्य वाग् भवति पदपातिश्च । एतद्यो वेदनिहितं गुहासत् । स गद्यकवेः परमं पदमाप्नोति । कृतार्थयति च वंशं भूमिं वा । एकतः सर्वप्रकारेण काव्यानुशीलनं स्वार्थं यदुपयोगि तस्य निभालनं अन्यतश्च शास्त्रमर्यादां प्रति आदरदानं लोकमान्यतायाश्चापि नोपेक्षा ।

यथा वेधसो रूपातिशयनिर्माणदक्षस्याक्षीणता एवं निर्माणं कवेरपि, सहस्रै रपि प्रयत्नतो वाचस्पतिसहस्रै रपि निबद्धा न सरस्वती क्षयं गच्छति, यथा च जगतां प्रकृतिः प्रवृत्तिश्च । अत एव नास्तिको लोको विस्मयं मनुते, आस्तिकसंसारश्च स्वव्यापारकर्मण्यवलम्बनतां अवगाहते । एतत्तत्त्वप्रकाशनं गूढतमं कर्म सदैवात्र न्यूनतापुपूर्षासाहसं शरणीकरणीयमिति बलादिवोपयुक्ता भवन्ति प्राप्तबुद्धिचया अचिराद् विद्वन्निचयाः ।

समाजदर्पणं खलु मानवहृदयतर्पणं च साहित्यम् । तत्र कथासूत्रग्रहणे निर्वाहे च सदाऽप्रमत्तेन कविना भाव्यम् । वक्रोक्तिमार्गनिपुणेन, विकटाक्षरबन्धबन्धुना, नवार्थोल्लासनरसिकेन, अक्लिष्टश्लिष्टपदभाजा, स्फुटरसनिर्भरमधुरेण, मनःप्रह्लादिना, अनुग्राह्यानुग्राहकरूपसन्दर्भजुषा, सुसमाधिना गद्येन हृदयमतीव परितृप्तितां याति । तथाविधमेव गद्यं गद्यतयाऽपेक्षितमालोचकैः ।

मध्ये मध्ये यथावसरं समर्थ्यसमर्थनतया सन्ध्या-प्रभात-दिवस-रात्रि-वन-उद्यान-बाल तारुण्य-वार्धक्य–नदी–पर्वतादीनां विलसितानि स्वर्णसुगन्धसंयोगवत् कवेर्मनीषितं वर्ण्यं प्रकरणं चोल्लासयन्ति । एतत्सर्वं हृदयगम्यमेव । क्व वा कथं कियच्च भवेत् यत्स्वारस्यं उद्भावयेन्न च वैरस्य अनौचित्यं वा प्रकटयेत् । एतत्सर्वमभिसमीक्ष्यैव कल्याणजुषा कविना सुरसितगद्ये निरवद्यं मनो देयम्, कालप्राप्तवसन्तादीनामृतूनां कविसमयसिद्धानां च विषयाणां यथायोगं नियोजनं कवेः प्रातिभं पुष्णाति ।

यथा नानाप्रकारां प्रकृतिबहुलां रूपसम्भृतकलेवरां सृष्टिं विरचय्य ब्रह्मा अस्माकं आदरपात्रम्, यथा वा लोकलोचनानन्दविधायित्वात् अयं चन्द्रिकारमणश्चन्द्रोऽस्माकं पूजास्थानम्, यथा

वाऽऽयुषा शरीरेषु नवनवां भङ्गीमुत्पादयन्नयं विलसितुकामः कामो वामासु वामतामाचरति, यथा वा पुष्पोद्गमसमृद्ध्याऽयं वसन्तः सर्वेषां चेतांसि आनन्दयति तथैवायं कविरपि भुवनमण्डलमिदमन्यथैव दर्शयन् भवत्यस्माकं स्नेहैकभाजनम्।

अत एवायं गन्धबन्धः काव्यकर्विनिकषः परीक्षणप्रयासेन एकत्र तु भयावहः, परं परत्र तु सुखावहः। एकत्रोद्वेजकः परत्र तु प्रोत्साहकः। एकत्र समस्तकल्पनाकलापशोषकः परत्र तु कविताविलासाङ्कुरोद्भावने केसरप्ररोहसेचनकः। रत्नादीनामुत्पादने अनन्तरत्नपरिमण्डितस्य रत्नाकरस्य इव न कदाचनापि दारिद्र्यं गद्यबन्धरत्नसमुत्पादने परं प्रतिभादरिद्राणां तु कृतेऽस्त्येव—'गद्यं कवीनां निकषं वदन्ति।' इति भयावहा सूक्तिः। —

## श्रीमती रामप्यारी हाण्डा संस्कृतोन्नति पारितोषिक निधि

१– इस निधि का नाम श्रीमती रामप्यारी हाण्डा संस्कृतोन्नति पारितोषिक निधि होगा।

२– इस का १०००) रुपया गुरुकुल कोष में जमा है जो फिक्स डिपाज़िट रूप में पंजाब नैशनल बैंक में जमा है।

३– इस निधि का यह धन सुरक्षित रहेगा। केवल वार्षिक व्याज निम्न कार्य में लाया जायगा।

४– ऋषि दयानन्द कृत तथा ऋषि दयानन्द के जीवन और सिद्धान्तों सम्बन्धी साहित्य की पुस्तकें निम्न प्रकार प्रतिवर्ष पारितोषिक रूप में वितरण की जाएंगी।

१– अधिकारी परीक्षा ( मैट्रिक ) में संस्कृत साहित्य में प्रथम रहने वाले छात्र को – – १०) रु० मूल्य की पुस्तकें।

२– स्नातक परीक्षा ( बी० ए० ) में संस्कृत साहित्य में प्रथम रहने वाले छात्र को – – – – – २०) रु० मूल्य की पुस्तकें।

३– स्नातकोत्तर ( एम० ए० ) परीक्षा में संस्कृत साहित्य में प्रथम रहने वाले छात्र को – – – – – २०) रु० मूल्य की पुस्तकें।

नोट– यदि व्याज की दर घट बढ़ जाए तो उसी अनुपात से पारितोषिक की दर भी घटा बढ़ा दी जायगी।

५– जिन विद्यार्थियों को पारितोषिक दिया जाएगा उन की सूचना श्रीमती रामप्यारी हाण्डा को भेज दी जाएगी। अथवा श्री सत्यपाल जी हाण्डा ८५ नरवदा रोड, जबलपुर को भेजी जायगी।

प्रियव्रत<br>
आचार्य<br>
गुरुकुल कांगड़ी विश्वविद्यालय

# गुरुकुल पत्रिके !

[ रचयिता—श्री रत्नाकर शास्त्री एम. ए. साहित्यरत्नम् ]

(क)

कलयकीर्तिकला: कुलवर्धिनीः
रचय चोच्च–विचार–परम्पराः
सुखय संस्कृति– संस्कृत– गौरवैः
कुरु शुभानि गुरोःकुल-पत्रिके !

(ख)

परिमलाकल नो मलयानिलो
मिलति लोकमनःसु यथा गुणम्
निज यशः सुरभिः सुरभारती
भवतु भव्यजनेषु तथा भुवि ।

(ग)

क्षपित– पक्ष– विपक्ष–कुशिक्षणाः
पर– सुशिक्षण– रक्षण– सक्षमाः
तव गदन्तु कृतिं कृतिकर्त्रिके !
जन मनःसु गुणोन्नत–पत्रिके !

(घ)

तव सुधानिधि–सन्निधिमाप्य नो-
ऽशुचिवचांसि रुचिं शुचि दर्शने
दधति चेज्जितमत्र गुणैस्तव
गुरुकुलस्य कुलोन्नत– पत्रिके !

(ङ)

सपदि सज्जन मानस–नर्तिके !
विपदि मूढ–मनोगति–हर्त्रिके !
सकल साधु कुलोन्नति कर्त्रिके !
हर मलानि गुरोःकुल–पत्रिके !

टिप्पणी—

श्री रत्नाकरमहोदयैर्द्रुतविलम्बितेनच्छन्दसा विविधालङ्कारैश्च गुरुकुलपत्रिकाया महत्त्वपूर्णं यद् गौरवं प्रस्तुतं तदानन्ददायकं पठनीयञ्च वरीवर्ति ।

—सम्पादकः



# राजस्थान-संस्कृतसाहित्यसम्मेलनस्य द्वादशाधिवेशने

वेदपरिषदोऽध्यक्षस्य युधिष्ठिर–मीमांसकस्य अभिभाषणम्

८—ततस्त एवाश्मानोऽन्तरूष्मणा पच्यमाना लोहादारभ्यासुवर्णं धातून् उत्पादितवन्तः१। साऽयोहिरण्यरूपा सृष्टिरभवत्। अत एव—

हिरण्यं निधाय चेतव्यम्२ इति चयनविषयिका श्रुतिः प्रवृत्ता।

९—एवं पृथिव्याः पूर्णत्वेऽपि सा कूर्मपृष्ठवद् अलोमिकैव आसीत्। तत ओषधिवनस्पतयोऽजायन्त। एतदेव द्योतयितुम्—

इयं वा अलोमिकेवाग्र आसीत् ( ऐ० ब्रा० २४।२२ ) इति, ओषधिवनस्पतयो वै लोमानि ( जै० ब्रा० २।५४ ) इति च श्रुतिः प्रवृत्ता। एतामेवावस्थां द्योतयितुं लोमस्थानीया समिधस्तत्र स्थाप्यन्ते।

एवं नवम्याम् ओषधिवनस्पतिरूपायां सृष्टौ प्रादुर्भूतायां वनस्पतीनां शाखानां वायुवेगेन संघर्षे सत्यग्नेः प्रथमतः प्रादुर्भावो पृथिव्या उपरि बभूव। यतः प्रथमतोऽग्नेः प्रादुर्भावो वृक्षशाखानां संघर्षणेनैवाभवत्, अत एवाधानेऽपि अरणिमन्थनेनैवाग्निमुत्पादयन्ति, नान्येन प्रकारेण।

एतेनाऽग्न्याधानप्रक्रियाविवरणे विस्पष्टं भवति यदिमे श्रौतयागाः प्राकृतयागानामेव प्रतिनिधित्वं कुर्वन्ति।

इत्थमेव सायंप्रातः क्रियमाणोऽग्निहोत्रहोमो रात्रिंदिवसयोः, दर्शपौर्णमासौ कृष्णपक्षशुक्लपक्षयोः, चातुर्मास्ययागस्तिसृणामृतूनाम्, गवामयनं दक्षिणायनोत्तरायणयोः, ज्योतिष्टोमः संवत्सरस्य, सहस्रसंवत्सरसाध्यो यज्ञः सहस्रचतुर्युगपरिमितस्य सृष्टिकालस्य प्रतिनिधित्वं करोति। एवं एभिः श्रौतयज्ञैः सूक्ष्मा अतीन्द्रियाः प्राकृता यज्ञाः क्रिया घटना वा चित्रमिव मूर्तरूपेण पुरस्तादुपस्थाप्यन्ते बोध्यन्ते वा। एतेन श्रौतयज्ञानामत्याश्चर्यकरं परमोपयोगि प्रयोजनं व्याख्यातं भवति।

यदा श्रौतयज्ञानां सृष्टिविज्ञानमेव पृष्ठभूमिस्तदा याज्ञिकप्रक्रियया क्रियमाणोऽप्यर्थोऽन्ततो सृष्टिविज्ञानप्रतिपादकं३ एव। तस्माद् वेदानां विज्ञानमेव मुख्योऽर्थः। यत्पिण्डे तद् ब्रह्माण्डे इति वचनानुसारं सृष्टिविज्ञानस्यापि अध्यात्मे परिणामः। अत एव श्रुतिः प्रवृत्ता—

यस्तन्न वेद किमृचा करिष्यति ( ऋ० १।१६४।३९ ) इति।

सर्वे वेदा यत्पदमामनन्ति ( कठोप० २।१५ ) इति च।

वेदैश्च सर्वैरहमेव वेद्यः ( गीतायां १५।१५ ) इति च स्मृतिः।

इदानीमवशिष्यते, वेदार्थस्यैका प्रक्रिया, यस्या व्यावहारिकीति नाम। तस्या अपि वेदार्थे प्रामाण्यं स्वीक्रियते वेदज्ञैः। भगवता मनुना सेनापत्यं च राज्यं चेत्येवमादिभिः पूर्वोपस्थापितैः श्लोकै राजनीतिप्रवर्तनं वर्णाश्रमधर्माणां भूतभव्यभविष्योप-

---

१. अश्मानो लोहमुत्थितम्। महा० उद्योगपर्व। रसजं क्षेत्रजं चैव लोहसंकरजं तथा। त्रिविधं जायते हेम चतुर्थं नोपलभ्यते। रसार्णव तन्त्र ७।६६॥

२. मीमांसाशाबरभाष्य ( १।१।१८ ) उद्धृता। अयमेवार्थः 'रुक्ममुपधाति' ( मै० सं० ३।२।६ ) इत्यस्याः श्रुतेः।

३. दैवते हि याज्ञमन्तर्भूतमेव तदर्थत्वात्, अतो न पृथगुच्यते। दुर्गाचार्यः, निरुक्तटीकायां १।२०॥

योगिनां विधानानां प्रकल्पनं च वेदेभ्य एव संभवतीत्युक्तम् । न साक्षात् तादृशार्थपराः केचन मन्त्रा वेदेषूपलभ्यन्ते । एतादृशां कर्मणां विधानं वेदानां व्यावहारिकार्थमनुसृत्यैव संभवति । स च व्यावहारिकार्थः क्वचित् साक्षात् प्रयुक्तया उपमया क्वचिल्लुप्तोपमया क्वचिदन्यैरलंकारैर्द्योत्यते । तद्यथा—

जायेव पत्य उशती सुवासाः ( ऋ० १०।७१।४ ) इति ।

विधवेव देवरम् ( ऋ० १०।४०।२ ) इति च ।

अत्र प्रथमया जायया ऋतुकालेषु सुवासांसि धार्याणीति द्योत्यते । अपरया पत्यौ मृते विधवाया देवरेण नियोगो विवाहो वा संभवतीति प्रदर्श्यते ।

ऋग्वेदस्य प्रथममण्डलस्थयोरुषःसूक्तयोर्वाचकलुप्तालंकारेण उषर्वत् स्त्रियः कैः कैः शुभैर्गुणैर्युक्ताः स्युरिति वर्ण्यते । स्वामिदयानन्दकृतग्भाष्यादत्र किञ्चिदुदाह्रियते—

उषर्वद्धितसम्पादिके । ऋग्भाष्ये १।४८।१२॥
प्रभातवद् बहुगुणयुक्ते । ऋग्भाष्ये १।४८।११ ॥
उषर्वत्कल्याणनिमित्ते । ऋग्भाष्ये १।४९।१ ॥
उषर्वत् पुरुषार्थनिमित्ते । ऋग्भाष्ये १।४९।१ ॥

एतादृश एवाभिप्रायः पारभाषिकेन 'दर्शन' शब्देन निर्दिश्यते । तथाहि शाबरभाष्ये ( १।३।२ )—

( क ) गुरुरनुगन्तव्य इत्यस्मिन् विषये— तथा च दर्शयति 'तस्माच्छ्रेयाँस पूर्वं यन्तं पापीयान् पश्चादन्वेति' ( मै० सं० ३।१३ ) इति ।

( ख ) प्रपा प्रवर्तयितव्या, तडागं च खनितव्यम् इत्यस्मिन् विषये—तथा च दर्शनं 'धन्वन्निव प्रपा असि' ( तै० सं० २।५।१२ ) इति । तथा 'स्थलयोदकं परिगृह्णन्ति' ( तै० सं० १।६।११ ) इति च ।

( ग ) शिखाकर्म कर्तव्यम् इत्यस्मिन् विषये —दर्शनं च 'यत्र बाणा संपतन्ति कुमारा विशिखा इव' ( ऋ० ६।७५।१७ ) इति ।

अत्रोदाहृतानां सर्ववचनानां वास्तविकोऽर्थस्तु तत्तत्प्रकरणानुसारं भिन्न एव । परन्तु तैरेव लौकिककर्मणामपि विधानं शबरस्वामिना प्रदर्शितम् ।

एवमन्यत्रापि विविधैरलंकारैर्वेदानां व्यावहारिकोऽर्थः कर्तुं शक्यते ।

वेदानां याज्ञिकाधिदैविकाध्यात्मिकास्त्वर्थाः परं सूक्ष्माः, न तत्र सर्वेषां बुद्धेः प्रवेशस्य संभवः । परन्तु वेदानां व्यावहारिकेण अर्थेन साधारणजना अपि वैदिकशिक्षानुकूलं स्वजीवनं श्रेष्ठं सुखिनं च सम्पादयितुं समर्था इति विज्ञाय स्वामिदयानन्देन प्राचीनैर्मन्वादिमहर्षिभिरादृतं पन्थानमाश्रित्य मन्त्राणां व्यावहारिकोऽर्थः प्राधान्येन प्रदर्शितः । तदुक्तं स्वीयग्वेदादिभाष्यभूमिकायां प्रतिज्ञाविषये—

अथाऽत्र यस्य यस्य मन्त्रस्य पारमार्थिकव्यावहारिकयोर्द्वयोरर्थयोः श्लेषालंकारादिना सप्रमाणः संभवोऽस्ति तस्य द्वौ द्वावर्थौ विधास्येते । ⋯⋯ यत्र खलु व्यावहारिकोऽर्थो भवति ⋯⋯ । ऋभाभू० पृष्ठ ३६२ ।

याज्ञिकाधिदैविकाध्यात्मिका अर्थास्तत्र तत्र प्रचीनैर्महर्षिवर्यैः स्वस्वग्रन्थेषु प्रदर्शिताः, अतस्तादृशा अर्था न स्वामिदयानन्देन साक्षात् व्याख्याताः । एतदपि तत्रैवोक्तम्—

परन्त्वेतैर्वेदमन्त्रैः कर्मकाण्डविनियोजितैर्यत्रयत्राऽग्निहोत्राद्यश्वमेधान्ते यद्यत् कर्तव्यं तत्तदत्र विस्तरशो न वर्णयिष्यते । कुतः ? कर्मकाण्डानुष्ठानस्यैतरेयशतपथब्राह्मणपूर्वमीमांसाश्रौतसूत्रादिषु यथार्थं विनियोजितत्वात् । पुनस्तत् कथनेनानृषिग्रन्थवत् पुनरुक्तपिष्टपेषणदोषापत्तेश्चेति ।

ऋभाभू० पृ० ३६२ ।

( आगामिन्यङ्केऽवशिष्टांशः )

# चरकसंहितायां कतिचिद्भ्रामकस्थलानि

( श्री ज्योतिर्मित्र आचार्यः स्नातकोत्तरमायुर्वेदीय संस्थानम् काशीहिन्दूविश्वविद्यालयः )

जनकवंशवृक्ष ( द्वितीयैतद्विषयिणी तालिका संलग्नाऽस्ति ) स्थावलोकनाद् ज्ञायते यत्प्रतिराजानो विभिन्ननामभिरभिधीयन्ते स्म । निभिनृपः स्वपुरोहितवशिष्ठशापाच्छरीरमुत्सृज्यारणिमन्थनप्रक्रिया द्वारा देवानुरोधात्पुनर्जनि लेभे । यदुक्तं रामायणे ( उ०५७।१९,२० ):—

अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः ।
मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् ॥
यस्माद्विदेहात् संभूती वैदेहस्तु ततः स्मृतः ।
एवं विदेहराजश्च जनकः पूर्वकोऽभवत् ॥

श्रीमद्भागवतं ( ९।१३।२७ ) कथनमिदमेव द्रढ़यतिः—

एते वै मैथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥

चक्रपाणिदत्तेन ( चरक–चि०२६।१३० इत्यस्य व्याख्याने ) विदेहकरालयोर्मतोपन्यासः सम्प्रत्यप्राप्तग्रन्थादुद्धृतः । नूनमेव विदेहशब्दः केनचिन्नाम्ना सह भवेदित्थमेव करालेनापि सह वैदेहो जनको वा हतिविशेषणेनभवितव्यमेव कौटिल्ये करालवैदेह इत्यभिधानात् ।

अस्या निबन्धस्त्रजः प्रथमप्रयासं कौरकद्वयं स्फुटीकर्त्तुं विद्वच्चणा मनीषिणोऽभ्यथ्यन्ते । आगामिन्यङ्केऽपि स्थलान्येतादृशान्यपराण्यपि विपश्चिदपश्चिमानां पुरस्तात्प्रस्तोष्यामि ।

( सावशेषः )

## कृतज्ञताप्रकाशः

हिन्दुविश्वविद्यालयस्थस्नातकोत्तरायुर्वेदीयसंस्थानस्यास्मन्मौलिकसिद्धान्तविभागस्याध्यक्षैराचार्यप्रवरैः श्री पं० दामोदरशर्मगौड़महोदयैर्नितरामनुगृहीतोऽस्मि निदेशावाप्तये निबन्धममुं प्राकाश्यमानेतुमिति ।

## सन्दर्भाः

१– करालः, चक्रपाणिना चरकचि०२६।१३० इत्यस्य व्याख्यान उद्धृतः ।
२– काश्यपसंहिता, १९५३, चौखम्बा संस्करणम्, वाराणसी ।
३– कौटिलीयम् अर्थशास्त्रम् १९६२, चौखम्बा संस्करणम्, वाराणसी ।
४– चरकसंहिता, यादवाचार्यसम्पादिता, १९४१, निर्णयसागरसंस्करणम्, बम्बई ।
५– बृहदारण्यकोपनिषत्, १९-४, मोतीलाल बनारसीदास, दिल्ली ।
६– भलसंहिता, गिरिजादयालुसम्पादिता, १९५९, चौखम्बा संस्करणम् ।
७– वाल्मीकिरामायणम् सम्बत् २०१३, पण्डितपुस्तकालयः काशी ।
८– विदेहः, चक्रपाणिना चरक०चि०२६।१३० इत्यस्यव्याख्यान उद्धृतः ।
९– शतपथब्राह्मणः (माध्यन्दिनी शाखा), सं०१९५९, वैदिकयन्त्रालयः, अजमेर ।
१०–श्रीमद्भगवद्गीता, १९६४, मोतीलाल बनारसीदास, दिल्ली ।
११–श्रीमद्भागवतम्, सं०२०१८, गीताप्रेस, गोरखपुर ।
१२–सुश्रुतसंहिता, सं०२०१३, मोतीलाल बनारसीदास, दिल्ली ।

ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]

श्रावण मासः २०२२ विक्रमी, जुलाई-अगस्त सन् १९६५ ई०

मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री ४–५ पादनिचृत् ( ५ ह्रसीयसी वा ) गायत्री

## श्रुति-सुधा

इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा ।
अस्मभ्यं शर्म यच्छतम् ॥ ऋ० १।१७।८

( इन्द्रावरुण ) हे इन्द्र और वरुण ( सिषासन्तीषु ) शक्ति सेवन की इच्छा वाले अस्मभ्यं ) हमारे ( धीषु ) बुद्धि केन्द्रों में ( वां ) तुम दोनों ( नू नु ) अवश्य ही था अत्यन्त शीघ्र ( शर्म ) सुख व आश्रय ( आयच्छतम् ) प्रदान करो ।

अस्मभ्यं=अस्माकं विभक्ति व्यत्ययः ।

"धी" बुद्धि को कहते हैं । बहुवचन में यह ज्ञान के विभिन्न केन्द्रों का वाचक होता है जास समय मनुष्य अन्तर्मुखी अवस्था को प्राप्त होकर मस्तिष्क में अपने को केन्द्रित करता है तो इन्द्र और वरुण की कृपा से ज्ञान के विभिन्न केन्द्र ( धी ) नयी २ ज्ञानोप-लब्धि की कामना करते हैं । इस का अनुमान हम इस से कर सकते हैं कि वह कभी चक्षु-शक्ति की वृद्धि में प्रयत्न करता है तो कभी श्रोत्र-शक्ति व कभी प्राण-शक्ति आदि की वृद्धि का प्रयास करता है । यहां सिषासन्ती का यही भाव है ।

प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे ।
यामृधाथे सधस्तुतिम् ॥ ऋ० १।१७।९

हे इन्द्रावरुणौ ( वां ) तुम दोनों को मेरी ( सुष्टुतिः ) उत्तम स्तुति (प्र अश्नोतु) उत्कृष्ट रूप से प्राप्त हो । ( यां ) जिस की वृद्धि के लिये मैं तुम दोनों को ( हुवे ) आह्वान करता हूँ । ( यां ) जिस ( सधस्तुतिं ) बुद्धि केन्द्रों की मिलकर की गई सहस्तुति को तुम ( ऋधाथे ) बढ़ाते हो ।

यहां 'सधस्तुति' सहस्तुति का वाचक है। यह सहस्तुति अर्थात् मिलकर कइयों की स्तुति को बता रहा है । मिलकर स्तुति करने वाले बुद्धि के विभिन्न केन्द्र हैं । ये सब केन्द्र मिलकर इन्द्रावरुण की स्तुति करते हैं जिस से सभी ज्ञानकेन्द्रों में प्रकाश पैदा होता है ।

# राजस्थान-संस्कृतसाहित्यसम्मेलनस्य द्वादशाधिवेशने

( वेदपरिषदोऽध्यक्षस्य श्री युधिष्ठिर–मीमांसकस्य अभिभाषणम् )

एवं वेदार्थविषये किञ्चिदुक्त्वा वेदेषु प्रतिपादितस्य अतीन्द्रियस्यातिसूक्ष्मस्य सृष्टिविज्ञानस्य प्रतिपादकाः केचन मन्त्रा उद्ध्रियन्ते––

महदण्डस्य=विराट् पुरुषस्योत्पतिः––परमपुरुषस्य सान्निध्यादीक्षणाद्वा प्रकृतिरुत्तरोत्तरं विपरिमाणा भूतोत्पत्त्यनन्तरम् अण्डभावं१ प्राप्ता। मन्त्रेषु अयमण्ड एव गर्भशब्देन व्यपदिश्यते। अस्याण्डस्योत्पत्तिविषयका बहवो मन्त्रा वेदेषु समुपलभ्यन्ते। परन्त्विह एक एव उदाह्रियते––

तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे।

अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वा भुवनानि तस्थुः॥ ऋ० १०।८२।६॥

अस्मिन् मन्त्रे स्मृतोऽजो आदिदेव-प्रजापति-हिरण्यगर्भादिपदैः स्मृतो महदण्डरूपो महान् गर्भः। द्रष्टव्यमत्र वायुपुराणस्य पञ्चमाध्यायस्य चत्वारिंशत्तमः श्लोकः।

अस्याण्डस्योत्पत्तिर् अप्सु अग्निप्रवेशेन भवति। तथा च मन्त्रवर्णो भवति––

अग्निं या गर्भं दधिरे विश्वरूपास्ता न आपः शं स्योना भवन्तु। तै० सं० ५।६।१॥

---

१. समस्तस्य ब्रह्माण्डस्योत्पत्या एतादृशाः संख्यातीता अण्डाः समुत्पद्यन्ते। तदुक्तं विष्णुपुराणे—

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च।,
ईदृशानां तथा तत्र कोटिकोटिशतानि च॥
वि० पु० २।७।२७॥

वायुपुराणेऽपि—अण्डानामीदृशानां तु कोट्यो ज्ञेयाः; सहस्रशः।१५१।४६॥

एतद्विषये वायुपुराणस्याधोलिखितः श्लोको द्रष्टुमर्हः––

पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महदादयो विशेषान्ता अण्डमुत्पादयन्ति वै।
४।७४॥

यदा तस्मिन्नण्डे पृथिव्यादयो लोकाः पूर्णतामापद्यन्ते तदा सोऽन्तरूष्मणा पच्यमानः स्वर्णनिभः संजायते। तदुक्तं मनुना––

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। १।९॥

तादृशावस्थापन्नः सोऽण्डरूपो गर्भो हिरण्याण्ड-शब्देन–हिरण्यगर्भशब्देन वा व्यवह्रियते। अस्यैव वर्णनं निम्नमन्त्र उपलभ्यते—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।

स दाधार पृथिवीमुत द्यां कस्मै देवाय हविषा विधेम॥ ऋ० १०।१२१।१॥

द्यावापृथिव्यादीनां तस्मिन्नेवाण्डे निर्माणात् स एव द्यावापृथिव्यौ दधार।

पूर्णतामापन्नोऽण्डः कालान्तरे यदाऽभिद्यत, तस्मिन् काले द्यावापृथिव्यौ अत्यन्तं समीपवर्तिनावास्ताम्। तथा च मन्त्रवर्णो भवति––

जामी सयोनी मिथुना समोकसा इति।
ऋ० १।१५९।४॥

अस्मिन् मन्त्रे द्यावापृथिव्योः 'जामी' विशेषणेन सहोत्पतिरुभयोर्द्योत्यते। 'सयोनी' पदेन महदण्डरूपैकयोनित्वम्, 'मिथुना' पदेन परस्परं सहभावः, 'समोकसा' पदेन समानं निवासस्थानं च बोध्यते।

अस्यैव 'समोकसा' पदस्य ब्राह्मणग्रन्थेष्वित्थं व्याख्यानमुपलभ्यते--

द्यावापृथिवी सहास्ताम् । तै० सं० ५।२।३।। तै० ब्रा० १।१।३ २।।

सह हैवेमावग्रे लोकावासतुः । शत० ७।१।२। २३ ।।

कालान्तरे समोकसौ द्यावापृथिव्यौ वियुतावभवताम् । सा वियुतिर्दूरता सूर्यस्य दिव्यारोहणेन सम्पन्ना । तदेतेन मन्त्रवर्णेन सूच्यते---

अग्न आयाहि वीतये इति । साम पू० १।१।१।

व्याख्याता चेत्थमियमृक् शतपथे--

अग्न आयाहि वीतये इति । तद्वेति भवति वीतय इति समन्तकमिव ह वा इमे अग्रे लोका आसुरिति उन्मृश्या हैव द्यौरास इति ।

अस्मिन् मन्त्रे द्यावापृथिव्योर्वीतिभावोऽग्निकारणेनाभवदिति प्रतिपाद्यते ।

सहभूतयोर्द्यावापृथिव्योर्वीतिभावे 'इमौ लौकौ सह सन्तौ व्यैताम्' इति ब्राह्मणवादोऽपि भवति ।

सूर्यस्य दिव्यारोहणमनेकेषु मन्त्रेषु श्रूयते । तद्यथा--

इन्द्रो दीर्घाय चक्षसे आ सूर्यं रोहयद्दिवि । ऋ० १।७।३।।

द्यावापृथिव्योर्वीतिभावेऽन्तरिक्षं वरीयोऽभवत् । तथा च मन्त्रवर्णो भवति--

यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र । येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः इति । ऋ० ३।२२।२।।

द्यावापृथिव्योर्वियुत्याऽन्तरिक्षप्रादुर्भावो ब्राह्मणग्रन्थेष्वपि श्रूयते । तद्यथा--

सह हैवेमावग्रे लोकावासतुः । तयोर्वियतयोरन्तरेणाकाश आसीत् तदन्तरिक्षमभवत् । श० ७। १। २। २३।।

अग्निकर्मणा द्यावापृथिव्यौ वियुतौ, तयोर्वियुत्यैवान्तरिक्षं वरीयोऽजायत । अत एव मन्त्रे येना ( अग्निना ) न्तरिक्षमुर्वाततन्थ इत्युक्तम् ।

द्यावापृथिव्योर्वियुतिभावे, सूर्यस्य दिव्यारोहणे, अन्तरिक्षस्य वरीयत्वे चान्येऽपि देवा सहायका अभूवन् । अतो वेदेषु अन्येषामपि देवानां इदं कर्मत्रयं श्रूयते ।

मरुतां मरीचयः--आपृथिवीत आदिवं मरुतां विषयः । ते चैकोनपञ्चाशत्संख्यकाः । ते च सप्तपरिवहेषु सप्तसप्तत्वेन विभक्ताः । अत एवोक्तं शतपथे--सप्त सप्त हि मारुता गणाः (६।३।१। २५) इति । तेष्वेको गणो[१] मरीचिनामा । तेषां मरीचिनाम्नां मरुतां मरीचयो रश्मयोऽपि भवन्ति । अत एव वेदेष्वनेकत्र मरुतां रुक्मवक्षसः इति विशेषणमुपलभ्यते । तेषां रश्मयः सूर्यरश्मिभिरुपमीयन्ते विरोकिणः सूर्यस्येव रश्मयः ( ऋ० ५।५५।३ ) इति । उत्तरमन्त्रे सूर्यस्येव मरुतामपि चक्षणं दर्शनं दिदृक्षेण्यत्वेन श्रूयते---आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् (ऋ० ५।५५।४) इति । यजुषि वायुरसि तिग्मतेजाः (१।२४) इति पठ्यते । शतपथे चास्य मन्त्रस्य व्याख्याने एतद्वैतेजिष्ठं तेजो यदयं पवते ( १।२।४।७ ) इति श्रूयते । एतदेव सर्वमभिसमीक्ष्य गीतायां स्मर्यते--मरीचिर्मरुतामस्मीति ( १०।२१ ) ।

सहस्ररश्मिः सूर्यः—सूर्ये ये रश्मयः सन्ति ते वैदिकविज्ञानानुसारं सहस्रप्रकाराः सन्ति । सूर्यरश्मीनां सहस्रविधत्वम् ऋग्वेदे ह्येवं श्रूयते—

---

१. सम्भवतः षष्ठपरिवहस्था मरुतो मरीचिनामानः । तत्सान्निध्यात् । पञ्चमसप्तमपरिवहस्थानां मरुतामपि 'रुक्मवक्षसः' विशेषणं क्वचिद् वेदेषूपलभ्यते ।

युक्ता ह्यस्य हरयश्शता दश ( ६ ४७ १८) इति। तथा च ब्राह्मणवादो भवति—सहस्रं हैत आदित्यस्य रश्मयः ( जै० उप० ब्रा० १।४४।५ ) इति । महाभारतेऽप्युक्तम्—यस्य रश्मिसहस्रेषु ( शान्ति० ३७२।३ ) इति । पुराणेषु एषां सहस्ररश्मीनां विस्तरेण वर्णनमुपलभ्यते ( द्र० वायु ५३।१६-२३; मत्स्य १२८।१८-२२ ) ।

एत एव सहस्रविधा रश्मयः स्थूलतया सप्तधा विभज्यन्ते । अत एव सूर्यः सप्तरश्मिः सप्ताश्व आदिनामभिरपि व्यवह्रियते ।

आदित्यमण्डले कार्ष्ण्यम्— आदित्यमण्डलस्य मध्यभागे कृष्णाः कलङ्काः सन्ति । अत एव वेदेषु आदित्यः कृष्णपदेन बहुधा स्मर्यते । यथा—कृष्णो नोनाव वृषभो यदीदन् ( ऋ० १।७९।२ ) इति । अत्र कृष्णपदेन आदित्यरूपोऽग्निः स्मर्यते, आ कृष्ण ई जुहुराणो जिघर्ति ( ऋ० ४।१७।१४ ) इत्यादिषु आदित्यरूप इन्द्रः । अत एव जैमिनिब्राह्मणे श्रूयते—असावेव संवत्सरो योऽसौ तपति । तस्य यद् भाति तत् संवत्, यन्मध्ये कृष्णं मण्डलं तत्सर इत्यधिदैवतम् इति ।

इमे कृष्णाः कलङ्का सदा परिसर्पन्ति, नैकत्र तिष्ठन्ति । अत एव इमे 'सर' नाम्ना स्मर्यन्ते । एते एव चादित्यमण्डलस्था कृष्णाः कलङ्काः सर्पणादेव सर्पा इत्युच्यन्ते । आदित्यमण्डले सर्पाणां सद्भावः ये अमी रोचने दिव..... तेभ्यः सर्पेभ्यो नमः ( १३।३ ) इति याजुषमन्त्रे श्रूयते । अत एव ब्राह्मणवादोऽपि भवति-सर्प्या वा आदित्याः[१] ( ता० ब्रा० २५।१५।४ )इति । सर्प्याः सर्पवन्तः ।

पाश्चात्यैर्वैज्ञानिकैरादित्यमण्डलस्थाः कृष्णाः कलङ्काः, तेषामेकत्रानवस्थानं चाधुनैव विज्ञातम् ।

१. क्वचित् 'सर्पा वा आदित्याः' इत्येव पाठः ।

वैदिका विद्वांसस्तु वेदद्वारा सिद्धान्तमिमम् आदिकालादेव विदन्ति । सर्वविधानामतीन्द्रियविज्ञानानां बोधनादेव वेदानां वेदत्वम् । तदुक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विन्दन्ति वेदेन तस्माद् वेदस्य वेदता ॥२

यस्तूपायो न बुध्यते आधिदैविकस्याध्यात्मिकस्य चातीन्द्रियविज्ञानस्येति शेषः ।

एवं वेदज्ञानस्य महत्त्वं वैभवं वा प्रदर्श्य तेषां प्रसारोपायाः केचन प्रस्तूयन्ते--

वेदानां पुनःप्रसारायोपायचिन्तनात् पूर्वमेतद् विज्ञातव्यं यत् किमत्र कारणं यस्मात् परमविद्यानाम् आकरभूतानाम् अपि वेदानां प्रसार उत्तरोत्तरं न्यूनतां भजत इति । नहि रोगनिदानमविज्ञाय चिकित्सा प्रवर्तत इति न्यायानुसारं वेदप्रसारह्रासकारणविज्ञाने सत्येव तत्प्रसारोपायानां चिन्ता सम्भवति । तस्मात् प्रथमं वेदप्रसारह्रासकारणान्युपस्थाप्यन्ते । तत्र कानिचित् कारणानि भारतीयपरम्पराप्रसूतानि सन्ति, कानिचिच्च पाश्चात्यविद्वद्भिरुत्पादितानि । तत्र तावत् भारतीयपरम्पराप्रसूतानि--

१--वेदाध्ययनं केवलमदृष्टार्थम्, न किञ्चिद् दृष्टफलार्थमित्येकम् ।

एतन्मतस्य प्रसारान्मन्त्रा अनर्थका३ इत्येतन्मतं प्रादुरभवत् । तेन वेदानां मानवजीवनेन सह यः साक्षात् संबन्ध आसीत् स प्रणष्टः, तन्नाशाद् वेदाध्ययनमनर्थकं मन्यमानास्तं परिहापितन्तः ।

२. सायणाचार्यकृतस्य तैत्तिरीयसंहिताभाष्यस्योपोद्घात उद्धृतोऽयं श्लोकः ।

३. यदि मन्त्रार्थप्रत्यायनायानर्थकं भवतीति कौत्सः, अनर्थका हि मन्त्रा इति निरुक्ते १।१५। निरुक्ते ( १।१५ ) पूर्वमीमांसायां ( १।२।३१। ३९ ) चैतन्मतं वहुभिर्हेतुभिरुपपादितम् ।

२—वेदाः केवलं यज्ञार्थं प्रवृत्ताः, नातोऽन्यत् किमपि तेषां प्रयोजनमिति द्वितीयम् ।

एतन्मतस्य प्रादुर्भावाद् वेदानाम् आधिदैविकाध्यात्मिकयोर्विज्ञानयोः साकं यः साक्षात् सम्बन्ध आसीत् स नाशमुपगतः । तन्नाशाद् वेदा निष्प्रयोजनत्वमापन्नाः । तेन 'प्रयोजनमननुदिश्य मन्दोऽपि न प्रवर्तते' इति न्यायात् वेदाध्ययनाद् ग्लायन्तो वेदाध्ययनम् अत्यजन् ।

३—यज्ञा अपि केवलम् अदृष्टार्था एव, न तेषामन्यत् किमपि लौकिकं फलमिति तृतीयम् ।

एतन्मतस्य प्रसाराद् यज्ञानां सृष्टिविज्ञानपरिज्ञापनरूपस्य मुख्यस्य प्रयोजनस्य परित्यागात् साम्प्रतिकास्तर्कप्रधानाः श्रद्धाविरहिता मानवास्ततो ग्लायन्तो यज्ञान् अत्याक्षुः । यज्ञकर्मणां लोपाद् ब्राह्मणवृत्तेर्नाशः, तन्नाशात्तेषां वेदाध्ययनप्रवृत्तिरपि संकोचं प्राप्ता ।

४—स्त्रीणां शूद्राणां च वेदश्रवणेऽपि नाधिकारः,१ कुतस्तदध्ययने धारणे चेति चतुर्थम् ।

स्त्रीणां वेदाध्ययनप्रतिषेधात् पत्न्यो वेदज्ञानविरहिता अभूवन् । तासां च वैदिकज्ञानसंस्काराहित्यात् ता अज्ञानावृतचेतसोऽजायन्त । तेन तासामपत्यान्यपि वैदिकसंस्कारविरहितानि समभूवन् । तेन कुलान्यकुलतां गतानि । शूद्राणां वेदश्रवणाधिकारस्याप्यपहरणाद् वैदिकसंस्काररराहित्यात् ते आर्याः सन्तोऽप्यनार्याः संवृत्ताः । एवं मनुष्यसंख्यायाः स्त्रीरूपोऽर्धो भागः, शूद्ररूपश्चान्यस्तदर्धो भागोऽर्थाद् मानवसंख्यायाः ३ । ४ पादत्रयात्मको भागो वैदिकसंस्काररराहित्याद् अनार्यत्वमभजत् । तदुक्तं भगवता मनुना——

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ।।
( ३।६३ ) इति ।

शनकैः क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ।।
( १०।४३ ) इति च ।

यदा क्षत्रियजातयोऽपि वेदानध्ययनेन वैदिकक्रियालोपैश्च वृषलत्वं गतास्तर्हि स्त्रीणां तु का कथा यत्राज्ञानान्धस एव साम्राज्यं विद्यते ।

५—पाश्चात्यशिक्षायाः प्रभावेण तपोज्ञानोपेतानां ब्राह्मणानाम् उपेक्षाऽनादरभावश्चेति पञ्चमम् ।

जगति किलैष नियमः 'समाजे यादृशस्य पूजा भवति सर्वो जनः तादृशमात्मानं भावयितुं प्रवर्तते' इति । अत एव पाश्चात्यशिक्षाप्रभावेण पाश्चात्यभावभाषादीक्षितानां धनिनां चानार्याणामपि सम्मानभावनाया उदयाद् ब्राह्मणा अपि आङ्गलभाषाध्ययने येन केन च प्रकारेण धनोपार्जन एवात्मनः श्रेयः पश्यन्तः कुलपरम्परागतं वेदाध्ययनं पर्यत्याक्षुः ।

---

१. अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, वेदोच्चारणे जिह्वाच्छेदः, धारणे शरीरभेद इति ( वे० शां० भाष्ये १।३।३८ ) । स्त्रीशूद्रौ नाधीयाताम् इति च ।



# श्री परमानन्दपारिजातमञ्जरी प्रथमा

## ( काश्मिरीगीतस्य पद्यानुवादः )

श्री जगन्नाथरिवूशास्त्रीभट्टयार आलीकदल श्रीनगर २ काश्मीर

### भक्तियोगः

आशां त्वदीयां मनसि प्रधार्य
प्राप्तोऽस्मि तेऽहं प्रतिहारभूमिम् ।
दासं किमर्थं नयसे वृथा त्व-
मुदासभावं शरणागतं माम् ।
दावाग्निकल्पैस्त्रिविधैः प्रदीप्तैः
संसारतापैः रतिनीरहीनम् ।
दग्धं मदीयं जलजं हृदिस्थं
त्वया विना शर्म कथं लभेयम् ।।
अनेकजन्मार्जिततृष्णया च
समावृतोऽहं विषघूर्णितोऽस्मि ।।दासं०।।
श्रान्तं मनः स्वेन्द्रियवर्गयुक्तं
तथापि मे दीपितरागदीप्तिः
नोदेत्यभावेन विदग्धचेतः
सिञ्चामृतेनैव हि मामनाथम् ।।दासं०।।
क्रोशान्सहस्रान्समुतीर्य दासः
गतागतं शून्यकरः करोमि
यथा तथा द्वारि तवैव नूनं
साध्नोम्यनाथो भवतःस्वलाभम् ।।दासं०।।
स्मृत्या सदा वञ्चित एव दासः
सोऽहं च ते दृष्टिपथे गतोऽस्मि
दशा च ते मे श्रुतिगा त्वनाथो
वदामि किं राजकुले गतस्ते ।।दासं०।।
यच्छोभनं साधु सुकर्मकारय
प्राप्तं पुनर्जन्मशतं निवारय
अभ्यासयोगेन जगत्यनाथम–
प्यानन्दकन्दं वह मां प्रभो परम् । दासं०।।
जगन्नाथकृता सैषा परमानन्दमञ्जरी ।
प्रथमा पारिजातस्य विदुषां स्वस्यतुष्टये।।

---

## कश्चित् जिज्ञासुः

पाणिनीय अष्टाध्यायी के "गोत्रावयवात्" ( ७।१।७९ ) सूत्र का भाष्य करते हुये ऋषि पतञ्जलि ने लिखा है "अष्टाशीतिः सहस्राण्यूर्ध्वरेतसां ऋषीणां बभूवुस्तत्रागस्त्याष्टकैः ऋषिभिः प्रजनोऽभ्युपगतः । इस वाक्य का विद्वान् भिन्न २ अर्थ करते हैं, अतः निश्चय होना आवश्यक है ।

(१) क्या ये ऋषि आदि सृष्टि में हुये थे ।

(२) अथवा सृष्टि के आरम्भ से पतञ्जलिकाल तक के ऋषियों का वर्णन है ।

(३) अष्टाशीतिः सहस्राणि के अर्थ में भी मतभेद है ।

(४) ऋषियों की जहां तक यह संख्या पहुंची है, उसके उत्तरकाल में कितने और कौन कौन से ऋषि हुये हैं इत्यादि अन्य भी स्वोपज्ञ उत्थानपूर्वक प्रश्नों का भाष्य देखकर समाधान कीजिये देश के सभी विद्वानों से निवेदन कर रहा हूं ।

# काव्यस्यात्मा ध्वनिः

( लेखकः—श्री सुभाषचन्द्रो वेदालङ्कारः एम. ए., साहित्याचार्यः रिसर्चफैलो राजस्थान-विश्वविद्यालयः जयपुरम् )

परीक्षोपयोगी

साहित्यशास्त्रे प्रचलितेषु रस-ध्वनि-अलङ्कार-औचित्य-वक्रोक्तिसम्प्रदायेषु ध्वनिसम्प्रदायः सर्वानतिक्रम्याध्यास्ते । आचार्यप्रवरेणानन्दवर्धनेनास्य ध्वनेरुद्भावनं विधाय वस्तुत आनन्दवर्धनं कृत विदुषाम् । वामनो यथा रीतिं काव्यात्मत्वेनाङ्गीकरोति, रसवादिनो यथा रसं काव्यजीवितं ब्रुवते "वाग्वैदग्ध्यप्राधान्येऽपि रसएवात्र जीवितम्" आचार्यः कुन्तको यथा वक्रोक्ति काव्यात्मानं भणति क्षेमेन्द्रश्चौचित्यं तथैव आनन्दवर्धनो ध्वनिं काव्यात्मानं मन्यते । ध्वन्यालोकस्य मङ्गलाचरण एव ध्वनिसंकेतं कृत्वा प्रथमकारिकायां "काव्यस्यात्मा ध्वनिरितिबुधैर्यः समाम्नातपूर्वः.........इत्यादौ ध्वनिरेव काव्यस्यात्मा वरीवर्तीति न केवलं मामकीनं मतं किन्तु अपरेऽपि कोविदास्तथैवामन्यन्त इति स्पष्टं प्रतिपादयति ।

ध्वनिस्तावत् कथं काव्यात्मेति विचारात् पूर्वं ध्वनिशब्दस्यार्थे विचारसरणिः प्रसारणीया ।

चतुर्धा व्युत्पत्तिर्वर्तते ध्वनिपदार्थस्य

१. ध्वनतीति ध्वनिः २. ध्वन्यतेऽस्मिन्निति ध्वनिः ३ ध्वन्यते यः स ध्वनिः ४ ध्वन्यते अनेनेति ध्वनिः ।।

प्रथमा व्युत्पत्तिः शब्ददृष्टया वर्तते, शब्द एव च ध्वनिरस्तीति बोध्यते । किन्तु शब्दो नैव ध्वनिर्भवितुमर्हति यतः न खलु सः प्रतीयमानः साक्षात्रूपेण श्रवणगोचरत्वात् । ध्वनिश्चप्रतीयमान उक्त आचार्यैः । द्वितीया व्युत्पत्तिः काव्यं बोधयति तच्चापि न काव्यात्मत्वेनाङ्गीकर्तुं शक्यते यतस्तस्यैव आत्मान्वेष्टव्यो ननु, काव्यभेदेषु तावत् उत्तमं ध्वनिकाव्यमभिहितमेव विद्वतल्लजैः "इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैःकथितः"

तृतीया व्युत्पत्तिः व्यञ्जनाव्यापारस्य बोधिका खलु । नायं व्यापारोऽपि आत्मत्वेनाङ्गीकार्यः, स तु बोधकोऽस्ति ध्वनिश्च बोध्यः । अन्ततश्च "ध्वन्यते यः स ध्वनिः" इत्येव व्युत्पत्तिः काव्यात्मानं सूचयति इयञ्च व्यङ्ग्यार्थावबोधिका खलु । व्यंग्यार्थयुक्ता ध्वनिरेव काव्यस्यात्मेति सारोऽस्या व्युत्पत्तेर्विद्यते ।

अयं व्यङ्ग्यार्थः प्रतीयमानोऽप्युच्यते अलङ्कारादिभ्यश्च सर्वथा भिन्न एवायम् । अत एव ग्रन्थकारो लिखति—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।

यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु" ।।

अत्रेयं शङ्का समुत्पद्यते यत् ध्वनिकारेण प्रधानतः रसवस्त्वलङ्कारध्वनिरिति त्रयो भेदा विहिता ध्वनिपदार्थस्य; प्रतीयमानश्चार्थः त्रिष्वपि वर्तते किन्तर्हि त्रयोऽपि भेदाः काव्यात्मत्वेन स्वीकृताः समानरूपेण, कश्चिदेक एव वा । अत्र तावदेतदुत्तरं यत् ध्वनिकारः रसध्वनिमेव काव्यात्मानं मन्यते । "प्रतीयमानं पुनरन्यदेव......अनया कारिकया ध्वन्यलङ्कारादिभेदं प्रदर्श्य, पञ्चमकारिकायां स लिखति—

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा"
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।।

कारिकाया वृत्तौ "विविधवाच्यवाचकरचना प्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः। तथा चादिकवेर्वाल्मीकेः......क्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः" ।।

सुव्यक्तमनेन यत् काव्यस्य सारभूत अर्थः रस एवास्ति क्रौञ्चद्वन्द्वे एकस्य मृत्योः करुणरस एव निष्पन्नो भूत्वा सहृदयानाह्लादयति ।

अस्यैव पुष्टिः द्वितीयोद्योतस्यानेकाभिः कारिकाभिरपि क्रियते। प्रथमं तावत् ध्वनिभेदान् प्रदर्शयता ग्रन्थकारेण रसध्वनेरेव सर्वाधिकं महत्त्वं मत्वा तस्यैव वर्णनं सर्वतः पूर्वं कृतम्। तृतीयकारिकायाञ्च रसभावादिरेव काव्यात्मा निगदितः।

"रसभावतदाभासतत्प्रशान्त्यादिरक्रमः
ध्वनेरात्माऽङ्गिभावेन भासमानो व्यवस्थितः"।।

कारिकावृत्तौ च लिखति ग्रन्थकारः यत् "रसादिरर्थो हि सहैव वाच्येनावभासते। स चाङ्गित्वेनावभासमानो ध्वनेरात्मा" ततश्च ध्वनेरात्मभूते श्रृङ्गारे दोषा परित्याज्या इति वर्णयन्नाह ग्रन्थकृत्--

श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः
ध्वन्यात्मभूते श्रृङ्गारे ते हेया इत्युदाहृताः ।।

अनेनापि सिद्धयति यत् ध्वनेरात्मा रस एव ननु भवतु नाम स करुणरसः "शोकः श्लोकत्वमागतः" श्रृङ्गाररसो वा अन्यो वा कश्चित्।

किञ्च पञ्चदश्यां कारिकायां ध्वन्यात्मभूते श्रृङ्गारे यमकादिनिबन्धनं दूषितमुक्तम्--

"ध्वन्यात्मभूते श्रृङ्गारे यमकादिनिबन्धनम्
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः" ।।

पुनश्च सप्तदश्यां कारिकायां, आचार्यवर्यो लिखति यत् रूपकाद्यलङ्कारस्य यथार्थता तदैवास्ति यदा ध्वन्यात्मभूते श्रृङ्गारे अन्येषु रसेषु वा स अलङ्कारवर्गः सम्यक् विविच्य विनिवेश्येत--

"ध्वन्यात्मभूते श्रृङ्गारे समीक्ष्यविनिवेशितः
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ।।"

इदं विवेचनमपि रसध्वनिः काव्यात्मास्तीति ग्रन्थकर्तुरभीष्टमिति साधयति ।

रस एव काव्यात्मा वर्वर्तीति युक्तिभिरपि सिद्धयति। रसे च काव्यात्मनि सिद्धे, रसध्वनिः काव्यात्मेति स्वतः सिद्धं भविष्यति ।

१. अलङ्कारवादिनः अलङ्कारं सर्वोत्कृष्टतत्त्वं मत्वा तमेव सर्वस्वं मन्यन्ते। किन्तु अलङ्कारो न काव्यात्मा यतः यत्र रसादितात्पर्येण अलङ्कारयोजनं विधीयते तत्रैव चमत्काराधिक्यं भवति केवलमलङ्कारा एव नाह्लादयितुमर्हन्ति सहृदयहृदयानि, कामं वाच्यमात्रे कृतपरिश्रमेभ्यः ते आनन्दं प्रददतु; अतएव आनन्दवर्धनो लिलेख यदलङ्काराणामलङ्कारत्व तावदेवास्ति यावत्ते रसादितात्पर्येण स्थाप्यन्ते--

"रसभावादितात्पर्यमाश्रित्य विनिवेशनम्
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ।।

अन्यच्च ध्वन्यात्मभूते श्रृङ्गारे समीक्ष्य विनिवेशितः इत्यादावपि पुष्टिर्भवति यथा "अपसारय घनसारं कुरु हारं दूर एव किं कमलैः" इत्यादौ अलङ्कारचमत्कारो रसकारणादेवास्ते रसं स पोषयत्येव--अपरत्र च "स्वच्छन्दोऽच्छलदच्छकुच्छकुहरच्छातेतराम्बुच्छटा०---इत्यादौ शब्दस्यैव चमत्कारः रसाभावाच्च न सहृदयहृदयाह्लादो जायते ।

२. क्षेमेन्द्रस्य कथनमस्ति यत्
"औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्" अत्रविषये कोविदाः कथयन्ति यत्
"अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्"
अनेन प्रतीयते यत् औचित्यानौचित्ययोर्व्यवस्था रसाश्रितैव विद्यते अतः रसस्यैव-प्राधान्यम् रस एव काव्यात्मा खलु ।

३. दोषाणां दोषत्वं तदैवास्ति यदा ते रसनिष्पत्तौ बाधका भवन्ति--
"रसापकर्षका दोषाः--"
"मुख्यार्थहतिर्दोषः रसश्च मुख्यः"
एतत् विश्वनाथमम्मटप्रतिपादितं लक्षणद्वयमपि रसप्राधान्यमेव प्रदर्शयति दोषाणाञ्च गौणताभिव्यज्यते अत एव ते परित्याज्याः सन्ति--"ते हेया इत्युदाहृताः"

४. वामनमते=रीतिः काव्यात्मा वर्तते
"रीतिरात्मा काव्यस्य" तल्लक्षणश्च
"विशिष्टपदरचना रीतिः विशेषो गुणात्मा"
इत्यस्ति अर्थात् गुणालङ्कृता विशिष्टपदरचना एव रीतिरस्ति, गुणरहिता रीतिरपि महत्त्वशून्या, गुणाश्चैते रसस्यैव धर्मा ननु, "ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः" इति मम्मटवचनात् । विश्वनाथमतेऽपि रीतिः रसोपकर्त्री विद्यते–पदसंघटना रीतिः उपकर्त्री रसादीनाम्" ।। एतेन विवेचनेन रसस्यैव प्राधान्यं; आत्मत्वञ्च प्रतिपाद्यते । अत एव मम्मटादिभिर्लिखितं यत् यत्र गुणालङ्काराः रसपुष्टिं न कुर्वन्ति तत्र ते उक्तिवैचित्र्यमात्रं खलु यथा—
स्वच्छन्दोच्छलदच्छकुच्छकुहर० -- इत्यादौ यत्र रसोऽस्ति तत्रालङ्काराभावेऽपि चमत्कारो जायते यथा--"यः कौमारहरः स एव हि वरः" गुणास्तु रसस्य स्थायिनो धर्माः 'अचलस्थितयो गुणाः" अलङ्काराः रसं सर्वदैव न पोषयन्ति—उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् हारादिवदलङ्कारा तेऽनुप्रासोपमादयः ।।

५. कुन्तकस्य वक्रोक्तेः खण्डने दर्पणकारो ब्रूते यत् वक्रोक्तिस्तु अलङ्कारमात्रमेवास्ति कथं सा काव्यात्मा भवेत् किञ्च "वाक्यं रसात्मकं काव्यम्" प्रतिपाद्य; रस एव काव्यात्मत्वेन साधितः ।। अथ च अग्निपुराणस्य "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" नाट्यशास्त्रे च "नहि रसादृते कश्चिदर्थः प्रवर्तते" इति वचनाभ्यामपि रसः काव्यात्मेति सिद्ध्यति ।

६. काव्यसाफल्यं तदाह्लादजनकत्वे, कमनीयतायामेव च तिष्ठति, स चाह्लादः रसेनैवाधिकं प्राप्यते, अलङ्कारादिमात्रेणैव न, तस्मादेव आचार्यमम्मटः काव्यप्रयोजनेषु रसमेव सर्वोपरिस्थानं ददाति—
"सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्"
इत्थञ्चैतत् सम्यगवगम्यते यत् काव्यात्मा रस एवास्ति नालङ्कारो नापि रीतिः न चौचित्यं वक्रोक्तिर्वा ।। तदाश्रिता रसध्वनिश्चात्मा इति सिद्धम् ।

अथ चेदमाशङ्क्यते' यत् चेत् रसध्वनिः काव्यात्मास्ति तर्हि--काव्यस्यात्मा ध्वनिरिति नैव लेख्यं--काव्यस्यात्मा रसध्वनिरित्येव लेखनीयम्--सामान्येनैव कथं लिखितम् ।

अत्रोच्यते प्राधान्येन तु रसध्वनिरेव काव्या-

त्मास्ति किन्तु गौणरूपेण, अलङ्कारध्वनिः वस्तु-ध्वनिश्चापि भवितुमर्हतः ।

यत्र हि रसापेक्षया, अलङ्कारः चमत्कारातिशयजनको भवेत् यथा--इतराङ्गापराङ्गगुणीभूतव्यंग्ये तत्र खलु अलंकारध्वनेरधिकं चारुत्वं भवति रसोऽन्यस्याङ्गं संजायते यथा--

"अयं करः रसनोत्कर्षी पीनस्तनविमर्दनः--इत्यादौ, अत्र खलु अलंकारध्वनिः काव्यात्मा वक्तुं शक्यते । अपरत्र च "जनस्थाने भ्रान्तं--इत्यादि पद्ये मयाप्तं रामत्वं—इत्यादौ वस्तु एव व्यंग्यमस्ति रसापेक्षया वस्तु एव चमत्कारजनकं विद्यते अथवा "भ्रम धार्मिकविस्रब्धः--पद्येऽपि वस्तुध्वनौ चमत्कारः एतादृशेषु स्थानेषु वस्तुध्वनिः काव्यात्मा भविष्यति ।

तात्पर्यमिदमस्ति यत् यद्यपि प्राधान्येन रसध्वनिरेव काव्यात्मा विद्यते किन्तु यत्रापि अलंकारे वस्तुनि वाधिकं चमत्कारो भवेत् तत्र तदपि काव्यात्मत्वेनाङ्गीकर्तुं शक्यते इति विकल्पयैव लिखितं आनन्दवर्धनेन--



# भवाटवी !

( ले० विद्याभूषणः श्रीगणेशरामशर्मा, झालावाडः ( राज० )

क्वाहं भवाटवीपथे स्वलक्ष्यतोऽस्खलम् !
हा हन्त ! हन्त !! मन्दधीर्विमार्गतोऽचलम् !!! १॥
घोरा घनान्धकारघटाटोपभीषणा;
सैषा कुहू निशा, दिशां न बोधमाश्रयम् ! २॥
उद्घातिनी धरा विसर्पिणी सकण्टका;
भूयो भ्रमामि सर्वतो न वेद्मि सम्बलम् ! ३॥
गर्तेषु गह्वरेषु कन्दरेषु भूरिशो—
भ्राम्यन् भयार्दितोऽस्मि मूर्च्छितोऽस्मि केवलम् ! ४॥
झंझानिलाहतं रजोदृशौ विहन्ति मे;
क्षीणापि न प्रकाशते स्वचेतना, बलम् ! ५॥
शुष्यद्गलस्तृषा क्षुधा विपन्नचेतनो--
जातोऽस्मि विक्लवो भयादरक्षितोऽस्म्यलम् ! ६॥
वन्या गजाः सरिसृपाः सिंहाश्च हिंस्रकाः;
गर्जन्ति भीषयन्ति सर्वतो दिगञ्चलम् !! ७॥
सोऽहं पतन् पदे पदे धैर्यच्युतोऽस्मि भोः !
पाहि प्रभो ! स्खलन्तमात्मनो न मे बलम् !! ८॥
एता विमूर्च्छयन्ति मामसह्या वेदनाः;
क्वाहं विभो ! व्रजामि किञ्च मे मनोबलम् ! ९॥
सद्यो हरन्ति कान्दिशीकमुत्पथानुगम्;
चौराः खलास्तुदन्ति जीवनं ममाकुलम् ! १०॥
उद्भ्रान्तसर्ववृत्तिकं दीनं दयानिधे !
निस्तारमार्गलम्बिनं विधेहि मां खलम् ॥११

# प्राच्यविद्याविशारदो विनयतोषभट्टाचार्यः

( मूललेखकः श्रीशङ्करदेवविद्यालंकारमहाभागः )
अनुवादकः विद्याभूषणः श्रीगणेशरामशर्मा, झालावाडः

भारतीयस्येतिहासस्य, पुरातत्त्वस्य, मूर्तिकलायास्तथा तन्त्रशास्त्रादीनां भारतीयविद्यानां प्रकृष्टकोटिको विद्वान् डाक्तरवर्यो विनयतोषभट्टाचार्यमहाभागो गतवर्षे २२ जून १९६४ दिनाङ्के सहसा दिवङ्गतो बभूव । तस्य विलयात् प्राच्य-विद्या-विशारदेष्वेकस्य विशिष्टस्य मनीषिणः स्थानं रिक्तं बभूव ।

श्री विनयतोषमहाभागस्य जन्म बङ्गप्रदेशस्य संस्कृतविदुषामेकस्मिन् कुलीने परिवारे, बर्दवानमण्डलान्तर्गते देम्प्रासीननामके ग्रामे ६ जनवरी सन् १८९० खृष्टदिनाङ्के बभूव । अतः संस्कृतविद्याया उत्तराधिकारं स जन्मनैव प्राप । तस्य पिता महामहोपाध्यायो हरप्रसादशास्त्रिवर्यः संस्कृतसाहित्यस्य, भारतीयेतिहासस्य पुरातत्त्वस्य च लब्धप्रतिष्ठो मनीषिप्रवरोऽन्वेषकश्चासीत् ।

कालिकातायाः क्राइस्ट–चर्च-कालेज इत्याख्ये महाविद्यालये प्रोच्चशिक्षणं लब्ध्वा सोऽयं भट्टाचार्यमहोदयः सन् १९०९ खृष्टबर्षे एम. ए. इत्युपाधिं प्राप्तवान् । तदनन्तरं "भारतीयबौद्धमूर्तिकला" ( एलिमेण्ट्स ऑफ इण्डियन बुद्धिस्ट आइकोनोग्राफी ) इति विषयमधिकृत्य शोधपूर्णं महानिबन्धं विलिख्य ढाकाविश्वविद्यालयादसौ पी. एच. डी. पदवीं प्राप । भारतीयकलानां, पुरातत्त्वशास्त्रस्य, बौद्धवाङ्मयस्य तथा तन्त्रशास्त्रस्यानुसन्धान-क्षेत्रे भट्टाचार्यमहाभागस्य योगदानमतिमहत्त्वपूर्णमास्ते । बौद्धमूर्तिकलाविषयमधिकृत्य लिखितेनानेन पुस्तकेनासौ भट्टाचार्यमहाभागोऽन्ताराष्ट्रियां ख्यातिं लेभे ।

अथ सन् १९२४ खृष्टाब्देऽसौ भट्टाचार्यमहोदयो बड़ौदानगरस्य सुप्रसिद्धाया गायकवाड़प्राच्यविद्याग्रन्थमालायाः प्रधानसम्पादको नियुक्तः । बडौदानगरे संस्कृतस्य प्राचीनानाम् हस्तलिखितानां ग्रन्थानामेकः सुविशालो महान् पुस्तकालयोऽभूत् । भट्टाचार्योऽसौ तस्याप्यध्यक्ष आसीत् । डाक्तरवर्यस्यास्य विनयतोषभट्टाचार्यस्य प्रतिभाप्रकर्षेण, गवेषणा-प्रावीण्येन, कार्यकौशलेन च तत्कालीनो बडौदा-नरेशः सरसयाजीरावगायकवाड़महोदयोऽतीव प्रसन्नो बभूव, स च सन् १९२७ ईषवीये वर्षे ताविमां संस्थाद्वयीमेकीकृत्य "प्राच्यविद्यामन्दिरम्" ( Oriental institute ) इति नामिकामेकामभिनवां संस्थां समस्थापयत् । सोऽयं डाक्तरो भट्टाचार्यस्तस्या अध्यक्षपदेऽव्रियत ।

प्राच्यविद्यानां विषये भट्टाचार्यमहाभागस्यास्यानुसन्धानकार्याद्दीर्घदृष्टेस्तथाऽऽयोजनकौशलात् प्राच्यविद्यामन्दिरस्य तथा गायकवाड–प्राच्यविद्याग्रन्थमालायाश्च स्वदेशे, विदेशेषु च विशिष्टं स्थानं, संस्थानद्वयञ्च बभूव । अत्र हि डाक्तरवर्योऽसौ भट्टाचार्यः प्राचीनानामनेकेषां हस्तलिखितानां संस्कृतपुस्तकानामुद्धारं विधाय वैदुष्यपूर्णाः प्रस्तावना लिलेख । स्वकीये कार्यकालेऽसौ भट्टाचार्यमहाभागः प्राच्यग्रन्थमालायां प्रायेणाष्टाशीतिसंख्यानां पुस्तकानां सम्पादनं, प्रकाशनं च विदधे । सन् १९५२ वर्षेऽयं भट्टाचार्यः प्राच्यविद्यामन्दिरस्य कार्यादवकाशं जग्राह ।

अथ सन् १९३३ खृष्टाब्दे सप्तम्याः प्राच्यविद्यापरिषदोऽधिवेशनं डा. काशीप्रसादजायसवालस्य सभापतित्वे बडौदानगरे सम्पेदे । तस्य सम्मेलनस्य कौशलपूर्णाया आयोजनायाः साफल्यस्य च श्रेयोभागसौ भट्टाचार्यमहाभाग एव । तत्प्रयत्नैरेव प्रोक्तेऽवसरे संस्कृतस्य सुप्रसिद्धं

नाटकं "मृच्छकटिकम्" संस्कृतभाषामाध्यमेनाभिनीतमासीत्।

देशस्य विदेशानां चानेकाभिः शोधसंस्थाभिः समं डाक्तरवर्यस्य भट्टाचार्यमहोदयस्य विशिष्टः सम्बन्धोऽभूत्। तासु कासाञ्चन नामानीत्थं वर्तन्ते— भाण्डारकर-प्राच्य- विद्या - संशोधन-मन्दिरम्, पूना, बंगाल-एशियाटिक सोसाइटी, कलकत्ता, बिहार- उड़ीसा- रिसर्च- सोसाइटी, पटना, बंगीय-साहित्य-परिषद्, कलकत्ता, अन्तार्राष्ट्रिय- मनोविज्ञान- संशोधन- कांग्रेस, लन्दन, कर्न इंस्टिट्यूट, लाइडन ( हालेण्ड ) प्रभृतयः।

बडौदा-नरेशो भट्टाचार्यमहाभागस्य विद्यासेवाभिः प्रसन्नो भूत्वा तस्मै 'राज्यरत्नम्' तथा 'ज्ञानज्योतिः' पदव्यौ स्वर्णपदकं च प्रदाय सम्मानितवान्। डाक्तरवर्यो भट्टाचार्यः शोधसम्बन्धिषु विविधेषु सामयिकेषु पत्रेषु शतद्वयाधिकाञ्छोधपूर्णान्निबन्धाँल्लिलेख। अस्य भट्टाचार्यमहाभागस्य ख्यातिप्राप्ता रचनास्ता एता विद्यन्ते—

१- एलिमेण्ट्स ऑफ बुद्धिस्ट आइकोनोग्राफी ( भारतीया बौद्धमूर्तिकला )
२- इन्ट्रोडक्शन टू बुद्धिस्ट एसोटेरिज़्म ( बौद्धरहस्यवादस्य भूमिका )
३- साधनमाला-भागद्वयम्
४- गुह्यसमाजतन्त्रम्
५- वज्रयानसम्प्रदायविषयकौ द्वौ ग्रन्थौ
६- निष्पन्न योगावली
७- शक्तिसंगमतन्त्रम्

स खलु स्वकीयैरेवैकाकिभिः प्रयत्नैः "भारतीयमूर्तिविद्याकोशस्य" सम्पादनयोजनां कृतवानासीत् परं दैववशात्तदेतत्कार्यं पूर्णं न बभूव।

बडौदानगरस्य प्राच्यविद्यामन्दिरस्य तत्त्वावधान एव लोकशिक्षणदृशा गुर्जरभाषायां, महाराष्ट्र्यां तथा हिन्दीप्रभृति भाषासु श्रीसयाजीसाहित्यमालायाः, श्रीसयाजीबालज्ञानमालायास्तथा ग्रामविकासमालादीनां ग्रन्थमालानाम् प्रवर्तनमकार्षीत्। पुस्तकैरेभिर्मानवविद्यानां तथा विज्ञानस्य विविधशाखानां ज्ञानं लोकभोग्यया शैल्या सामान्ये जनसमाजे प्रसारितं क्रियते।

एकस्मात्तेजस्विनो विद्यासेविनोऽन्वेषकाच्चातिरिक्तं—डाक्तरवर्ये भट्टाचार्येऽस्मि मानवप्रेम्णो मानवसेवायाश्च महान् हि गुणो बभूव। स खलु कुशलो हि होमियोपैथिकश्चिकित्सकोऽभूत्। किंविधमपि शुल्कग्रहणं विनाप्यसौ वर्षान् यावत् बडौदानगरे तत्पश्चात् स्वकीये जन्मस्थाने नैहाटीत्याख्ये रोगिणामुपचारमौषधिवितरणं च कुर्वाणस्तस्थौ। तस्योपचारेणानेके धनिनो जनाः स्वास्थ्यलाभं प्रापुः। तेषां धनिनां स्वेच्छाकृतेन धनदानेनायं भट्टाचार्यमहाभागोऽनेकान् धर्मार्थ-होमियोपैथिकौषधालयान् व्यवस्थापयामास।

प्रकृतेर्मानवस्य च गुप्तशक्तीनामन्वेषणं प्रति तस्य विशिष्टाभिरुचिरासीत्। भारतीयस्य अगम्यवादस्य तन्त्रशास्त्राणां च तस्य सम्यग्ज्ञानमभूत्। अनेन स रत्नैर्लोहचुम्बकेन च मनुष्याणां विविधानां रोगाणामुपचारकरणार्थमाकृष्टो बभूव। विषयाणामेतेषां शोधान्वेषणादिकं कृत्वा भट्टाचार्यमहाभागो निम्नाङ्कितानि पुस्तकानि प्रणिनाय—

१- साइन्स ऑफ कॉस्मिकरे थेरेपी ( विश्व-किरण-चिकित्सा )
२- जेम थेरेपी ( रत्न-चिकित्सा )
३- मेगनेट डार्उजिग ( चुम्बकेन खनिजानामन्वेषणम् )
४- त्रिदोष-विज्ञानम्
५- सप्टेनेट मिस्टर्स इन होमियोपेथी

अवकाशग्रहणानन्तरं रोगोपचारस्य विविधपद्धतीनां शिक्षणप्रदानमन्येभ्यो लोकेभ्यः प्रारब्ध-

वानासीत् । तस्य मार्गनिदर्शने देशे विदेशेषु च टेलिथेरेपि–चिकित्सायाः अनेकानि केन्द्राणि संस्थापितान्यभूवन् ।

डाक्तरवर्यो विनयतोषभट्टाचार्यो विशुद्ध-हृदयः स्पष्टवक्ता समभूत् । मनुष्याणां गुणविशेषाणां परिचितो प्रतिभाशाली मनीषी बभूव । स किलोच्चकोटिको लेखकस्तथा सम्भाषणकलायां प्रवीणोऽभूत् । तस्य प्रभावपूर्णेन व्यक्तित्वेनानेके विद्वांसो विद्यार्थिनश्चाकृष्टा भवन्ति स्म । सोऽतीव स्नेहशील आसीत् ।



# नेहरूस्मृतिः

श्री उमाशंकरशर्मात्रिपाठी, स० प्राध्यापक ( अंग्रेजी विभाग ) काशी विद्यापीठ वाराणसी

जीवता सन्ततम् येन राष्ट्र एव समर्चितः
प्रयतोऽपि स्मृतिः साध्वी तद् व्रतम् तस्य रक्षति । १

ध्वान्तप्रलीने गहनगिरिगुहाः सेवमाने स्वदेशे
स्वान्तर्दीप्तस्फुलिङ्गान् रिपुकलुषहरान् दिक्षु मुक्तम् विकीर्य ।
सूतिर्नित्योदयानां निखिलजनहितम् या वितेनेऽस्तशङ्का
धाम्नां भूः श्रेयसे सा जयतु विजयिनी नेहरूभारती नः । २

पूर्वस्याम् पश्चिमायां यमदिशि धनदस्योत्तरस्यां निकामम्
राष्ट्रे राष्ट्रे स्फुलिंगाः जनहृदयशयाः त्वत्प्रदिष्टाः ज्वलन्ति ।
स्वातन्त्र्यं चेष्टमानो व्यपहततिमिरो बन्धमोक्षाय लोकः
स्तेनाचारान् विदेश्यान् क्षणमपि सहते वीक्षितुं न स्वदेशे । ३

दुर्भिक्षेऽहेतुबन्धौ कवलयति भुवम् वर्षणे वा दुरन्ते
वित्ताधीशे कुबेरे स्पृहयति निखिल काञ्चनं स्वाधिकारे ।
स्वार्थाऽऽस्वादानुरक्ते परिहृतचरिते नेतृवर्गे विमूढे
दीनानां कः शरण्यो विधिहतमनसाम् नेहरो ! त्वाम् विहाय । ४

कारागारं निषेव्यासकृदरिविहितां यातनाञ्चानुभूय
भूयो भूयो ब्रुवाणो जनमतमचलम् सत्पथन्यस्तचेताः ।
भोगान् भीतिम् प्रलोभान् रिपुरचितविधीनेकसन्धो विजित्य
सर्वस्वं राष्ट्रहेतौ बलिमिव विदधत् त्वदृते कः परोऽन्यः । ५

शङ्काझञ्झाकराले निविडतरतमस्तोमलीढेऽन्तरिक्षे
लुप्यत्तारावितानेचलसलिलकरक्षोभकम्पत्पयोधौ

कल्पान्तं शङ्कमानो मनुरिव सभयं सभ्यतापोतमद्य
आरूढो लोकतन्त्रः श्रयति यदि तटम् कर्णधारस्त्वमेव । ६
स्वार्थस्थैर्याविमोहस्खलितनयकथावर्त्मभृद्राष्ट्रमुख्ये
अन्योन्याऽऽक्षेपवातोच्छ्वसितचिरशयाऽऽजिस्फुलिंगप्रचारे
येनाऽऽश्चर्यैकधाम्ना निखिलजनमता राष्ट्रताटस्थ्यनीतिः
यत्नादाविष्कृतेयम् भृशमभयमनाः भीतिबन्धं भिनत्ति । ७
यूनामुत्साहबन्धौ मृदुनववयसामेकमित्रे शिशूनाम्
वृद्धानामात्मतोषे जनहितमनसां वर्त्मदीपे सुधीनाम्
निर्ह्रीकाणामरीणामुरसि गिरिशठे दारुणे वज्रकीले
देशप्राणे त्वयीत्थं व्रजति दिवमियं भूः परिव्राजिकैव । ८
त्वय्यारूढे द्युलोकं विदलितहृदया मातृभूमिः वराकी
नूनं सर्वंसहाऽपि प्रमुषितविभवा शोकमूर्च्छाऽब्धिमग्ना
द्रष्टुं त्वामेकबन्धुं शरणमशरणा दृष्टिमावर्जयन्ती
दौर्भाग्यं प्रेक्षमाणा पुनरपि रुदती रोदयत्येव लोकम् । ९
उत्कोचे विचकत्यगतिभुजगे सीम्नि क्षुधा सर्पति
दैन्ये नृत्यति निर्भयम् प्रतिगृहं स्वर्णेऽपि पुञ्जीयति
कुर्वन्त्युग्रकरे प्रजां विवसनां दुश्शासने शासने
देशोऽय यदि जीवतीत्थमपि तद्हेतुः भवत्सस्मृतिः । १०
यदपत्येषु जीवत्सु चत्वारिंशत्सु कोटिषु
क्रन्दति भूरपुत्रेव यं विनाऽसौ जवाहरः । ११



# आवश्यक-सूचना

पाठकों को जानकर अत्यन्त प्रसन्नता होगी कि गुरुकुल-पत्रिका का आगामी अंक ( वर्ष १८ का १ म अंक ) वेदांक के रूप में प्रकाशित होगा। जो आकार में साधारण अंक की अपेक्षा लगभग ढाई गुणा व तिगुना वृहत् होगा। इसका मूल्य १ ७५ पैसे रखा गया है।

पढ़ने के इच्छुक व्यक्तियों से निवेदन है कि वे मूल्य एम.ओ. द्वारा भेज देवें तथा इस विशेषांक का उचित उपयोग उठावें।

—सम्पादक



# राष्ट्रीयध्वजगौरवम्

श्री रत्नाकर शास्त्री एम. ए., गुरुकुल कांगड़ी

अयि विमलमतयः प्रेयान्सः पाठकाः ! नात्राविदितमस्ति विदुषामत्रभवतां यदस्माकं स्वातन्त्र्यप्रतीकभूतोऽयं ध्वजः कस्य न दृशः पदं प्राप्नोति।

दर्शं दर्शममुं कस्य न सहृदयस्य हृदयं हर्षातिरेकमनुभवति ।

अयं हि-स्तम्भः स्वातन्त्र्यप्रदीपस्य, प्रतीकः सर्वजनभावनायाः, समुद्भवः प्रभूतदृढभावनानाम्।

आलोकमालोकममुं के न कलयन्ति कलितमहिमानं स्वाभिमानम् ।

अत्र हि त्रिविधरंगरंजिता वसनपट्टिकात्रयी कस्य न मानसमाकर्षति ।

यतो हीयं भारतमातुर्ग्रीवाप्रदेशार्पितत्रिसूत्रग्रथितोपवीतमालेव राजते ।

यत्र हि––श्वेतपट्टिकया शुक्लकर्मकर्तृणाम्, रक्तपट्टिकया च रजोगुणगर्भितानां शुक्लाशुक्लकर्मोद्भावनया निजपथानुसरन् शरणोद्देश्यतया मध्यमजनानां आदर्शभूता, हरितपट्टिकया च कृष्णकर्मकरणलालसानां मनः केवलं कर्त्तव्यकर्मणि प्रवर्तयन्ती वायुवेगजनितचंचलतया समाह्वयन्तीव निजाभिमुखं वैदिकधर्मोद्देश्यनिर्देश्यपालनप्रवृत्यर्थं संकेतमिव कुर्वाणा कस्य न नयनगोचरी भवति ।

### अथवा

श्वेतपट्टिकया सर्वेभ्यो देशवासिभ्यो विमलज्ञानोद्देश्यप्रकाशपरम्परायाः प्रतीकभूता, रक्तपट्टिकया च विविधापत्संकटसहनशक्ति निर्दिशन्ती, हरितपट्टिकया च शस्यावश्यकतामौषधोपचारं फलमूलकन्दादीनां प्राचुर्यं प्रवर्तेत—सर्वत्रापीत्यादेशमिव ददाना सर्वैरपि मनस्विभिः स्वेषु स्वेषु कर्त्तव्येषु प्रवर्तितव्यं, समस्तैरपि विहाय स्वभेदभावान् प्रभविष्णुभिः सहिष्णुभिश्च भाव्यमिति च संदेशमपि ददती व्योम्नि विराजते ।

एतदर्थमेव गुरैर्वीरवरैः स्वकर्त्तव्यपालनपरैरनेका अपि स्वात्माहुतयः प्रादायिषत। एतदर्थमेव च स्वसभ्यताभिमानिभिः स्वकीयसंस्कृतिगौरवशालिभिर्भारतमातुः स्वातन्त्र्याभिलाषिभिः के न कृता उत्सर्गाः स्वात्मनाम्, के न समर्पिताः स्ववैभवविलासाः स्वसदनस्य, के च न सर्वस्वप्रदानेनापि प्रकटिताः स्वस्नेहसम्भाराः स्वहृदयस्य ।

अमुं ध्वजमेव च निर्दिश्य–शिशुभिर्बालकैस्तरुणैर्वृद्धैर्बालिकाभिस्तरुणीभिर्वृद्धाभिश्च स्वातन्त्र्यहेतुकविविधसंकटसहनसरण्या च के न मार्गाः परिष्कृता भारतमातुः सेवायै सर्वेषाम् ।

अमुमेव चोद्दिश्य प्रातस्मरणीयः स्वनामधन्यो महर्षिदयानन्दः: लोकमान्यतिलकः, महात्मागांधी, सरदारपटेलः, जवाहरलालनेहरु, लाला लाजपतरायः सुभाषचन्द्रः, प्रभृतयः महानुभावाश्च न केवलं भारतमातुः स्वतन्त्रतायै अनेकवारं कृष्णमन्दिरमलंचक्रुः किन्तु तदनुसरन् परायणे न जाने कियद्भिर्नेतृभिः, कियद्भिश्च निजबलिदानप्रदानप्रियैः, कियद्भिश्च तदान्दोलननिरतमानसैः स्वकीयप्रियपरिवारोपेक्षां कुर्वद्भिश्च कठिनकारावासकष्टानि सोढानि ।

अतएवास्माकमपि कर्त्तव्यं यत् प्रबलप्रयत्नोपलब्धस्वातन्त्र्यमहत्त्वरक्षायै स्वकीयसमुत्पादितविकटसंकटविभीषिकां निवारयितुं सन्नद्धा भवेमः।

यतो हि स्वातन्त्र्यमेव जीवनं वरीवर्ति । समुचितमेव निगदितं केनापि यत्—

सुखं परं किं निजतन्त्रतैव  
दुःखं परं किं परतन्त्रतैव ।  
वनेषु कीराः सुखिनो भ्रमन्ति  
दीनाः पुनः कांचनपंजरेषु ॥

———o———

# जीवेच्चिरं भारतलोकराज्यम्

## ( वृत्तं उपजातिः )

श्री प्रा० हरिश्चन्द्र जी रेणापुरकर एम. ए., सहयाद्रि कालेज, शिमोगा (मैसूर)

†वर्षाणि पञ्च त्रिगुणानि तस्य जातस्य जातानि हि केवलानि ।
तथापि सर्वाधिककीर्तिशालि जीवेच्चिरं भारतलोकराज्यम् ॥१॥
यदा प्रभृत्येव विमुक्तभूतं तदाप्रभृत्याहितनित्ययत्नं ।
स्वाधीनताहीनजनस्य मुक्त्यै जीवेच्चिरं भारतलोकराज्यम् ॥२॥
लोकं विधास्यन्निव वीतशोकं दोधूयते मानयुतो यदीयः ।
अशोकचक्रांकितराष्ट्रकेतु जीवेच्चिरं भारतलोकराज्यम् ॥३॥
गांधिर्महात्मा महनीयकीर्तिर्विनाऽपि शस्त्रं जितवीरशत्रुः ।
विशोभते राष्ट्रपिता यदीयो जीवेच्चिरं भारतलोकराज्यम् ॥४॥
अलोकसामान्यविशालदृष्टिर्विश्वस्य शान्त्याततभूरियत्नः ।
जवाहरो यस्य विदग्धशिल्पी जीवेच्चिरं भारतलोकराज्यम् ॥५॥
शास्त्रेषु निर्बाधगतिर्मनीषी श्रीसर्वपल्लिस्स दिगन्तकीर्तिः ।
यद्राजते राष्ट्रपतिर्विशिष्टः जीवेच्चिरं भारतलोकराज्यम् ॥६॥
लघ्वाकृतिस्सन्नपि दीर्घकीर्तिरुत्तेजनायामपि शान्तमूर्तिः ।
यच्छास्त्रिवर्योऽस्ति महाधुरीणः जीवेच्चिरं भारतलोकराज्यम् ॥७॥
अनामयं यस्य सदा वितन्वन् नगाधिपस्तिष्ठति दत्तचित्तः ।
तथैव धावंश्चरणौ समुद्रो जीवेच्चिरं भारतलोकतन्त्रम् ॥८॥
भागीरथी पुण्यजलाभिषिक्तं देवांगनागीतयशः प्रगाथं ।
असंख्यदेवर्षिसमिद्धतेजो जीवेच्चिरं भारतलोकराज्यम् ॥९॥
विश्वस्य सांग्रामिकसंघमुक्ता तटस्थवैदेशिकराजनीतिः ।
त्रैलोक्यक्षेमाय बभूव यस्य जीवेच्चिरं भारतलोकतंत्रं ॥१०॥
स्वाधीनतां मानवबन्धुतां च समानतां सर्वविचारभाजां ।
आदर्शरूपेण बहुमन्यमानं जीवेच्चिरं भारतलोकराज्यम् ॥११॥
लोकस्य लोकाय च लोकचाल्यं लोकोन्मुखं लोकहितानुबन्धि ।
इत्युच्चध्येयेन कृतप्रयाणं जीवेच्चिरं भारतलोकराज्यम् ॥१२॥
आशांकुरो मानवसभ्यतायाः सद्वत्सलं दीनजनार्तिहारि ।
बद्धादरं बद्धजनस्य मुक्त्यै जीवेच्चिरं भारतलोकराज्यम् ॥१३॥
अगणितरणवीरैर्दत्तहव्यं स्वप्राणैः प्रथितविमलकीर्ति श्रीमदौदार्यशालि ।
सुरगणमुनिवृन्दैराशिराशिकृताढ्यं जयतु जयतु राज्यं भारतीयं विशालं ॥१४॥

†Note : Though freed on 15 August 1947. India was declared as republic only on 26 January 1950. Hence 15 years of old.

———o———

# दीक्षान्तभाषणम्

( श्रीआचार्यवासुदेवद्विवेदिशास्त्रिणाम् वाराणसेयसार्वभौमसंस्कृतप्रचारकार्यालयसंचालकानाम् असमसंस्कृतसमितेः अष्टाविंशे समावर्तनोत्सवे )

## सरस्वती श्रुतिमहती महीयताम्

सुविशालं निजं देशं विशालां संस्कृतिं निजाम् ।
विशालं निजसाहित्यं भूयो भूयो नमाम्यहम् ॥
ये ये संस्कृतभारती-प्रणयिनो ये संस्कृताधीतिनो
ये वा संस्कृतरक्षणे तदुदये श्रद्धानिबद्धादराः ।
भार्याशिष्यसुतादिभिः सह मुदा ये संस्कृतालापिन-
स्तेषां पावनपादपद्मयुगले साष्टाङ्गपातं नमः ॥

सम्माननीयाः सभापतिमहोदयाः, परमादरणीया विद्वांसः, संस्कृतप्रणयिनो भद्रजनाः, देव्यः, प्रियाः स्नातकाश्च !

अहं सर्वप्रथमं तावद् असमसंस्कृतसमितेः सम्मान्यसदस्येभ्यः सम्पादकमहोदयेभ्यश्च भूयसीं कृतज्ञतां ज्ञापयितुमिच्छामि यैरहं सामान्योऽपि जनः परममहत्त्वपूर्णेऽस्मिन् समारोहे दीक्षान्तभाषणं कर्तुं सादरमुपामन्त्रितः । पुनश्च अहं खलु निसर्गत एव भ्रमणप्रियो जनः । तथापि संस्कृतविषयिणी चर्चा मम जीवनस्य एकमात्रं प्रियतमं लक्ष्यम् । एतत्प्रदेशे तु संस्कृतस्य न विशेषतो शोभनीया दशेति अत्रत्यानां सर्वेषामपि विदुषां साक्षात्कारस्य तथा तैः सह विचारविनिमयस्य च विगतवत्सरादेव मे बलवती स्पृहा आसीत् । तदत्र महोत्सवे ममामन्त्रणेन मदीयं सर्वमपि प्रियं भवद्भिः सुसम्पादितमिति वस्तुत एव हार्दिकीं कृतज्ञतामावहामि न तु वचनमात्रेण ।

महानुभावाः, वयमत्र सर्वेऽपि संस्कृतशिक्षासम्बन्धिनि समारोहे समुपस्थिताः स्म । तदत्र तस्मिन्नेव विषये किमपि पर्यालोचनं प्राप्तकालं भवति । तत्र "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति सूक्त्यनुसारं कमपि लाभं विना न कस्यापि कस्मिन्नपि कर्मणि प्रवृत्तिर्भवतीति स्वाभाविकमेव । पुनश्च एतस्मिन् लौकिकलाभप्रधाने युगे कार्यशतसङ्कुले च जीवने एषा मानवानां प्रवृत्तिरतितरां बलवती । अतः संस्कृतशिक्षायाः प्रचारेण संवर्द्धनेन च वर्तमानसमये राष्ट्रस्य तथा व्यक्तीनाञ्च कः खलु अनन्यशिक्षासाधारणो विशिष्टो लाभ इति प्रथमं चिन्तनीयं भवति । ततश्च तस्याः शिक्षायाः कीदृशी साम्प्रतमवस्था ? सदवस्था दुरवस्था वा ? यदि दुरवस्था तदा तस्या निवारणाय तथा भूयोऽपि समीचीनरूपेण संस्कृतशिक्षाप्रसाराय शासनस्य, संस्कृत पण्डितानां, जनतायाश्च किं कर्तव्यम् ? इति सर्वं विचारणीयं भवति । तदेतानेव विषयान् अवलम्ब्य मया केचन स्वकीया विचारा अनुभवाश्च इदानीं श्रीमतां पुरस्तादुपस्थाप्यन्ते समासतः ।

यदा संस्कृतशिक्षेति पदमुच्चार्यतेऽस्माभिः तदा तस्य द्विविधोऽर्थः प्रतिपद्यते । प्रथमस्तु संस्कृतभाषायास्तथा तत्साहित्यस्य च सर्वेषां कृते साधारणं ज्ञानं तथा द्वितीयः केषाञ्चित् जनानां संस्कृतभाषोपनिबद्धानां विविधशास्त्राणां तलस्पर्शि प्रौढं वैदुष्यम् । तत्र संस्कृतभाषायाः साधारणं ज्ञानं तथा तत्साहित्यस्य सामान्यः परिचयश्च देशस्य कियत् कल्याणं साधयतीत्येव वयं प्रथमं पश्यामः । इदानीं देशे राष्ट्रहितदृष्ट्या सर्वाधिकं महत्त्वपूर्णा समस्या अस्ति राष्ट्रस्य एकतायाः । एतस्या एकतायाः उपलब्धये प्रतिष्ठापनाय च केन्द्रे एका परिषत् संस्थापिता वर्तते या एतत्सम्बन्धिनो विविधान् उपायान् चिन्तयति तथा तेषां प्रचारार्थं विविधाः पुस्तिकाश्च प्रकाशयति । परन्त्वस्माकं दृष्ट्या संस्कृतस्य ज्ञानमेव एकं तादृशं साधनमस्ति यत् विविधभाषाभाषिणो जनान् परस्परमेकतायाः सूत्रेण आबध्नाति तथा एकस्यां भावभूमिकायां च सहजतयैव प्रतिष्ठापयति । यदि सर्वेषां भारतीयानां कृते संस्कृतस्य

ज्ञानमनिवार्यं सम्पाद्येत, यदि केचन सुबोधा वेदोपनिषदां भागाः, यदि केचन रामायणस्य महाभारतस्य च अध्यायाः, यदि कानिचित् शङ्कर-रामानुजादीनां स्तोत्राणि, यदि काश्चन चाणक्यस्य नीतयः, यदि कतिचित् कालिदासादिकवीनां कविताः, यदि हितोपदेश-पञ्चतन्त्र जातकादीनां कश्चन कथाभागः, यदि कानिचित् भर्तृहरेः सुभाषितानि, यदि केचन कपिलकणादादीनां विचाराः, यदि कानिचित् जयदेवस्य ललितानि गीतानि च सर्वेष्वपि विद्यालयेषु श्रद्धापूर्वकम् अनिवार्यरूपेण अध्याप्येरन् तदा नूनमेव समस्ते भारते सर्वैरभिलष्यमाणाया भावनात्मिकाया एकताया यथार्थरूपेण प्रतिष्ठापना जायेत । एकमेव साम्प्रदायिकताया मिथ्याभयं परिहृय शिक्षाविभागेन सर मिर्जा इस्माइल प्रभृतिभिर्यवनमनीषिभिरपि समादृताया गीतायाः यदि प्रतिविद्यालयं यदाकदाचन नियमितः पाठः प्रवर्तितः स्यात् तदा भाषाज्ञानतोऽपि समधिकरूपेण ऐक्यमनुभूयेत तथा विचारव्यवहारा अपि समधिकं सुरुचिसम्पन्नाः सुसंस्कृताश्च स्युः सोऽयं प्रथमो महत्तरो लाभः संस्कृतशिक्षायाः ।

अथ द्वितीयो लाभः संस्कृतशिक्षायाः समस्तेऽपि भारते पारिभाषिकशब्दानां निर्माणम्, तेषां व्युत्पत्तिलभ्यार्थज्ञानं तथा तेषां प्रयोगे सौविध्यञ्च वर्तते । स्वतन्त्रताप्राप्त्यनन्तरं यस्मात् कालादस्माकं देशवासिभिः शिक्षाधिकारिभिः आङ्गलभाषायाः स्थाने हिन्द्यां प्रादेशिकीषु भाषासु च समस्तविषयाणां शिक्षणस्य सिद्धान्तः स्थिरीकृतस्तत आरभ्य सर्वेषामपि शासनगतानां तथा तत्तद्विषयसम्बद्धानाम् आङ्गलशब्दानां स्थाने संस्कृतस्य साहाय्येन नवीनशब्दानां निर्माणस्य केन्द्रे तथा प्रदेशेषु च योजना विहिता । अद्यावधि केन्द्रीय-पारिभाषिकसमित्या विभिन्न-विद्याशाखा-सम्बन्धिनो यावन्तः पारिभाषिकाः शब्दा निर्मिता निर्मीयमाणाश्च सन्ति तेषां संख्या केन्द्रीयसूचनानुसारं निम्नांकिता अस्ति—

१ — निर्मितानां शब्दानां संख्या २, १९, ६२३ ।

२ — निर्मीयमाणानां शब्दानां संख्या १०००, १५०० ।

एतदतिरिक्तं तत्तत्प्रदेशेष्वपि विपुलसंख्यायां भूयांसः शब्दा निर्मिताः सन्ति तथा तेषां संग्रहाश्च प्रकाशिताः सन्ति । एते सर्वेऽपि नूतनाः शब्दाः पारिभाषिकशब्दनिर्माणसमितेः निर्णयानुसारं प्रायेण संस्कृतमया एव । अत एव च तेषामखिलेऽपि भारते समानरूपेण मान्यता वर्तते तथा प्रयोगश्च प्रचलति । इदानीं राष्ट्रहितदृष्ट्या एतत् परमावश्यकं कार्यं वर्तते यद् हिन्द्यां तथा प्रादेशिकीष्वेव भाषासु विश्वविद्यालयीयशिक्षापर्यन्तं पाठयिष्यमाणविषयाणां पाठनाय उत्तमोत्तमा ग्रन्था रचिताः स्युस्तथा तैरेव समस्तविषयाणामध्यापनं विधीयेत । यद्यपि खेदस्यायं विषयो वर्तते यद्यापि अनेके आंग्लभाषाभक्ता भारतीया लोकनायकाः शिक्षाधिकारिणश्च उपर्युक्तस्य निश्चयस्य यथावत् कार्यान्वयने अन्तरायमुत्पादयन्ति परन्तु अस्माकमयं सुदृढो विश्वासो वर्तते यत्—

यास्यति जलधर-समयस्तव च समृद्धिर्लघीयसी भविता
तटिनि! तटद्रुम-पातन-पातकमेकं चिरस्थायि ॥

इत्यन्योक्त्यनुसारं नातिचिरादेव भारतीयभाषाणामहरहः प्रसर्पता प्रभावातिशयेन तथा नागरिकेषु प्रबर्द्धमानेन राष्ट्राभिमानेन च आंग्लभाषायाः प्रभावः परिक्षीणतां यास्यति तथा तस्या अन्धसमर्थकानामिदं राष्ट्रविरोधि अशोभनीयञ्च अभियानं भारतस्य भाविनि इतिहासे कलंकरूपेणैव कृष्णाक्षरैरुल्लिखितं भविष्यति । परन्तु बान्धवाः, एष सर्वोऽपि भाषासमुन्नयनात्मकः समारम्भः तदैव यथार्थ-

तया सफलीभूतो भवितुमर्हति यदा सर्वेषामपि भारतीयानां संस्कृतभाषायाः कार्यनिर्वाहक्षमं ज्ञानं जायेत । यतः नवनिर्मितानां शब्दानां धारणं प्रयोगं च त एव अनायासं कर्तुं पारयन्ति येषां किञ्चित् संस्कृतज्ञानं भवति । अपरे पुनः संस्कृतज्ञानहीना जनाः कठोरान् अपि आंग्लशब्दान् सरलान् मन्यन्ते परन्तु सरलतमानपि संस्कृतशब्दान् कठिनतमान् मन्यन्ते तथा तेषामुच्चारणे प्रयोगे च महत् काठिन्यमनुभवन्ति तथा महतीञ्च असमर्थतां प्रकटयन्ति । सर्वथा संस्कृतज्ञानहीनानाञ्च कृते इदं वस्तुतः स्वाभाविकं तथा यथार्थमपि । अस्यामवस्थायां यदि संस्कृतज्ञानं सर्वेषां कृते अनिवार्यं भवति तदा शासने, शिक्षायां, सामान्यव्यवहारे सर्वत्र नवनिर्मितानां शब्दानां प्रयोगे उच्चारणे च सौविध्यं जायेत, भारतीयभाषाणां समुन्नयनस्य पन्थाः प्रशस्तः सम्पद्येत तथा भाषिकी एकरूपता राष्ट्रस्यापि एकताया वलवती साधिका स्यात् । तदिदं मतं स्वर्गीयैः श्रीनेहरूमहोदयैरपि अनेकधा सुस्पष्टं समर्थितम् ।

अथ भाषाशास्त्रदृष्ट्या निजनिजमातृभाषाणां सम्यक् परिज्ञानाय, निजनिजभाषाणां साहित्यस्य उत्कृष्टग्रन्थानां सम्यक् अध्ययनाय तथा स्वल्पेन परिश्रमेण परस्परमन्योन्यभाषाणां परिचयप्राप्तये च संस्कृतज्ञानं परमोपकारकं भवतीति सर्वैरपि भाषाशास्त्रविशारदैः स्वीकर्तव्यमेव । याः किल दक्षिणभारतीयभाषा. न संस्कृतप्रसूताः तास्वपि विशुद्धसंस्कृतशब्दानां विपुलः प्रयोगः । दक्षिणस्य तेलगू-कन्नड-मलयालमभाषाणां रचनासु तु संस्कृतशब्दानां तथा बाहुल्यं लभ्यते यथा तासां पृथक्करणमपि कठिनं जायते । एतासां प्रसिद्धरचनाभ्यः कानिचित् उदाहरणानि श्रीमतामपि मनोरञ्जनाय उपस्थापयितुमिच्छामि ।

एषा तावत् महाकवि श्री पोतन्नाविरचितस्य आन्ध्रभागवतस्य सरस्वतीवन्दना श्रूयताम्—

शारद नीरदेन्दु घनसार पटीर मराल मल्लिका–
हार तुषार फेन रजताचल काश फणीश कुन्दम–
न्दार सुधा पयोधि सित तामरसामरवाहिनी शुभा–
कारत नोप्पु निन्नु मदिगानग नेन्नडु गल्कु भारती ॥

अम्ब नवाम्बुजोज्ज्वल
करम्बुज शारदचन्द्र चन्द्रिका–
डम्बर चारुमूर्ति प्रकट
स्फुट भूषण रत्न दीपिका–
चुम्बित दिग्विभाग श्रुति·
सूक्ति विविक्त निज प्रभाव
भावाम्बर वीथि विश्रुत
विहारिणी नन् कृपचूडु भारती ॥
आन्ध्रभागवतम् १. १. ८–९ ॥

एतद् भागवतं समस्तमपि एतादृशीभिः संस्कृतमयीभिः प्रौढरचनाभिराद्योपान्तं परिपूर्णम् । अथ एतदपरमेकं पद्यं श्रूयतां मधुमासवर्णनपरम्—

ललनाजनापाङ्गवलनावसदनङ्ग
तुलनाभिकाभंग दोः प्रसङ्ग–
मलसानिल विलोलदल सासव
रसाल फलसादर शुकाल वनविशाल–
मलिनी गरुदनीक मलिनीकृतधुनीक
मलिनी सुभितकोक कुलवधूक–
मतिकान्त सलतान्त लतिकान्तर
नितान्त रतिकान्त रणकान्त सुतनु कान्त–
मकृतकामोद कुरवकाविकल वकुल–
मुकुल सकल वनान्त प्रमोद चलित–
ललित कलकण्ठ कुलकण्ठ काकली
विभासुरमवोल्चु मधुमास-वासरम्बु ॥
वसुचरित्रम् १. १२६ ।

एतासु कवितासु समासबन्धस्तु संस्कृतकविताभ्योऽपि क्वचिद् क्वचिद् लम्बायमानतरः ।

—क्रमशः

---०---

# सम्पादकीय टिप्पराय:

## स्वामिध्रुवानन्दमहाभागानां स्वर्वासः

आर्यसमाजस्य प्रसिद्धनेतारः विद्वद्वर्याः वेदादिशास्त्राणां मूर्धन्यपण्डिताः श्री स्वामिध्रुवानन्दमहाभागाः द्व्यशीतिवर्षायुषि दिवंगता इति महत्खेदास्पदं स्वर्गमनं तेषामस्मभ्यं सञ्जातम् । केवलं आर्यसमाजायैव तैः स्वजीवनं समर्पितमासीत् । आर्यसमाजस्य विभिन्नक्षेत्रेषु प्राणपणेन यावज्जीवं कार्यं कुर्वतां तेषां निधनं जातमिति महत्गौरवास्पदं स्थानं तैर्लब्धमार्यसामाजिकानां चेतःसु । परमस्त्यस्माकं किञ्चिद्वक्तव्यं तेषां महनीयकीर्तीनां शवयात्राविषये ।

'माता भूमिः पुत्रोऽहं पृथिव्या' इति श्रुतिवचनं घण्टाघोषेणोद्घोषयद्भिरार्यसामाजिकैः शवस्य दुर्गतिः कुतो विहिता ? बम्बईप्रदेश एव दाहसंस्कारः कुतो न विहितः ? यस्मिन् प्रदेशे यस्य देहपातो जायते स एव तस्मै संस्कारप्रदेश इति मन्तव्यम् । पुनश्च एते सन्यासिवर्या आसन् । तेभ्यः कश्चित् प्रदेशः प्रियः स्वकीयः कश्चिच्चापरोऽप्रियः परकीय इति किं व्याहर्तुं शक्यते ? आर्याणां नैषा परिपाटी विद्यते । एषा समग्रा पृथिवी अस्माकमार्याणां माता इति मनसि निधाय परधर्मावलम्बिनां परिपाटी नानुसर्तव्याऽस्माभिः । देहदर्शनेन किं जायते किं मृतो देहः पवित्री करिष्यति ? यस्मिन् जीवति सर्वे प्राणादयो जीवन्ति शरीर पवित्रमिति निगद्यते, अन्ये पुरुषाः सहवासेन, उपदेशेन वा पूताः भवन्ति यदासावेव शरीरं परित्यज्य बहिर्यातस्तदा विचित्रैषा शवस्य यात्रा कीदृशी ? को लाभो मौढ्यसरणिमनुसरणेन । अस्तु ! वयं दिवंगतायात्मतत्वाय सद्गतिं प्रार्थयामः ।

## १५ अगस्त–स्वतन्त्रता-दिवसः

प्रतिवर्षं स्वतन्त्रता–दिवसः समायाति । स्त्रियो बालवृद्धाः सर्वे जनास्तद्दिनं पर्वरूपेण सोल्लासं सोत्साहं च मन्यन्ते । अस्मन्मते एतत् पर्वदिनं न केवलं राष्ट्रियध्वजोत्तोलने मिष्टान्नभोजने चित्रविचित्रपरिधानधारणे एव समाप्येत परमस्मिन् दिने राष्ट्रियोन्नत्यवनत्योः लाभालाभयोः समीक्षणमपि कर्तुं युज्यते । भौतिकाभ्युन्नतिविषये तु शासकवर्गीयाः दत्तावधानाः श्रूयन्ते निम्नगा इव द्रव्यधारा अपि तां लक्ष्यीकृत्य प्रवहन्ति । परं कदाचिदेतदपि विचारितं यत् राष्ट्रस्याध्यात्मिकोन्नतिर्जाता न वा जनतासु सच्चारित्र्यं प्रसृतं न वा । प्रतिपुरुषस्य जिह्वाग्रे एते दोषाः पदे पदे प्रस्फुरन्ति । यथा–भ्रष्टाचारः, उत्कोचः, निष्कर्मण्यता, दलबन्दिता, अन्नाभावः, पक्षपातः, पदलोलुपता, स्वार्थपरता, अर्थस्य दासता, एवं बहवो दोषाः राष्ट्रे समुद्भूताः सीमानं चोल्लंघ्य वृद्धिं प्रदाता इत्यवलोक्यन्ते । अतोऽस्मिन् दिने सर्वैः सम्भूय दोषापहाराय सच्चारित्र्यरक्षणाय च प्रयत्नो विधेयः । के के उपायाः प्रयत्नाश्च भवितुमर्हन्ति इति विचारणीयम् । न केवलं विचार एवालमपितु पदलोलुपतामर्थासक्तिं वा दूरीकर्त्तुं धीरैः कर्मठैर्राष्ट्रस्य सत्योन्नतिकांक्षिभिः शासकवर्गेषु कैश्चित् स्वेच्छया पदत्यागोऽपि कर्तव्यः । अस्मिन् दिने समुद्घोषणीयः । यथा सेवानिवृत्ते र्विशिष्टमायुर्निर्धारितम् तथैव राजनीतिसंन्यासस्यापि कालविशेषोऽभीष्टः । जननिन्दां तृणाय मत्वा उपेक्षावृत्तिः कदापि नोचिता ।

—भगवद्दत्तो वेदालङ्कारः ।

---०---

## महर्षिचरितामृतम् ( नाटकम् )

रचयिता : श्री सत्यव्रतः वेदविशारदः मोहमयी गुरुकुलस्य प्रतिष्ठितस्नातकः ।

प्रकाशकः—सत्यव्रत बी. कामदार, सत्यसदन प्लाट नं० २९५ भीमानी स्ट्रीट, पो० ओ० माटुंगा बम्बई १९, मूल्यम् २) ।

वेदविशारदपदवीधारिणा मोहमयीगुरुकुलस्य प्रतिष्ठितस्नातकेन श्री सत्यव्रतमहाभागेन विरचितं महर्षिचरितामृतं नाम नाटकं दृष्टिपथमायातम् । पुस्तकस्य प्रारम्भे लेखकमहोदयस्यालपतमः परिचयः प्रदत्तोऽस्ति । तेन ज्ञायते यद् विद्यते बहुमुखीप्रज्ञा विविधेषु विद्याक्षेत्रेषु स्नातकमहोदस्य । नैकेषु कर्मक्षेत्रेषु सेवाव्रतेषु चासौ कुशलत्वं प्रकटयामास । एतत् सर्वं संकल्पबलस्यैव फलम् । स्वयं संकलपधन : महाकविरयं संकल्पवह्ने र्महास्रोतसो दयानन्दर्षेश्चरित्रचित्रणं कृत्वा सहृदयावर्जकमार्द्रं चेतोऽपि धत्ते—इति प्रकटयति । अन्यदपि महदाश्चर्यं यत् विरुद्धदिग्देशस्थितयोरुभयोरपि सरस्वतीलक्ष्म्योः सहसमाराधनमसौ कथमेकमना विधत्ते । नाटकमिदं पुरातनमहाकविकृतीनां समकक्षतां प्राप्नोति । शृङ्गाररसस्याभावोऽत्र सुतरामवलोक्यते यतो हि लोकोत्तरपुरुषस्य महर्षिदयानन्दस्वामिनः चरित्रचित्रणे शृङ्गाररसस्यादर्शनं स्वाभाविकमेव । नाटकस्य पद्यबद्धं मनोहारि रूपं गम्भीरभावभरितं प्रौढत्वं व्यनक्ति । निदर्शनाय केचन श्लोका अत्रोदाह्रियन्ते—

सौजन्यैकपयोनिधेरविरलप्रारब्धपुण्यव्रत
प्रेयोलालितमानसस्य विशदः कस्यापि भव्यार्थिनः ।
कामं धाममुदामशेषजनताकीर्तिस्फुरत्तारका
तेजः स्तोमहरः स निर्मलयशः शीतद्युतिः शोभते ।
विश्वक्षेमकरीमनन्तमहसः कल्याणपारंपरी
खेलन्निर्जरिणीं पवित्रतरणिं संसारवारांनिधेः ।
भव्यां भानुविभामिव श्रुतिमधध्वंसाय संजाग्रतीम् ।
पुण्यां प्राणभृतां गतिं मुनिवरैराराधितां दध्महे ।।
चञ्चच्चन्द्रकरन्ति शिष्टपरिषच्चेतश्चमत्कैरवे
कल्याणामरवाहिनीं रसलसत्स्यन्दन्ति सन्मण्डले ।
श्रीमच्चन्दनलेपनन्ति मधुराः श्रीमद्दयानन्द ! ते
सर्वाङ्गे कुसुमप्रमोदरसिकाः शुभ्रा यशोराशयः ।
सत्यं ज्ञानमनन्तमादिविमलं ब्रह्मास्ति तत्त्वं परं
जीवः कर्मवशस्तदीय करुणापीयूषतोषांकुलः ।
संसारे घटियन्त्रवत् प्रचलिते भोक्ता फलानां कृती
मोक्षानन्द भवभ्रमादुपगतादायाति संयाति च ।
येषामशेषोदयदायि दिव्यं वचः सुधासाररसालहारम् ।
वन्देऽहमानन्दिपदारविन्दं श्रीमद्दयानन्दमहामुनीनाम्

एवं सर्वाङ्गसुन्दरमिदं पुस्तकं विरचितं महाभागेन । धन्यः साधुवादार्हश्चायं स्नातकमहोदयः । यदि अस्य नाटकस्य हिन्दीभाषायां व्याख्याऽभविष्यत् तत् सर्वेभ्यो विशेषतो महर्षिदयानन्दस्य भक्तेभ्यः क्षेमतरमभविष्यत् ।

## मूलं संस्कृतम् एवं वैदिकभाषोत्पत्तिविज्ञानम्

रचयिता—पंडितराजआचार्यप्रवर, पंडित श्यामकुमार आचार्यः ।

प्रकाशकः—भारतीयविद्याप्रचारसमितिः पृष्ठ संख्या २८८, मूल्यम् ४) भारते, शिलिंग ७ विदेशेषु, डाक-व्ययः पृथक् ।

श्री आचार्यप्रवरश्यामकुमारद्वारा लिखितं सप्ताध्यायात्मकं पुस्तकमिदं यत्र तत्रावलोकितम् । पुस्तकस्योद्देश्यमिदं प्रतीयते यत् साधारणजनानां सुखबोधाय येन केनापि प्रकारेण संस्कृतं सरलं विधेयमिति । केन्द्रीभूतविषयस्यास्य परिपोषणाय नैकविधानां विषयाणामत्र स्पर्शमात्रं विहितम् । उद्देश्यं त्विदं-

समीचीनम् यत् गीर्वाणवाणी भारतस्य मातृराष्ट्र-भाषा भवेदित्यत्र नास्त्यस्माकं विप्रतिपत्तिः । परं सर्वत्र भारते संस्कृतप्रसारमपेक्ष्य यत् परिवर्तनं प्रस्तूयते तत्रास्ति किञ्चित् मतवैपरीत्यम् । कियन्मात्रं परिवर्तनं विधेयम् संस्कृतस्योपरि तस्य कः प्रभावः के च परिणामाः प्रकटीभविष्यन्तीत्यपि विचारणीयम् । पूर्वं तावत् एष प्रश्नः समक्षमायाति यत् सन्धिसमासादिपरिवर्तनस्य तत्त्यागस्य वा कः सीमा भवेत् ? एकदा परिवर्तने स्वीकृते किमस्ति सामर्थ्यं यस्य कस्यापि विदुषः परिवर्तन-प्रवाहापूरमवरोद्धुं? किमराजकता न प्रसरिष्यति ? अस्मन्मते तु सन्धिसमासलिङ्गविभक्त्यादीनां विपर्यासः भ्रंशः त्यागो वा पूर्णतया संस्कृतोपकाराय न भविष्यति । व्याकरणनियमरज्जुभिरप्रतिबद्धा सा संस्कृतभाषा प्राकृतगह्वरे अपभ्रंशगह्वरे वा नूनं पतिष्यति । सर्वासामपभ्रंशभाषाणामाविर्भावोऽनेनैव विधिना सञ्जातः । भाषणे वार्तालापे वा प्रायो विद्वांसः सन्धिसमासादिकार्यं विदधत्येव न । केवलं निबन्धादिलेखने पुस्तकविरचने च तत्कार्यं दृग्गोचरीक्रियते ।

यत्र सन्धिसमासादिपदप्रयोगकारणात् तेषु भ्रमः सञ्जायते, अर्थबोधे च काठिन्यं वाऽनुभूयते तत्र तत्कार्यं नैव विधेयम् ।

सामान्यजनानां कृते तु पूर्वमेव विकल्पमामनन्ति सुधियः । परमित्यवधेयं यत् संस्कृतस्य सारल्य-सम्पादनविधौ कदाचित् सूक्तिरेषा-विनायकं प्रकुर्वाणो रचयामास वानरम्—गतार्था न जायेत । अस्माकं मते तु केवलमेतदेव परिवर्तनं विधेयं यत् बालबुद्धिभ्यो बालेभ्यो वा सन्धिसमासादिविरहिताः ग्रन्था विरचनीयाः पण्डितेभ्यश्च यथापूर्वं भवतु । परमभिनन्दनीयः साधुवादार्हश्च श्यामकुमार-आचार्यमहाभागस्य संस्कृतानुरागः भूतले सर्वत्र संस्कृतप्रसाराय महान् समुद्योगः अस्यैव महाभागस्यावलोक्यते । ——भगवद्दत्तो वेदालङ्कारः ।

———

## आवश्यकीयं निवेदनम्

सहृदयाः प्रियपाठकाः सविनयं निवेद्यन्ते यत् गुरुकुलपत्रिकायाः वर्षसमाप्तिः श्रावणमासे सञ्जायते । गुरूपूर्णिमायां श्रावणीपर्वदिनादारभ्य चातुर्मास्येष्टि-विधानं शास्त्रेषूपलभ्यते । तद्दिनादुपक्रम्य भारते वेदाध्ययनं प्रारभ्यते स्म । अत एवास्मिन्नवसरे गुरुकुलपत्रिकाया अष्टादशवर्षस्यागामी प्रथमोऽङ्कः बृहत्-कायो वेदाङ्को भविष्यति । तस्य मूल्यं डाकव्ययसहितं १)७५ रूप्यकं निर्धारितम् । परं पत्रिकाया ग्राहकेभ्यो विना अतिरिक्त मूल्यं प्रदास्यते । ये महानुभावा विगतवर्षस्य विष्णुअंकं ग्रहीतुमिच्छन्ति तैरपि १)७५ प्रेषणीयम् । परिमिता अङ्का एवावशिष्टाः सन्ति । —भगवद्दत्तो वेदालंकारः ।

चानेकानि जगदुपादानभूतानि कारणानि स्वीयैः दिव्यैः विचित्रैश्च गुणैः परस्परं सर्वथापि भिन्नानि सन्ति । तथा च शास्त्रेषु श्रूयते–पृथिव्यप् तेजो वायूनां स्थूलभूतानां सूक्ष्मभूताः परमाणवः स्वीयैः गुणैः सह नित्यसत्तां लभन्ते । ते च न परस्परात् सम्भवन्ति न चान्योऽन्यस्मिन् विलयं यातीति ।

त एते वैदिकाः भावाः श्वेताश्वतराणामुपनिषद्यपि श्रूयमाणमुपलभ्यन्ते । यथा—

नित्यो नित्यानां चेतनश्चेतनानाम् ।
एको बहूनां यो विदधाति कामान् ॥

उपर्युक्ताः सप्त भावाः मन्त्रस्य पूर्वस्मिन् भागे सूक्ष्मदृष्ट्या दर्शनेन प्रत्यक्षो भवन्ति । अथोत्तरस्मिन् भागे विचारणीयम् तच्चेदं निर्धार्यते—

(१) यस्तु खलूपर्युक्तानि तत्त्वानि न जानाति न च परमेश्वरं विज्ञातवान्, स्वभाग्यहीनः वैदिकेभ्यो मन्त्रेभ्यः न किंचिदपि प्राप्तुं समर्थो भवति ।
(२) वैदिकेभ्यो मन्त्रेभ्यः किंचित् प्रापणस्यायमेवाभिप्रायः यत् तेषु वर्णितानां गुप्तानामगुप्तानाम्वाध्यात्मिकरहस्याणां मननं भवेत् ।
(३) सर्वेषु मन्त्रेष्वध्यात्मविद्यायाः कस्यचिद्रहस्यस्य वर्णनमवश्यमेवास्ति । यथा चोक्तमुपनिषदि–

सर्वे वेदाः यत् पदमामनन्ति—
कठ ।

सर्वेऽपि वैदिकाः मन्त्राः यस्याध्यात्मपदस्य पौनःपुन्येन यत्र तत्र च वर्णनं कुर्वन्ति, यस्य प्राप्त्यर्थं च ब्रह्मचर्यव्रतस्यानुष्ठानं वर्णयन्ति, तपश्चर्यां च कर्तव्यत्वेन नोपदिशन्ति–तत्त्वोंकारस्योपासनमेवास्ति ।

(४) अध्यात्मविज्ञानं विना सर्वाणि विज्ञानानि सर्वाश्च विद्याः सर्वं च कलाकौशलं सर्वथापि निरर्थकमेवास्ति । अध्यात्मोपासनं विहायानात्मचिन्तनं मनुष्यजन्मग्रहणस्य सर्वथापि दुरुपयोग एवास्तीति भावः ।
(५) मनुष्यजन्मनः साफल्यं, वेदाध्ययनस्य वा यथार्थो लाभः मोक्षावाप्तिरेवास्ति ।
(६) मुक्तावस्थायां नैरन्तर्येण सुखमेवास्ति, वास्तविकी शान्तिश्च तत्र निहिता वर्तते । सा च परब्रह्मणः परमेश्वरस्य सान्निध्यात् सामीप्यादेवानुभूयते ।
(७) मोक्षावस्थायां या शान्तिः यश्चानन्दोऽनुभूयते जीवात्मना, नास्मै जीवात्मनः स्वकीयो गुणः—स तु परब्रह्मणः परमेश्वरस्यैव स्वाभाविको गुणो वर्तते यथा चोक्तम् तैत्तिरीयोपनिषदि—

'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन'
तै० ।

किं बहुना, एतानि चतुर्दश मितानि तत्त्वानि प्रत्यक्षीकृत्यैव कस्यापि वेदस्य कस्यचिदपि मन्त्रस्यार्थचिन्तनं क्रियते चेत् तदा सर्वेऽपि मन्त्राः कस्यचिदप्याध्यात्मिकस्य रहस्यस्य प्रकाशकाः भवन्तीति सुतरां सिद्ध्यति । एतदेव कारणं यत्–सनत्कुमारोद्दालक याज्ञवल्क्यपिप्पलादप्रभृतिभिः परमर्षिभिः वेदार्थचिन्तनानन्तरमुपनिषत्सु परमोत्तमानामाध्यात्मिकानां रहस्यानामुद्घाटनं कृतम् । तैः प्रतिपादितम् – जगतां मूले परमात्मतत्त्वं विद्यते, जीवात्मा चैकः स्वतन्त्रसत्तावच्चेतनं तत्त्वमस्ति । स च शरीरेन्द्रियमनः प्राणादिभ्यः सत्तां स्फूर्तिं च प्रदाय जीवनाय कल्पयति । जीवात्मनश्च सर्वेऽपि योगक्षेमादयः परमेश्वराधीनाः वर्तन्ते । परमेश्वराधीनमेव जगतामुत्पतिस्थितिलयादिकं चेति स एव जगतामुत्पादकः धारकःसं-

हारकश्चेति भावः ।

मुनीनामग्रगण्येण गौतमेन तार्किकसार्वभौमेन च कणादेन वेदस्य स्वतः प्रामाण्यं स्वीकुर्वता स्वकीयस्य न्यायशास्त्रस्य तर्कशास्त्रस्य चाध्यात्मविद्येति द्वितीयं नाम निर्धारितमित्यपि दार्शनिकाः कथयन्ति । यथा हि नैयायिकमूर्धन्येनाचार्यवर्येणोदयानाचार्येण स्वकीये न्यायकुसुमांजलिप्रकरणे समादिष्टं वर्तते—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ।।

अर्थात्– इयं तावन्न्यायचर्चा परमेश्वरस्य मननमात्रमेवास्ति वेदमन्त्राणां श्रवण कृत्वा तदनन्तरं यदनुमानादिप्रमाणैः मननं, तत्तु परमेश्वरोपासनमेव क्रियते ।

सिद्धशिरोमणिना कपिलमुनिना स्वकीये सांख्यशास्त्रे, महामुनिना च पतंजलिमहोदयेन स्वकीये योगशास्त्रे जगत आत्मनश्च सम्बन्धे आत्मनः मनसश्च सम्बन्धे यद्गाम्भीर्यसमन्वितं विचार्य वैदिक्या अध्यात्मविद्यायाः रहस्योद्घाटनं कृतं, पदे पदे च वेदानां प्रामाण्यं स्वीकृतं तच्च लोके सर्वत्र प्रसिद्धमेवास्ति ।

एवमेव ब्रह्मसूत्रकृता ब्रह्मर्षिणा व्यासेनापि वेदान्तदर्शने परमात्मजीवात्मनोः सम्बन्धमुद्दिश्य यदुपदिष्टम् यच्च मीमांसमानेन जैमिनिना मुनिना मीमांसदर्शने जीवात्मनः कर्मफलमुद्दिश्य प्रतिपादितं तदपि विद्वांसः सम्यक् जानन्त्येव ।

वयं तु सुदृढ़तयाततरां च विश्वसिमः-यद्दर्शनशास्त्रकृद्भिः महर्षिवर्यैः स्वकीयेषु दर्शनशास्त्रेषु ये ये मुख्याः विषयाः प्रतिपादिताः सन्ति, ते सर्वेऽपि विषयाः कस्मिंश्चिदपि वैदिके मन्त्रेऽवश्यमेव वर्णिताः वर्तन्ते । यद्यपि सर्वेषामेव दर्शनानां सर्वेषाञ्च तत्तद्विषयाणां वेदमूलकत्वसाधनन्नास्त्युद्देश्यमस्य लेखस्य तथापि कांश्चिद्विषयानभिलक्ष्य वैदिकानि प्रमाणानि तत्तत्विषयपोषकरूपेणावश्यमुपस्थापयिष्यन्ते–यतो हि ये सज्जनाः जिज्ञासवश्च वेदेषु अध्यात्मविज्ञानं न मन्वते, तेषां यथा तथा सन्तुष्टिः सम्पद्येतेति प्रयत्यते ।

## १. ब्रह्मज्ञानम्

न तं विदाथ य इमा जजान,
अन्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृताः जल्प्याश्,
चासुतृप उक्थशासश्चरन्ति ।।

यजु० १७ । ३१

अस्यायमर्थः–न तावद्यूयं तं परमेश्वरं याथातथ्यतया जानीथ, येन परमेश्वरेणैकेनैव सता सर्वशक्तिमत्तया सर्वा इमे लोका उत्पादिताः । स परमेश्वरः युष्मत्तः सर्वथापि भिन्नसत्ताको वर्तते, वर्तते च युष्माकमन्तर्हृदये । युष्माकमन्तःकरणेऽन्तर्यामिस्वरूपेण सदैव वर्तमानोऽस्तीति भावः ।

कस्मात्कारणाद्यूयं सन्तमप्यन्तर्हृदये परमेश्वरन्न जानीथ–इति जिज्ञासायां मन्त्रः समादधाति, दर्शयति च दोषान् मन्त्रो वदति-एतेषां बुद्धिसु मनःसु चोपर्यज्ञानान्धकारः समावृतो वर्तते, एते च वितण्डावादे व्यर्थमेव विवदन्तः सन्तः यथार्थंतत्त्वमेव विज्ञातुन्नेच्छन्ति । न केवलमेतदेवापितु शरीरस्य वेशभूषाभूषणे सर्वदैव समयं यापयन्त इन्द्रियतर्पणं कुर्वन्तः भोगविलासस्य सामग्रीं च सम्पादयन्तः सम्यगुपार्जयन्तश्च जीवनं समापयन्ति । केचिच्च भाषणसम्भाषणे कथोपकथने च परमं सुखं मन्यमानाः दन्द्रम्यमाणा इतस्ततः प्रचरन्त दृश्यन्ते स्वात्मकल्याणाय विविक्तदेशसेवनं वैराग्यानुष्ठानं तु स्वप्नेऽपि नानुतिष्ठन्ति । अन्यच्च—

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।

तमेव विदित्वाति मृत्युमेति,
नान्यः पन्था विद्यतेऽयनाय ॥
यजु० ।

ज्ञानी भक्तश्चिन्तयति – मया सम्यक्तया विज्ञातम् यत् परमेश्वरः सर्वत्र परिपूर्णो विद्यते, विद्यते च सर्वान्तर्यामितया सर्वव्यापकतया च सर्वेषु पदार्थेषु, यथादित्यः सर्वोपरि विराजते, विराजते तथैव परमेश्वरोऽपि सर्वेभ्यो लोकेभ्यः सर्वेभ्यः पदार्थेभ्यश्चोपरि । यथा चायमादित्यः सकलस्य सौर्यमण्डलस्यैकमात्रमाधारोऽस्ति, तथैव परमेश्वरोऽपि सकलस्यास्य संसारस्यैकमात्रमाधारोऽस्ति । किं बहुना, यथायमादित्यस्तमोभूतादन्धकारात् सर्वथापि विरहितो विद्यते, विद्यते तथैव परमेश्वरोऽपि क्लेशकर्मविपाकाशयैरपरामृष्टोऽविद्यान्धकारलेशात् सर्वथा विरहितश्च । तं परमेश्वरमेवमादित्यवर्णं ज्ञात्वैव भक्तिमान् पुरुषः मृत्युपाशान्मुक्तो भवितुं शक्नोति, यतोहि मोक्षावाप्तचै परमस्यै च शान्त्यै ब्रह्मणो यथार्थ ज्ञानमेव प्रधानं कारणमस्ति अन्यत् किमपि मोक्षसाधनं नास्तीति भावः ।

मन्त्रभावं मनसि निधाय त्वेतदपि शक्यते निर्भीकतया वक्तुं यत् ये तावत् परमेश्वरस्य परमादरणीयां परमपावनीयां च नित्यां सत्तां निषेधमाणाः बुद्धिप्रावीण्यं प्रदर्शयन्ति कथयन्ति चात्मनः मोक्षसिद्धिम् तेषाम् मोक्षसिद्धिस्तु कथमपि सम्भवितुन्न शक्नोति । एतादृशाः नास्तिकाः जैनाः वा स्युः बौद्धाः वा स्युः स्युर्वान्ये केऽपि वैराग्यवन्तः तपश्चर्यां चाचरन्तः सत्यमहिंसां वा भावयन्तः– ईश्वरप्रणिधानमन्तरेण न कोऽपि मुक्तिं प्राप्तुं समर्थो भवतीति मन्त्रस्य हृदयम् ।

एतदपि कदापि न विस्मर्तव्यम् यत् सदाचरणं तपश्चरणं च यथा धर्मस्तथैवेश्वरप्रणिधानं ब्रह्मज्ञानमपि धर्म इति एकस्य स्थानं द्वितीयन्न गृहीतुं शक्नोति, न चैकस्य कार्यमन्येन सम्पादयितुं शक्यम्, यथा पक्षिणः द्वयोः पक्षयोः पृथक् सत्ता भवति भवति च कार्यमपि द्वयोः पृथगेव तथैव धर्मस्य सदाचरणेश्वरप्रणिधानरूपयोः द्वयोः पक्षयोः कार्यमपि सर्वथा परस्परभिन्नमेव वर्तते । यथा च द्वयोः पक्षयोः परस्परसाहाय्यमपेक्ष्यते विहायसि गमनाय, तथैव सदाचरणस्येश्वरप्रणिधानस्य च परस्परसाहाय्यमपेक्ष्यते संसृतिचक्राद्बहिर्निःसरणायोर्ध्वगमनाय च ।

किं बहुना, वेदो वेदयति– ब्रह्मज्ञानमन्तरेण मुक्ति र्न भवतीति । अतः मुमुक्षुणा ब्रह्मज्ञानसम्पादनायावश्यं प्रयतितव्यमेव ।

## २. आत्म ज्ञानम्

को ददर्श प्रथमं जायमानम् ।
अस्थन्वन्तं यदनस्था बिभर्ति ॥
भूम्या असुरसृक् आत्मा क्वस्वित् ।
को विद्वांसमुपगात् प्रष्टुमेतत् ॥
ऋग्वेद–१–१६४–४

मन्त्रार्थः– कोऽसौ महाभागोऽस्ति येनास्यास्थिपञ्जरस्य शरीरस्योत्पत्तेरपि पूर्वं वर्तमानस्यात्मनः साक्षात्कारः कृतो भवेत् । अयमेवासौ चैतन्यसम्पन्न आत्मास्ति य अस्थिमांसरक्तादिभ्यः सर्वथा विरहितः सन्नपि रक्तमांसास्थिसंघातरूपं शरीरं रक्तमांसास्थिप्रभृतिभिः पोषयन् परिपालयन् संवर्धयंश्चास्ते । अहो कियदाश्चर्यं वर्तते यदयमात्मा शरीरमस्थन्वन्तं करोति क्षणे क्षणे च मांसादिभिस्तत् संवर्धयति स्वयं चानस्था वर्तते इति ।

विचार्यते – मांसरक्तास्थिप्रभृतयः प्राणादयः प्राणाश्च भूमिजलाग्निवाय्वाकाशादिभ्यः स्थूलभूतेभ्यः शरीरे समागच्छन्ति । सत्यमेतत्तथापि

चेतनात्मा कुतः कस्माद्वा कारणात् समागच्छति शरीरे— तस्यागमनमपि किंचित्कारणपूर्वकं भविष्यत्येव, तच्च किम् । न तावन्मांसादिवत भूम्यादिभूतसम्भूतोऽयमात्मा कथंचिद्भवितुमर्हति । अभौतिकमिदं तत्त्वं भौतिके शरीरे कुत आगतमिति प्रश्नः ।

एतं प्रश्नं प्रष्टुं, ज्ञानपिपासां चात्मिकीमात्मविषयिणीं प्रशमितुं कश्चिज्जिज्ञासुःभूत्वा कस्यचिदात्मज्ञानिनः महात्मनः शरणं गच्छति किम् ? कः गच्छति कश्च गमिष्यति— इयं तु जिज्ञासैव नोत्पद्यते कस्यचिज्जनस्य हृदये । चेदुत्पद्येत तथापि ज्ञानसम्पन्न आत्मज्ञानो नोपलभ्यते कुत्रचिदपि ।

मन्त्रेऽस्मिन् स्पष्टतयैव निर्दिष्टं विद्यते-- चेतनतत्त्वस्यात्मनः स्वरूपज्ञानार्थं कस्यचित्तत्त्वदर्शिन आत्मदर्शिनः सामीप्यं परममावश्यकं भवतीति । एतदात्मज्ञानं योग्याधिकारिणं सुयोग्यमुपदेष्टारञ्चापेक्षत इति च ।

ये तावत् प्राणं रक्तादिकं च जीवनकारणं मन्यन्ते, मत्वा चात्मसंतोषं लभन्ते, तान् ज्ञानलवदुर्विदग्धान् मन्त्रो वदति-भो भो विचित्र वैज्ञानिकाः ! परीक्षकाश्च ! नात्मवञ्चनं कुरुत शरीरं प्राणं, मनो बुद्धि च चैतन्यदानेन चेतनमिव कुर्वाणः कश्चिदन्य एवास्ति शरीरप्राणमनोबुद्धयादिभ्यो भिन्नश्चैतन्यदाता आत्मेति । आत्मानमेव पृच्छत भोः—कुत आगतः कथं चागतः कया वा रीत्या समागतोऽयमात्मा कीदृग्गुणकर्मस्वभावश्चेति ।

एतस्मिन् विषये दयालुर्भूत्वा मन्त्रः पुनर्वदति—

अनच्छये तुरगातु जीव-
मेदृजध्रुवं मध्य आपस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभि
रमर्त्यो मर्त्येना सयोनिः ।।

ऋग्वेद— १-१६४-३०

मन्त्रार्थः— अयं जीवात्मा स्वकीययाद्भुतया विचित्रया च शक्त्यैकं शरीरं परित्यज्यान्यस्मिन् शरीरे प्रविशति । प्रविश्य च तस्य शरीरस्येन्द्रियाणि सञ्चालयति । यदा चायमात्मा शरीरं परित्यज्य बहिः निःसरति तदा शरीरं निःसत्त्वं भूत्वा चैतन्यशून्यं मृतं भवति । आत्मा तु मृत्योः प्रहारात्सर्वथापि दूरंगमो वर्तते— सर्वथाजरोऽमरोऽस्तीति,

जीवात्मन बह्व्यः शक्तयः सन्ति याः स्वाभाविक्यः सत्यः सदैवात्मनः सहयोगं लभन्ते—शरीरधारणकाले जीवात्मना सह वर्तन्ते, वर्तन्ते च जीवात्मना सहैव शरीरत्यागकाले । न कदापि ताः जीवात्मानं जहतीति भावः ।

एवमेवान्येऽपि बहवो वेदमन्त्राः विद्यन्ते येषु जीवात्मनः शरीरेन्द्रियादिभ्यः सर्वथापि पृथक्त्वं प्रदर्शितम् । यथा—

तव शरीरं पतयिष्णुरर्वन्
तव चित्तं वात इव ध्रजीयान्०

ऋग्वेदे ।

अस्मिन् मन्त्रे प्रतिपादितमस्ति, हे अर्वन् ! अनेकेषु शरीरेषु परिभ्रमणशीलजीवात्मन् ! तवेदं शरीर पतयिष्णु वर्ततेऽर्थात् पतनमरणशीलं विद्यते । त्वमिदं शरीरन्नासि किन्तु त्वमस्य स्वामी वर्तसे— तवेदन्न तु त्वमिदमेतद्दर्शयितुं तवेति षष्ठी व्यपदेशेन सूच्यते सूच्यते च चित्तस्यापि पृथक्त्वमात्मनः तवेति निर्देशादेव ।

अन्यत्रापि वेदे निगदितम्मनसोऽपि पृथक्त्वं जीवात्मनः— "तन्मे मनः शिवसंकल्पमस्तु"— इति निर्देशात् । मनोविज्ञानमपि केषुचिन्मन्त्रेषूपलभ्यमानं दृश्यत इत्यपि न विस्मरणीयम् ।

## ३· मनोविज्ञानम्

शरीरादात्मनश्च मनसः पृथक्त्वप्रतिपाद-

तमेव न त्यावश्यकमपितु मनसः पृथक्त्वप्रतिपत्ति हेतवोऽपि दर्शनीयाः, प्रदर्शनीयाश्च मनसो विशिष्टकार्यप्रणालयोऽपीति निपुणं वर्णयन्त्यः श्रुतय उपदिशन्ति । यथाहि याजुषेषु शिवसंकल्पमन्त्रेषु निर्दिष्टमस्ति—

ज्योतिषां ज्योतिरेकम्– शरीरे तावद्यानीन्द्रियाणि सन्ति तानि विषयप्रकाशकत्वाज्ज्योतींषि कथ्यन्ते । तेषामिन्द्रियाणां विषयप्रकाशकत्वमपि तावन्न सिद्ध्यति, यावदन्यत् किंचिज्ज्योतिः साहाय्यं न करोति । तच्च मन एवास्ति तदधीनत्वादिन्द्रियकार्यजातस्य । एकस्मिन् शरीरे बहूनीन्द्रियाणि भवन्ति मनस्तु प्रतिशरीरं भिन्नं चैकञ्च भवति । येनेन्द्रियेण यस्य विषयस्य ज्ञानं भवति, न भवति तेनैवेन्द्रियेणान्यस्य कस्यचिद्विषयस्य ज्ञानम् । परं मनसा तु न केवलं सर्वेषामिन्द्रियाणामेव विषयाः गृह्यन्ते, गृह्यन्ते चापि ज्ञानसुखादय आत्मनोऽपि गुणाः– इत्यपि न विस्मर्तव्यम् । किं बहुना, परमात्मन आनन्दस्यापि ग्रहणं मनसैव भवति ।

यस्मान्न ऋते किंचन कर्म क्रियते— मन्त्रभागेनानेन सुतरान्निवेद्यते मनसः प्रधानकार्यकारित्वम् । कस्यचिदपि कार्यकलापस्य ज्ञानेन्द्रियं कर्मेन्द्रियं वा करणं भवति । परं तत्तदिन्द्रियेण सह मनसो योगस्तत्तत्कर्मकरणाय परमावश्यक इति मनसः प्रधानकार्यकारित्वं द्रढ़यति । अत एव शक्यते वक्तुन्न मनसो विना किंचिदपि कर्म कर्तुं पार्यते ।

येन कर्माण्यपसो मनीषिणो
यज्ञे कृण्वन्ति विदथेषु धीराः ।।
यदपूर्वं यक्षमन्तः प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ।।
यजुर्वेदे ३४-२

मन्त्रार्थः– येन साधनेन महान्तो विचारवन्तो विद्वांसः विविधानि यज्ञादीनि कर्माणि कुर्वन्ति, ज्ञानिनो विज्ञानिनश्च ज्ञानमुपयुंजन्ते– तत् साधनं मन एवास्ति । तस्य च मनसः स्थानं सर्वेषां प्राणिनां शरीरान्तर्वर्ति वर्तते । तदन्तः स्थित्वैव बहूनि विचित्राणि कार्याणि सम्पादयति । एतादृशं मामकं मनः सर्वथापि कल्याणकरं भवतु– शुभानामेव संकल्पानां जनकं भवत्विति भावः ।

हृत्प्रतिष्ठं यदजिरं जविष्ठम्–
यजुर्वेदे ३४–५

मनसः स्वरूपं स्थितिं च स्थापयता मन्त्रेण सूच्यते इदं मनस्तत्त्वं हृद्देशे प्रतिष्ठितं वर्तते । यथा चक्षुः श्रोत्रादीनीन्द्रियाणि किंचिद्गोलकमाश्रित्यैव प्रवर्तन्ते, तथैव मनोऽपि स्वकीयं गोलकं हृदयदेशमाश्रित्यैव प्रवर्तते, स्वकीयं कार्यं च कुरुते ।

अजिरम्–शरीरं जीर्णंभूत्वा विनश्यति, मनस्तु न तथा विनश्यति । शरीरनाशानन्तरमपि मनसः स्थितिः शिष्टा भवति । एतस्मादेव कारणादन्यस्मिन् जन्मनि जीवात्मना सह मनोऽपि गच्छति ।

जविष्ठम्– येऽपि भौतिकाः पदार्थाः वेगवन्तो वर्तन्ते तेभ्यः सर्वेभ्योऽतितरास्मन एव बलिष्ठः जविष्ठश्च वर्तते ।

किमधिकम् ! अध्यात्मविज्ञानेन सम्बद्धाः पुनर्जन्ममोक्षादयोऽन्येऽपि सूक्ष्मातिसूक्ष्माः विषयाः वेदेषु विशदतया वर्णिताः विद्यन्ते । अध्यात्मविज्ञानरसिकैस्तत्त्वज्ञानाभिलाषिभिः वेदेषु यत्र तत्रोपलब्धुं यत्यते चेत्तदा तत्तद्विषयकं ज्ञानमपि शक्यते प्राप्तुमिति शम् ।

—०—

# वेदपुरुषस्तुतिः

## ( शिखरिणी वृत्तम् )

(. स्तोता–श्री पं० विद्यानिधिः शास्त्री व्याकरणाचार्यः, प्राध्यापकः गुरुकुल भैंसवाल कलां )

स्फुटं सृष्टेरादौ प्रकटतममाधौतकलुषं
समा बिभ्रत् संज्ञा भगवदुदितं ज्ञानममलम् ।
अनिन्द्यः सम्बन्ध्यः सततमभिनन्द्यः कृतधियां
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।१।

समाम्नायः साम्नां मधुमधुरधाम्नां सयजुषाम्
ऋचां यत्र श्रेयो दधदनवगेयो विलसति ।
अथाथर्वा दध्यङ् प्रकटयति सध्र्यङ् मुदमसौ
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।२।

निधिः सद्विद्यानां स्फुरति सकलानामविकलश्
चिरं श्लाघ्यः पुण्यः शुभकृतिषु गुण्यः प्रणयवान् ।
जहत्स्वार्थान् सार्थान् प्रतिपदपदार्थानुपनमन्
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।३।

यदीया कल्याणी सरसयति वाणी सुललिता
स्तुतिः पूजा भक्ति प्रथयति च शक्ति तनुभृताम् ।
मनोयन्त्रैर्मन्त्रैः शुचिरुचिरतन्त्रैः परिगतो
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।४।

न कश्चिद् यस्यालं भवितुमुपमालंकृतिमलः
तथा धन्यो मान्यः प्रभवति न चान्यस्त्रिभुवने ।
लसन्मित्रं चित्रं सदिव सुचरित्रं प्रतिदिशन्
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।५।

प्रतीक्ष्यं सर्वेषां प्रथममृषिरेषां सुविदुषां
यमग्निर्वायुर्वा भुवि रविरथर्वा च दुदुहे ।
स्वयंज्योतिर्मूर्त्या स्वरसरसपूर्त्या स सुखयन्
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।६।

प्रशस्तं विज्ञानं स्थिरमतिनिधानं विशदयन्
समस्तं ब्रह्माण्डं विपुलबलभाण्डं विमलयन् ।
प्रियैः पूतप्रज्ञैः श्रुतविविधयज्ञैरुपचितो
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।७।

नितान्तं दुर्भेदः प्रतिविहितखेदः शिखरिणीं
यशोमल्लीवल्लीं त्रिजगति मतल्लीं कलयति ।
सहोपाङ्गैरङ्गैश्चतुरविकृताङ्गैः सुविवृतो
महोच्चैः शोभावान् जयति भगवान् वेदपुरुषः ।८।

---:o:---

# वैदिकी राज्यव्यवस्था

श्री० डा० सूर्यकान्तः अलीगढ़विश्वविद्यालयः

वैदिकं युगं मानवसभ्यतायाः संस्कृतेश्च उषःकालीनयाऽऽभया चमत्कृतः कश्चित् स्पृहणीय एव समय आसीत्। तत्कालीना राज्यव्यवस्था सर्वेभ्योऽपि स्वातन्त्र्यस्पृहयालुभ्यो नितरां मनोरमा प्रेरणाप्रदा च भवेदित्यस्ति मे द्रढीयान् विश्वासः।

वैदिका आर्या "जनेषु" संघटिता आसन् यथा तेषामेव भ्रातरो ग्रीकदेशीया 'डीमोस्' (Demos) इत्याख्येषु गणेषु विभक्ता आसन्। जनानामखिलः समुदायो 'विशः' इति व्याह्रियते स्म। विशामेव प्रमुखो राजासीत्। विशः स्वराजानं परंपरानुसारमैकमत्येन वव्रिरे। यथा चोक्तमथर्ववेदे:—

त्वां विशो वृणतां राज्याय
त्वामिमाः प्रदिशः पञ्चदेवीः॥
२.४.२

विशामेवान्तर्गताः केचन विशिष्टाः सभ्याः 'राजकृतो राजानः' इत्यभिधीयन्ते स्म राज्ञो वरणे चैत एव प्रमुखाः प्रत्यक्षभागिनश्चासन्। एते च स्वयमपि सामन्ता आसन्। एभिरेव वृतो जनः एषां राजा समपद्यत। सूतो ग्रामणीश्चापि राज्ञो वरणे प्रमुखावास्ताम्। नृपत्वाभिलाषी नरपुंगवः प्रार्थयते:—

ये राजानो राजकृतः
सूता ग्रामण्यश्च ये।
उपस्तीनपर्ण मह्यं त्वं
सर्वान् कृण्वभितो जनान्॥
अथर्ववेदे ३.५.६

एते "राजकृतो राजानः" वस्तुतः के आसन्निति तु न प्रदर्शितं संहितासु प्रपञ्चेन। संभाव्यते यद् ब्राह्मणेषु येषां 'रत्नीनाम्' उल्लेख उपलभ्यते त एव "राजकृतो राजानः" इति व्यपदिश्यन्ते स्म। राज्ञे राज्याभिषेकावसरे एकः 'पर्णमणिः' प्रदीयते स्म यस्तस्य नृपुंगवस्य बलौजोवर्चसां प्रतीक आसीत्। राजा चाभिषेकावसरे धर्मपूर्वकं प्रजानामनुरञ्जनाय शपथमग्रहीत्। तत्कृते प्रतिज्ञाभङ्गे च विशस्तमपाकृत्य अभिनवराजचितौ पूर्णतयाधिकृता आसन्। परं विदुषां ब्राह्मणानां चोपरि राज्ञोऽधिकारो नासीदिति तु अभिषेकावसरे राजपुरोहितः "सोमोऽस्माकं ब्राह्मणानां राजा" इत्युच्चैः समुदघोषयत्।

जनैर्वृतोऽपि राजा शासनविषये निरङ्कुशो नासीत्। 'सभा' समितिश्चेति द्वे संस्थे तस्य नियामिके आस्ताम्। समितौ सर्वा अपि 'विशः' वादविवादाय स्वतन्त्रा आसन्। इयमेव परिपाटी प्राचीनग्रीसदेशेऽपि प्रथितासीत्। एतादृश्यामेव सभायां तत्रत्या जनता संगत्य स्वराजानं वृणुते स्म। समित्यां तु राजनीत्या साकं ब्रह्मविद्यापरेष्वपि विषयेषु वादविवादोऽजायत। एतासु समितिषु नृपस्याप्युपस्थितिः वाञ्छनीयासीदिति परका उल्लेखा उपलभ्यन्ते।

अथर्ववेदे 'सभा' 'नरिष्ट' शब्देनाभिधीयते। सभाव्यते यत् सभायामनूचाना वृद्धा व्यक्तय एवं संगत्य न्यायचर्चां चक्रिरे। 'नरिष्ट' शब्दव्याख्यावसरे सायणाचार्येणोट्टङ्कितं यद् बहवो जना मिलित्वा यां व्यवस्थामुपजनयेयुः सानुल्लङ्घनीयतामावहति, अतः सभा 'नरिष्ट' (= नृ+इष्ट) इति पदेन व्यवह्रियते।

सभासमितिश्चेति द्वे अपि प्रजापतेरात्मजे—यथा चोक्तं "प्रजापतेर्दुहितरौ संविदानेति।"

सभायां समितौ च विदग्धवक्तुः पूतक्रतोर्ने-

तुश्च सुतरामादर आसीत् तथा चोक्तमृग्वेदे ( x. ७१ )

सर्वे नन्दन्ति यशसागतेन
सभासाहेन सख्या सखायः ।
किल्बिषस्पृत् पितुषणिर्ह्येषाम्
अरंकृतो भवति वाजिनाय ॥

सभ्यानां मतमात्ममतानुकूलं कर्तुं तेषां सांमनस्याय सवचस्त्वाय च अभ्यर्थना क्रियते स्म । सभायां वाक्पाटवप्रदर्शनस्योल्लेखः असकृत् उपलभ्यते । यथा "अथ निर्विदथमावदासि" इति ।

नेतृत्वस्येयं कियत्युत्कटाभिलाषा—

अहं गृभ्णामि मनसा मनांसि
मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः कृणोमि
मम यातमनुवर्त्मान एत ॥

सभायां समितौ च स्वस्वमतं प्रस्तोतुं सर्वेऽपि सभ्याः स्वतन्त्रा आ न्; परमैकमत्येन कृते निर्णये वैदिका आर्याः आस्थावन्तोऽभूवन्निति तु नास्ति वैदिकानां विपश्चितां तिरोहितम् । ऋग्वेदस्यान्तिमे सूक्ते सांमनस्याय प्रार्थना क्रियते:—

सं गच्छध्वं सं वदध्वं
सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे
संजानाना उपासते ॥

तथा च—

समानी व आकूतिः
समाना हृदयानि वः ।
समानमस्तु वो मनो
यथा वः सुसहासति ॥



# विष्णु-देवता

लेo श्री भगवद्दत्त वेदालंकार

## एक सम्मति

'विष्णु देवता' मिली । चित्त प्रसन्न हुआ । आपने विष्णु के संबन्ध में उपलब्ध वैदिक सामग्री के आधार पर वहुत ही अच्छा समन्वयात्मक विचार किया है । विष्णु के त्रेधा विक्रमण के संबन्ध में आपने सूक्ष्म दृष्टि से सोचा है । मुझे इसे देख कर हर्ष हुआ ।

शुभेच्छु
वासुदेवशरण अग्रवाल

## एक सम्मति

'विष्णु-देवता' पर आपको कोटिशः बधाइयां । पुस्तक खूब लिखी है । विष्णु का विष्णुत्व इसमें फड़क उठा है । एक बार फिर बधाई ।

आपका वशंवद
डॉ० सूर्यकान्त

# ईशकरुणात्मवीणावन्दनम्

प्रो० बुद्धदेवः शास्त्री एम. ए.

( १ )

मन्दाकिन्या रुचिरपुलिने तारकाणां विशाला
मालासीना प्रतिपलमधीरप्रतीक्षानिलीना ।
हे मातस्त्वत्पदकमलपूजासुसज्जानिमग्ना
भक्त्याभात्याकुलसकलनीराजनापुष्पहस्ता ॥

( २ )

मार्गाः सर्वे पुलकिततरास्त्वत्पदाम्भोजगन्ध-
संपर्केणानुभवविषया अद्य शून्याः समन्तात् ।
लोकं लोकं मुहुरुभयतो वृक्षमासीनपक्षि-
हर्षाह्वानं समजनि तवाशासु दिव्यप्रकाशम् ॥

( ३ )

दिग्भ्रान्तो जीवननद इवाहं पतित्वा च सानो-
रुच्चैः शैलस्य विजनवनस्यातिदुःखान्यवाप्य ।
शोकावेगेन मलसलिलं पापमाप्यैव याम्य-
श्चाम्भोधेस्त्वं विधुरकरुणाकारिणी पाहि हा माम् ॥

( ४ )

शोकान्तस्तप्तमवनितलं लोकवैरानलात्तद्
दर्शं दर्शं नयनकरुणाम्भोधरादस्रधाराम् ।
उष्णां शीतामपि सृजति शान्ति तनोति प्रतूर्णं
भावाकाशे तरुणकरुणा नित्यसत्यप्रकाशा ॥

( ५ )

आशौषाः सा व्यपगतनिराशःनिशा पूर्व एति
दुर्गन्धद्वेषिकमलसरागः परागश्च यस्याम् ।
आनन्दस्वैरविहरणलीनाः सुभावद्विजा वा
सैषोषा एव तव करुणां प्रत्यहं दर्शयन्ती ॥

( ६ )

शून्याकाशेऽगणितकिरणा भास्करस्य प्रकाशे
कृष्णे कृष्णे जलदपटले ते प्रसादाचिरांशुः ।
अम्भोधानां पतितकरुणामुक्तकं शुक्तिचिते
मुक्ता स्याद्वा सुकविकवितासूक्तिरन्यासदास्ये ॥

( ७ )

चित्ताकाशे नवलनवलं दीपमेकं ज्वलामि
भव्यां यस्याकुलवरशिखामूर्तिमेतां प्रदीप्तां ।
स्नेहं स्नेहं च शलभजना भक्तिभावात्त एत्य
मज्जन्ति स्नेहकलिलशिखाविश्वबन्धुत्वदीप्तौ

( ८ )

अन्धध्वान्ते कलयति दिशामध्वगो विघ्नहीनां
शान्तिमाप्नोत्युपवनमवाप्यार्तिशत्रुं यथा वा ।
नन्दाजस्राश्रुकरुणनदीप्लावनं ते यदा वा
शोकाद्दाहो हृदयभुवने शान्तिमेति प्रतूर्णम् ॥

( ९ )

बाल्येनाहं घृणितवदहंकारधूलीं यदादिम
वात्सल्यात्त्वं धुसरितमुखादंगुलीप्रक्रियातः ।
भक्तानां सर्ववरकरुणे देवते वत्सले नो
हे मातो निर्गमयसि स्वतो बालकस्याविलां ताम् ॥

( १० )

मालायां सा रुचिरशिखराणामगानां विशाला
विद्युन्मालाकलिलजलदानां विभान्ती सुमाला ।
शीतस्पर्शात्करुणकरुणाया अजस्रास्रमालां
त्यक्त्वा गीर्वाणनगरहिमाद्रेस्तनोतीह गंगाम् ॥

( ११ )

धारासारे सजलहृदये मूलशाखाप्ररोहः
हीनैर्भावागणितनलिनीपुष्पगुच्छच्छटाच्छा ।
शुष्के शष्पे तव नयनपीयूषधाराः पतन्ति
दृष्ट्वा मन्ये सकलकरुणाप्राणिचित्र विचित्रम् ॥

( १२ )

आशावल्ली विटपिविटपं पत्रितारुह्य ते सा
शाखाबालांकमभिलषतीव स्वपाणिप्रसारात्-
शुष्कां स्यात्ते जगदननुकम्पाप्रकम्पो निराशा-
भूमीं शुष्काम्ब कलय हि हा हास्यति प्रोच्छ्वसन्ती ॥

——

# श्रीमदरविन्दस्य वेदभाष्यम्

( सागरविश्वविद्यालयायोजिते आधुनिकसंस्कृतसाहित्यपरिसंवादे दत्तं भाषणम् । अस्मिल्लेखे टिप्पण्यःभाषणगतविषयस्य परिबृंहणार्थमुपोद्बलनार्थञ्च पश्चान्निवेशिताः । ता भाषणे उदीरितस्य विषयस्यैव प्रपञ्चमात्रम् । )

सागरविश्वविद्यालयेन आयोजिते अस्मिन् विद्वत्सम्मेलने अस्यां चिन्तनगोष्ठ्यां वा अहं श्रीमदरविन्दस्य संस्कृतसेवाया वर्णनार्थं विशेषतश्च तस्य वेदविषयकविचारस्य निरूपणार्थम् आमन्त्रित इत्येतदर्थम् अहम् आयोजकमहोदयेभ्यः भूयसः धन्यवादान् वितरामि—श्रीअरविन्दाश्रमस्य प्रतिनिधितया आश्रमस्यान्ताराष्ट्रियशिक्षाकेन्द्रस्य प्रतिनिधिरूपेण च धन्यवादततिं वितरामि ।

विदितमेव स्याद् विदितवेदितव्यानां विदुषां यत् श्रीअरविन्देन न केवलं वेदोपनिषद्गीतापुराणादीनां धर्मग्रन्थानां गम्भीरम् अनुशीलनम् कृतं, किन्तु सामान्यतः अभिजातसंस्कृतसाहित्यस्यापि विशालम् अध्ययनं कृत्वा वाल्मीकिवेदव्यासकालिदासानां विषये आंग्लभाषायां मौलिकसमीक्षाग्रन्था लिखिताः । तद्यथा—

Vyasa and Valmiki, Kalidasa, the Hero and the Nymph.

अर्थात् विक्रमोर्वशीयम् The Century of life अर्थात् नीतिशतकम् इत्यादयः तस्य ग्रन्थाः विशेषोल्लेखयोग्याः । इमे ग्रन्थाः संस्कृतभाषाया गरिमाणं गायन्ति, तस्या अमूल्यसम्पदं काव्यसौष्ठवं च कीर्तयन्ति व्यासवाल्मीक्यादिकवीनां विश्वविशालां गहनगभीरां च दृष्टिम् अनुपमकाव्यसृष्टिं च स्तुवन्ति । किन्तु वयमत्र तत्सर्वं कीर्तयितुं न उपस्थिताः । वयन्तावत् केवलं वेदस्य रहस्यार्थगवेषणे श्रीअरविन्दस्य यद् अतुलनीयं योगदानं तदेव संक्षेपेण वर्णयितुमिच्छामः ।

वेदो हि न केवलं वैदिकवाङ्मयस्य किन्तु अस्माकम् सकलस्य लौकिकसाहित्यस्यापि मूलोद्गमतया आद्रियते । ईदृशस्य अस्माकं सम्पूर्णसाहित्यमूलभूतस्य वेदस्य वास्तविकमर्मप्रकाशनार्थम् आधुनिकयुगे श्रीअरविन्देन बृहद् अवदानम् अनुष्ठितम् । तत् अवदानम् श्रीअरविन्द वेदगवेषकाणां वेदभाष्यकाराणां वा परम्परायां प्रथमपंक्तौ प्रतिष्ठापयति । 'On the Veda' नामके स्वग्रन्थे तेन वेदविषयकाः स्वकीया विचाराः सिद्धान्ताश्च विस्तरेण प्रस्थापिताः तदनुसारिणी व्याख्या पद्धतिश्च सुस्पष्टतया निरूपिता । ततश्च तेन Selected Hymns, Hymns of the Atris, Hymns to the Mystic Fire इत्यादिशीर्षकविस्तृतलेखमालारूपेण वेदस्य आध्यात्मिकभाष्यप्रणयनमपि आरब्धमासीत् । ता लेखमाला अधुना ग्रन्थाकारेण प्राप्यन्ते । तेषु ग्रन्थेषु तेन वेदस्य सहस्रशः मन्त्राणामनुवादः विस्तृतव्याख्या वा कृता वर्तते । पश्चात् तस्य दिव्यदृष्ट्या व्याख्यारीत्या च प्रेरितः ब्रह्मश्रीकपालिशास्त्री संस्कृतभाषया शास्त्रीयरीत्या ऋग्भाष्यभूमिकां ऋग्वेदस्य प्रथमाष्टकभाष्यं च प्रणीतवान् । अनया दृष्ट्या श्रीअरविन्दस्य वेदानुसन्धानं संस्कृतसाहित्यक्षेत्रे आधुनिक प्रगतिषु अग्रगण्यम् । अत एवाहमाशासे यत् श्रीअरविन्देन वेदस्य नूतनव्याख्यां कृत्वा, अपि च कपालिशास्त्रिसदृशपण्डितेभ्यः वेदस्य नूतनभाष्यरचनाया प्रेरणां दत्वा संस्कृतसाहित्यप्रगतौ यत् योगदानं कृतं तस्य सम्यङ्मूल्यांकनं करिष्यन्ति भवन्तः सर्वेऽपि अत्रोपस्थिता विद्वांसः । एतावदुक्त्वा अहं तस्य वैदिकगवेषणाकर्म किंचित् कीर्तयामि ।

वेदस्य वास्तविकविचारैः सह श्रीअरविन्दस्य प्रथमपरिचयः कथं सञ्जात इत्यस्मिन् विषयेऽसौ On the Veda नामके स्वग्रन्थे एकं रोचकं स्वानुभवं वर्णयति । तेन ज्ञायते यद् वेदाध्ययनात्

प्रागेव तस्य वैदिकदेवतानां साक्षात्कारः भवति स्म, तेषां प्रतीकात्मकं स्वरूपं च स्फुरति स्म। स लिखति यदाऽहं भारतीययोगविधिना आत्मविकासार्थं यतमान आसम् तदा मम मनसि प्रतीकानाम् एका शृङ्खला स्वत एव, अन्तरत एव उद्भवितुम् आरब्धा। तानि प्रतीकानि मम आध्यात्मिकानुभवैः सह संबद्धानि आसन्। ते अनुभवाः, प्रतीकानां ताः स्फुरणाश्च मम योगसाधनासमये नियमतः भवन्ति स्म। तेष्वनुभवेषु एकदा इडा-सरस्वती-सरमानामिकानां देवतानाम् अर्थात् स्त्रीलिङ्गीय–दिव्यशक्तीनां प्रतीकानि अपि मत्समक्षं प्रकटीभूतानि। ताः शक्तयः अन्तर्ज्ञानमयबुद्धेः ( Intuitive reason ) तिस्रः शक्तीः द्योतयन्ति स्म। अर्थात् ताः स्वतः प्रकाशस्य अन्तः प्रेरणाया अन्तर्ज्ञानस्य च शक्तयः आसन् या आंग्लभाषायां Revelation, Inspiration, Intuition इति शब्दैः उच्यन्ते। इला, सरस्वती, सरमा इत्यासु प्रथमे द्वे अर्थात् इला, सरस्वती च वैदिकदेव्योः नाम्नी इत्यपि अहं तदा सम्यक् न अजानाम्। अहन्तु प्रचलितहिन्दुधर्मानुसारं प्राचीनपौराणिककथानकानुसारम् वा सरस्वतीं विद्याया देवीम् एव अजानाम् इलां च चन्द्रवंशस्य मातरम्। परं सरमया सह मम पर्याप्तपरिचय आसीत्। सरमा देवशुनी स्वर्गस्य सारमेयी वा मन्यते इति मया ज्ञायते स्म। एवं सत्यपि सरमाया या आकृतिः आध्यात्मिकानुभूतौ मम अन्तःकरणे नामसहितं स्फुरिता तया सह स्वर्गस्य सारमेय्याः सम्बन्धम् अवबोद्धुम् अहं न अशकम्। अहम् सरमां ग्रीकदेवी-हेलेन (Helen) वत् स्थूलोषसः रूपकस्य द्योतिकाम् अमन्ये।

किन्तु पश्चात् प्रत्यक्षाऽन्तरनुभूतिबलेन मया स्पष्टतयाऽनुभूतं यत् इला सरस्वती सरमा दक्षिणा चेति चतस्रो देव्यः आध्यात्मिकप्रतीकान्येव। इमा ऋतस्य सत्यचेतनाया वा चतस्रः शक्तीर्द्योतयन्ति। या चेतना उपनिषत्सु विज्ञानमयकोषत्वेन वर्णिता तस्या एव इमाः चतस्रः शक्तयः। तत्र इडा सत्यदर्शनं दिव्यस्वतःप्रकाशं वा सूचयति, सरस्वती सत्यश्रवणं दिव्याम् अन्तःप्रेरणां दिव्यवाणीं वा द्योतयति, सरमा दिव्यम् अन्तर्ज्ञानं दक्षिणा च अन्तर्ज्ञानमयविवेकं बोधयति। प्राचीनपरिभाषया इमा क्रमशः दृष्टिः, श्रुतिः, स्मृतिः, स्मार्त्तविवेक इत्येवम् अभिधीयन्ते। आसु इलासरस्वत्योः उल्लेखः एकयाऽन्यदेव्या महीनामिकया सह एकस्मिन् प्रसिद्धमन्त्रे दृश्यते—

इला सरस्वती मही तिस्रो देवीर्मयोभुवः।
बर्हि सीदन्त्वस्रिधः॥

ऋ. १. १३. ९॥

इत्थमस्माभिः दृष्टं यद् वेदानुशीलनस्य प्रारम्भादपि प्राक् श्रीअरविन्दस्य वैदिकदेवतानां साक्षात्कारः संजातः तासामाध्यात्मिकप्रतीकात्मकस्वरूपस्य स्फुरणा च संवृत्ता। देवानामयं साक्षात्कारः तेषां प्रतीकात्मकस्वरूपस्य इय स्फुरणा च तस्य तथैव संजाता यथा सृष्टेरादिकाले अग्निः, वायुः, आदित्यः, अङ्गिराः इति नामकानां महर्षीणामन्तः–करणे ऋग्वेद-यजुर्वेद-सामवेदाथर्ववेदानां मन्त्राः स्फुरिताः, तेषां प्रतीकात्मका अर्थाश्च प्रतिभाताः। अतः श्रीअरविन्दमहर्षिणा अन्तरनुभूतिबलेन वेदस्य यो रहस्यार्थ आविष्कृतः वेदव्याख्याया या पद्धतिश्च प्रवर्तिता सा स्वतः–प्रमाणा, निर्भ्रान्ता, परममान्या च इत्यत्र नास्ति मे स्वल्पोऽपि सन्देहः।

अधुना प्रश्नोऽयं जागर्ति यत् कोऽसौ रहस्यार्थः यस्तेन आविष्कृतः का च तस्य भाष्यपद्धतिः। तत् सम्प्रति पश्यामः।

प्रत्येकं वेदमन्त्रस्य त्रिविध: अर्थ: सम्भवति.... आध्यात्मिक:, आधिभौतिक:, आधिदैविकश्चेति अयं परम्परागत: सिद्धान्त: । एषु अर्थेषु सम्भवत्स्वपि सर्वासाम् ऋचां मुख्य: प्रतिपाद्योऽर्थ: आध्यात्मिक एव इति श्रीमहर्षेररविन्दस्य मतम् । किन्तु वेदानां य: कोऽपि अर्थ:, या कापि व्याख्या क्रियेत तदर्थं वैदिकदेवतानां स्वरूपज्ञानमपरिहार्यम् । वैदिक-देवतानां किं स्वरूपमित्यत्र श्रीअरविन्दपादा एवमाहु: . . . . वेदमन्त्राणां बाह्ये आधिभौतिकेऽर्थे देवता भौतिकप्रकृते: सार्वभौमशक्तय: सन्ति । ताश्च मूर्तिमत्य: पृथक्पृथग्व्यक्तित्वशालिन्यश्च । अर्थात् अस्य स्थूलाग्ने: पृष्ठत: अस्ति काऽपि मूर्तिमती विशिष्टव्यक्तित्ववती च विराड् अग्निशक्ति:, बाह्यसूर्यस्य पृष्ठत: अस्ति काचित् मूर्तिमती विशिष्ट-व्यक्तित्ववती च विराट् प्रकाशशक्ति: । किन्तु वेदस्य अन्तरर्थे देवता: प्रकृते: सार्वभौमा आन्तरिकशक्तय:, विराट्संकल्पशक्तिमन:शक्ति-प्रभृतय: सन्ति । आसां दिव्यविराडन्त: शक्तीनां साहाय्येनैव प्रकृति: अस्माकम् आभ्यन्तरव्यापारेषु क्रियां करोति ।

आसां देवतानाम् आध्यात्मिकं स्वरूपं कार्य-व्यापारादिकं च श्रीअरविन्देन अन्तर्दर्शनद्वारा साक्षात्कृत्य Selected Hymns नामके ग्रन्थे विस्तरेण निरूपितम् तदनुसारम् अग्नि: भागवत-संकल्पशक्तेर्विराट् संकल्पशक्ते र्वाऽधिष्ठातृदेव: अर्थात्——

He is the Lord of Will, the Divine Will-force or Cosmic Will-force.

एवमेव इन्द्र: दिव्यमनसोऽधिपतिरधिष्ठाता वा, स दिव्यप्रकाशस्य दाता, मरुत: तस्य इन्द्रस्य शक्तय:, अर्थाद् दिव्यमनस: शक्तयो विचारशक्तयो वा, सूर्य: दिव्यप्रकाशस्याधिपति:, दिव्यसत्यस्य सूर्य: उषा दिव्यज्योतिष:, दिव्यज्ञानस्य दिव्यचैतन्यस्य वा प्रभातस्वरूपा, अश्विनौ आनन्दस्य अधिपती, सोम: आनन्दस्यामृतत्वस्य च अधिष्ठातृदेव इत्यादि ।

देवतानामस्य आध्यात्मिकस्वरूपस्य ज्ञानम् वेदस्य आन्तरिकार्थविवृतये अपरिहार्यम् । एक-मेव वेदस्य रहस्यार्थोद्घाटनार्थं तस्य कुंचीभूतानां प्रधानशब्दानां प्रतीकात्मक: अर्थोऽपि ज्ञातव्य: मनसि निधातव्यश्च, यतो हि वेदस्य शब्दा न केवलं वाचका: किन्तु लाक्षणिका:, सांकेतिका: प्रतीकात्म-काश्च, येषां गूढसंकेतार्थस्य ज्ञानं विना वेदस्य यथार्थरहस्यं ज्ञातुमशक्यम् । अतोऽधुनाहं वेदस्य कांश्चित् प्रतीकात्मकशब्दान् उदाहरामि । वेदे गौ:, अश्व:, घृतम्, ऋतम्, वनम्, आप:, धी:, रत्नम्, रयि, राध:, क्रतु:, श्रव:, कवि: इत्यादयो बहव: प्रतीकात्मका: शब्दा दृश्यन्ते । श्रीअरविन्दचरणा अन्त:साक्षात्कारबलेन वेदस्य अन्त:साक्ष्येण च आहु: यद् आध्यात्मिकार्थे 'गो' पदं सर्वत्र दिव्यप्रकाशस्य प्रतीकम् । सायणोऽपि क्वचित् अस्य शब्दस्य 'प्रकाश:' प्रकाशरश्मि:' इति अर्थं करोति । किन्तु सायणस्य भाष्ये सत्स्वपि कतिपयगुणेष्विदमेकं महद् दूषणं यत् स एकस्यैव शब्दस्य विभिन्नस्थलेषु स्वेच्छानुसारं विभिन्नार्थान् करोति । सर्वत्र कर्म-काण्डपरकार्थकरणाय बद्धपरिकर: पूर्वग्रहदूषित-श्चासौ शब्दस्यार्थं विपरिवर्तयति निरंकुशतया । तद्यथा एकस्यैव ऋतशब्दस्य स एकत्र जलम्, अन्यत्र यज्ञ:, अपरत्र अन्नम्, इतरत्र सत्यम् क्वचिच्च गतम् इति अर्थं करोति ।१ तत्र श्रीअरविन्द: कथयति

---

१. अनेकस्थलेषु तेनापि गो-ऋत-घृतप्रभृतिपदानां 'प्रकाशसत्य-दीप्त्यादिरूप' आध्यात्मिकार्थ: शरणीकरणीयो भवति अनन्यगतितया । तदेव प्रमाणयति यद् वेदमन्त्रेष्वस्ति किमपि निगूढं रहस्यतत्त्वम् तच्च वैदिकपदानां सहजस्वा-भाविकार्थस्वीकारेण स्वत एवानावृतं जायते, अपि च मन्त्रगतविशेषणपदैरन्यैश्च साभिप्रायै: पदविशेषैस्तदेव तत्त्वं स्पष्टतया संकेत्यते ।

यत् यदि अस्माभिः वेदस्य कोऽपि संगतः प्रामाणिकश्च अर्थः करणीयः तर्हि वेदस्य कुञ्चीभूतविशिष्टं पदानां सुनिश्चिताः अर्था अवश्यं निर्धारणीयाः। अन्यथा वेदार्थविषये दुर्व्यवस्थाऽनवस्था वा सदैव स्थास्यति, अस्तु।

वेदस्य सांकेतिकपदेषु गो-शब्दस्यार्थोऽस्माभि निरूपितः। सम्प्रति अन्यान् कतिपयशब्दान् विचारयामः। यथा वेदे 'गो' शब्दः प्रकाशस्य प्रतीकं तथैव 'अश्व' शब्दः शक्तेः। लोकेऽपि अश्वः शक्तेर्मापकः सूचकश्च स्वीक्रियते। अश्वशक्तिः ( Horse power ) इति पारिभाषिकप्रयोगेणेदं विशदमेव यत् अश्वेन शक्ति र्मीयते सूच्यते च। वैदिककालेऽपि अश्व-शब्दः शक्तेः संकेतकत्वेन व्यवह्रियते स्म।

एवमेव 'घृतं' वेदमन्त्रेषु मानसिकनिर्मलताया मनसो निर्मलप्रकाशस्य वा द्योतकम्, 'ऋत' दिव्यसत्यस्य 'वनं' च आनन्दस्य बोधकम्। आपः चिन्मयसत्ताया वृष्टिधाराः, दिव्यसत्तायाः सत्यस्य चैतन्यस्य आनन्दस्य च दिव्यवृष्टिरेव वेदे आपः, नद्यः, सिन्धवः, मातरः इत्यादिपदैः निर्दिष्टा तत्र तत्र। रत्नं, रयिः, राध इति शब्दा आनन्दैश्वर्यस्य बोधकाः। क्रतुः संकल्पस्य, श्रवः अन्तःश्रवणस्य अन्तःश्रुतज्ञानस्य च द्योतकः। कविशब्दः क्रान्तद्रष्टारम् ऋषिं वा संकेतयति गूढतया।

ईदृशै र्गूढसांकेतिकपदैः रहस्यज्ञानप्रकाशनस्य इयं शैली प्राचीनकाले भारतवर्षे प्रचलिता आसीत्। तस्याः प्रयोजनं च अदीक्षितेभ्योऽनधिकारिभ्यो गुह्यज्ञानस्य निगूहनमेव। मिश्र-यूनान-देशयोरिव भारतेऽपि पुरा गुह्यविद्यायाः भूयान् प्रचारोऽवर्तत सर्वत्र। किन्तु पाश्चात्यविद्वांसः मिश्रदेशे यूनानदेशे च रहस्यविद्यायाः प्रसारं स्वीकुर्वन्तोऽपि भारतेऽस्या अस्तित्वमभ्युपगन्तुं नेच्छन्ति। अहो तेषां पक्षपातकलुषिता बुद्धिः! अहो तेषां पूर्वग्रहदूषिता दृष्टिः! अस्तु।

वेदस्य कतिपयविशेषशब्दानां ये अर्थाः मया निरूपिता ते न कपोलकल्पिताः, प्रत्युत श्रीअरविन्दस्य अन्तरनुभवेन प्रमाणिताः, अथ च व्याकरणेन व्युत्पत्तिशास्त्रबलेन च सुदृढमुपपादयितुं शक्याः; यतो हि वेदस्य शब्दा यौगिका न तु रूढा योगरूढा वा। 'अनेकार्था हि धातवः' इति सायणस्य कथनेनाप्ययमेव सिद्धान्तः समर्थ्यते। श्रीमद्दयानन्दस्वामिनोऽपि वैदिकशब्दान् यौगिकान् मन्यन्ते। श्रीअरविन्दपादाश्च तेषां मतमनुमोदयन्त एवमाहुः स्वामिदयानन्देनास्मभ्यं वेदार्थस्य कुंची प्रदत्ता। सा हि वैदिकपदानां यौगिकार्थकरणस्य कुंची। तया कुंचिकयाऽस्माभिः वेदानां लुप्तार्थस्य पिहितद्वाराणां समुद्घाटने सुमहत् साहाय्यं प्राप्यते।1

---

1. In the matter of Vedic interpretation I am convinced that whatever may be final complete interpretation, Dayananda will be honoured as the first discoverer of the right clues ... ... He has found the keys of the doors that time had closed and rent asunder the seals of the imprisoned fountains.

(Bankim, Tilak, Dayananda–P. 60)

( It was ) the philological and etymological method by which he arrived at his results expecially in his dealings with the names of the God heads.

( Bankim, Tilak, Dayananda—P. 54 )

वेदे इन्द्रः, कण्वः, अंगिराः इति व्यक्तिवाचकनामतया प्रसिद्धेभ्यः शब्देभ्योऽपि तमप्प्रत्ययः प्रयुक्तो दृश्यते। यथा उषा वेदे इन्द्रतमा अंगिरस्तमा चोक्ता, अग्निश्च कण्वतम इति,

तदेवमस्माभि र्वेदस्य कतिपयकुंचीशब्दानां सांकेतिकार्था दृष्टाः, वैदिकदेवतानाम् आध्यात्मिकं स्वरूपं कार्यव्यापारादिकं च किंचिदालोचितम्। एतदुभयं मनसि निधाय यदा वेदः अनुशील्यते तदा तस्य रहस्यार्थः स्वत एव विवृतो भवति। सम्प्रति अयं प्रश्न उपतिष्ठते यत् किं तद् रहस्यज्ञानं यदनयोर्द्वयोः साधनयोः साहाय्येन वेदे सम्प्राप्यते ? तच्चतुर्धा विभज्य वर्णयितुं शक्यम्, अर्थात् तस्य चत्वारि अंगानि तत्त्वानि वा सन्ति।१

(१) तत्र प्रथमम्। वेदानां मन्त्रवर्णेषु इदमाम्नातम् अस्त्येकं परमं सत्यं यदस्माकं बाह्यसत्तायाः सत्याद् गम्भीरतरम् उच्चतरं च, अस्त्येकं ज्योतिः यत् मानवीयबुद्धेरालोकात् बृहत्तरम्, ऊर्ध्वतरं स्वतः प्रकाशं च, अस्ति च देवत्वम् अमृतत्वं च यत् जीवेन गवेषणीयं लब्धव्यं च. लब्ध्वा च तस्मिन्नेव

. . . . .अभूदुषा इन्द्रतमा मघोनी . . . . . .
अंगिरस्तमा सुकृते वसूनि ( ऋ. ७. ७६. ३ )
स इदग्निः कण्वतमः कण्वसखा. . . . . . . . .
( ऋ. १०. ११५. ५ )

एतेन ज्ञायते यद् वेदस्य देवतानामृषीणां च नामानि यौगिकानि न तु सामान्यनामवद् रूढानि, तानि वेदे गुणविशेषस्य शक्तिविशेषस्य वा वाचकत्वेन विशेषणवद् व्यवहृतानीति विस्पष्टमेव। अतश्च बहूनामतिशयेन इन्द्रः, कण्वः, अंगिरा वा इत्यर्थे आतिशायनिकतमप्प्रत्यये कृते इन्द्रतमः, कण्वतमः, अङ्गिरस्तमः इति रूपाणि भवन्ति। इन्द्रत्वेन (अर्थात् दिव्यमनसः प्रकाशेन) रहिताः पणयश्च अनिन्द्राः इत्युक्ताः।

इत्थमेव गो-विप्र-प्रभृतिजातिवाचकसंज्ञाभ्योऽपि तमप्प्रत्ययः प्रयुक्तः प्रेक्ष्यते वेदे। गो-शब्दात् तमप्प्रत्ययेन निष्पन्न ऋषिनामत्वेन प्रसिद्धः गोतम इतिशब्दः लुप्ततद्धितप्रक्रियया 'गोमत्तमः' अर्थात् प्रकाशवत्तमः, प्रकाशिततमः, ज्ञानज्योतिषा दीप्ततम इत्यर्थं निर्दिशति सांकेतिकशैल्या। तथैव प्रकाशार्थकाद् वैदिकविप्धातो-र्व्युत्पन्नाद् 'विप्र' शब्दादपि बहूनामतिशयेन विप्रः (प्रकाशयुक्तमनस्कः) इत्यर्थे तमपि कृते विप्रतमः वेपिष्ठो वा इति रूपे भवतः। इमावुभावपि शब्दौ वेदे विशेषणत्वेन प्रयुज्येते . . . . . अगच्छदु विप्रतमः सखीयन् (ऋ. ३. ३१. ७), वेपिष्ठो अङ्गिरसां यद्घ विप्रः ( ऋ. ६. ११. ३ )।

तदेवं वेदे जातिवाचक—व्यक्तिवाचक—शब्दानां विशेषणपदवत् यौगिकार्थे प्रयोगात् सुस्पष्टं विज्ञायते यद् वेदस्य न केवलं साधारणपदानि किन्तु ऋषिदेवतानां नामान्यपि यौगिकानि। एतद्विषये On the Veda ग्रन्थस्य १८३-१८४ पृष्ठे सुधीभिरनुशील्ये।

१. वेदो हि निखिलविद्यानिधानम्, अशेषज्ञानविज्ञाननिरूपकं शाश्वतिकम् अपौरुषेयञ्च शास्त्रम् इति प्राचीनतममहर्षिभ्य आरभ्य अर्वाचीनतम महर्षिश्रीमदरविन्द पर्यन्तं सर्वेषामृषीणां समानं मतम्। सर्वमपि ज्ञानम् विज्ञानं वा बीजरूपेण वेदे वरिवर्त्ति इति श्रीमद्दयानन्दस्वामिनां मतं श्रीअरविन्दचरणैः समर्थितं समुपबृंहितञ्च Bankim-Tilak-Dayananda नाम्नि पुस्तके। तत्र तैरुक्तं यन्महर्षिदयानन्दस्य अस्मिन् विश्वासे न काप्यतिशयोक्तिः, प्रत्युत वेदविषये तेन इयं न्यूनोक्तिरेव कृता। इम विश्वासं समर्थयितुञ्च श्रीअरविन्देन प्रतिपादितं यद् वेदे भौतिकविज्ञानस्य सत्यानि तु बीजतः वर्तन्त एव किन्तु तदतिरिक्तम् एकस्यान्यस्य दिव्यविज्ञानस्य सत्यान्यपि तत्र विद्यन्ते यानि आधुनिकविश्वस्य पार्श्वे सर्वथैव न सन्ति।

निवसनीयम् । एकस्य वेदमन्त्रस्य उत्तरार्द्धे एतत् सर्वं सममेव निर्दिष्टम् । तत् शृण्वन्तु भवन्तः—'भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ।' अस्मिन् मन्त्रांशे तदेव ऋतम् अर्थात् सत्यम् अमृतत्वं देवत्वञ्च निर्दिष्टानि । अपि च 'सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम्' (ऋ. ३. ३९.५), 'गूढं ज्योतिः पितरो अन्वविन्दन्त्सत्यमन्त्रा अजनयन्नुषासम् ।' (ऋ. ७. ७६. ४) इत्यादयो मन्त्रा अप्युदाहार्याः ।

तस्य सत्यस्य ज्योतिषश्च, तयोर्देवत्वाऽमृतत्वयोश्च उपलब्धिः सत्यस्य पथा एव सम्भवति नान्यथा । एतदपि एकस्मिन् वेदमन्त्रे प्रतिपादितम्—'अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि विस्त्रुतिर्दिवः ॥' अत्र स एव पन्था वर्णितः । एतानि सत्यज्योतिरादीनि एषामधिष्ठानभूता दैवी शक्तिश्च मनुष्यस्य अन्तरे क्रियारतानि सन्ति । एषां स्तुतिः, एषां दिव्यदानानां कृपापरम्पराणाञ्च स्तुतिरेव वेदमन्त्राणां प्रधानविषयः ।

(२) अथ द्वितीयं तत्त्वम् । वेदमन्त्रैर्ज्ञायते यत् अस्ति अत्र एकं इहलोकस्य सत्यं यत् निम्नकोटिकम् असत्यमिश्रितञ्च । तथा चोक्तं वेदे—

इमे चेतारो अनृतस्य भूरेः मित्रो अर्यमा वरुणो हि सन्ति ।"

(ऋ. ७. ६०. ५)

अत्र 'भूरेः अनृतस्य' इति शब्दाभ्यामसत्यबहुलम् ऐहलौकिकसत्यमेव निर्दिष्टम् । अथ च अस्ति तत्र ऊर्ध्वतमस्तरे सत्यस्य धाम भुवनं वा यद् वेदे 'ऋतचित्,' 'ऋतस्य सदनम्' इत्यादि पदैः कीर्तितम् । तथा चामनन्ति मन्त्रवर्णाः—

'त आववृत्रन्त्सदनाद् ऋतस्य आदिद् घृतेन पृथिवी व्युद्यते ॥'

(१. १६४. ४७)

अनयोर्द्वयोः सत्ययोः द्वयोर्लोकयोर्वा मध्ये अनेकानेकलोकाः सन्ति स्वस्वप्रकाशयुक्ताः । किन्तु तद् ऋतसदनमेव परमोच्चज्योतिषः सत्यसूर्यस्य वा लोकः यो वेदे 'स्वः' 'बृहती द्यौः,' 'सत्यम् ऋतम् बृहत्' इत्यादिशब्दैः वर्णितस्तत्र तत्र । तस्य सत्यलोकस्य प्राप्तिपथः पुरुषेण अन्वेषणीयः ।

(३) अधुना वैदिकरहस्यज्ञानस्य तृतीयं तत्त्वं विमृशामः । वेदानुसारम् अस्माकमिदं जीवनम् देवासुरशक्तीनां संग्रामस्थलम् । तत्र एकतः सन्ति दिव्यज्योतिषः शक्तयः अर्थाद् अग्नीन्द्रमित्रवरुणभगार्यमादयः देवाः, अपरतश्च सन्ति अन्धकारस्य शक्तयः अर्थाद् वृत्र-वल-पणि-दस्यु-नमुचिप्रभृतयो दैत्याः । आसामन्धकारशक्तीनां विरोधमपाकर्तुं देवशक्तीनामावाहनं करणीयं भवति । आवाहितास्ता अस्मान्स्ववतीर्य अस्मान् मनसः मिथ्याप्रकाशाद् उद्धरन्ति, परमसत्यस्य मार्गेण च अस्मान् ज्योतिर्मयीं कल्याणमयीम् अमृतावस्थां प्रापयन्ति । इयमवस्था एव दिव्या सिद्धिः । अस्याः साधनञ्च, आभ्यन्तरो यज्ञः । 'वेदा हि यज्ञार्थमभिप्रवृत्ताः' इति प्राचीनोक्तौ नास्ति श्रीअरविन्दस्य विप्रतिपत्तिः । किन्तु स स्पष्टतया प्रबलतया च आचष्टे यद् वेदे वर्णितो यज्ञः आमूलचूलं साङ्गोपाङ्गञ्च प्रतीकात्मकः, स प्रधानतः आभ्यन्तरः न तु बाह्यः । वेदोक्तयज्ञस्य सर्वाण्यपि अङ्गानि अस्मदन्तरे एव सन्ति । मनुष्ये अन्तरेवास्ति अग्निः, अन्तरेव वेदिः, हविः, होता च, अन्तरेव ऋषिः मन्त्रः देवता च, अभ्यन्तरे एव प्रधानपुरोहितस्य ब्रह्मणः वेदगानम्, अभ्यन्तरे एव

देवद्वेषिणो दैत्याः, अन्तरेव अन्धकाररूपो वृत्रः, अन्तरेव च वृत्रहन्ता प्रकाशाधिपतिः इन्द्रः । किम्बहुना, अस्य यज्ञस्य यजमानः, पुरोहितः, हविः समिधः, घृतं, सोमः, पुरोडाशः, फलञ्च–सर्वमपि आन्तरिकमेव ।

इत्थञ्चेत् अयं प्रश्नः उदेति यदस्य यज्ञस्य यजमानः कः, पुरोहितः कः ? किञ्च समिधादिकं? तदुच्यते। जीव एव,आत्मा एव अस्यान्तर्यज्ञस्य यजमानः, तस्य हृदयमेव वेदिः । कस्तर्हि पुरोहितः? हृदयस्थः दिव्यसंकल्पाग्निरेव पुरोहितः । अथ काः समिधः? जीवस्य देहप्राणमनांसि तस्य सत्ताया अन्यानि च अङ्गोपाङ्गान्येव समिधः । किं तर्हि घृतम् ? मनसो बुद्धे र्वा निर्मलता प्रकाशयुक्तावस्था च घृतम् । अथ किं हविः ? देहप्राणमनसां नानाविधा अवस्था भावा वृत्तयश्च, सत्यस्यान्वेषणार्थमभिव्यञ्जनार्थञ्च क्रियमाणानि यानि कान्यपि कार्याणि च हविः । एवञ्चेत् ईदृशसूक्ष्मान्तर्हविष्प्रदानस्य फलम् किम् ? द्युलोकात् ज्योतिश्शक्तिसत्यानन्दामृतत्वादीनां दिव्यैश्वर्याणां वृष्टिरेव अस्य फलम् ।१

तदेवमस्माभि र्वेदोक्तयज्ञस्य प्रतीकात्मकं स्वरूपं दृष्टम् । अयम् अन्तर्यज्ञो हि वेदानुसारम् एका यात्रा, ऊर्ध्वारोहणरूपिणी यात्रा, देवत्वप्राप्तये क्रियमाणा तीर्थयात्रा, सा यात्रा च पुनः युद्धरूपा, यतस्तस्याम् अन्धकारस्य शक्तिभिः सह प्रचण्डसंग्रामः कर्तव्यो भवति । इमां युद्धमयीं यज्ञयात्रां वयम् अग्निदेवं पुरोहितं कृत्वा तत्साहाय्येन सम्पूरयामः ।

वैदिकयज्ञस्येदं यात्रात्मकस्वरूपञ्च वेदस्य 'अध्वर' शब्देन सूच्यते । श्रीअरविन्दानुसारं यज्ञवाचकम् 'अध्वर' पदम् व्युत्पत्तिदृष्ट्या 'अध्वन्' पदेन सम्बद्धम् । 'अध्वा' इति शब्दः 'अध्' गतौ इत्यस्माद् वैदिकधातोर्व्युत्पन्नत्वात् मार्गवाचकः । ततश्च 'अध्वानं' मार्गं राति ददाति१ इति अध्वरः यज्ञ इति व्युत्पत्तेः अध्वर-शब्दः यज्ञस्य मार्गस्वरूपत्वं मार्गप्रदायकत्वञ्च द्योतयति ।

१. वेदे यजमानः गवाश्व-रयि-रत्न-वीर-प्रजा-तनयादीन् यानपि पदार्थान् प्रार्थयते ते सर्वे अन्तर्यज्ञेन लभ्यानामन्तरैश्वर्याणामेव सङ्केतका इति सोपपत्ति प्रतिपादयितुं शक्यम् ।

१. यद्वा, 'गम्लृ' गमने इत्यस्माद् धातोः निष्पन्नः 'गत्वर'— शब्द इव 'अध्' धातो र्व्युत्पन्नः 'अध्वर'––शब्दः गत्वरः, गतिशील इत्यर्थं निरूपयति । ततश्च यज्ञः गतिशीलः, ऊर्ध्वलोकान् प्रति देवान् प्रति वा सततं प्रगमनशीलः, आरोहणपरः इत्यर्थः सूचितो भवति । एवञ्च यज्ञस्य यात्रारूपत्वं स्पष्टं संजायते ।

'अध्वर' शब्दस्य ईदृशीं युक्तियुक्ताम-द्भुतां च व्युत्पत्तिमुद्भावयन् श्रीअरविन्द एवमाह–'ध्वृ' धातु हिंसार्थकः । अतः सायणः 'अध्वर' स्यार्थम् 'अहिंसितो यज्ञः' इति कृतवान् । किन्तु ( अहिंसितार्थकः ) 'अध्वर' शब्दः स्वतः ( यज्ञादिविशेष्यं विना पृथगेव ) यज्ञवाचकः सञ्जातः । 'अहिंसितः' इत्यर्थकशब्दस्येदृशमर्थपरिवर्तनं न सम्भवम् ।

'अध्वन्' इति शब्दस्य 'मार्ग' इत्यर्थः अतः 'अध्वर'––पदस्यार्थः 'मार्गगामी,' मार्गस्वरूपः इत्येव वा स्यात् । यज्ञो देवधामगमनपथ आसीत्, सर्वत्र प्रथितश्च यज्ञो देवधामपथिकत्वेन । अयमेव च सङ्गतार्थः । 'अध्वर'—शब्दोऽपि 'अध्वन्' इति शब्द इव 'अध्' धातो र्निष्पन्नः । अत्र च एकं प्रमाणमपि प्राप्यते । तच्चेदम्––'अध्वा', 'अध्वरः' इत्युभावपि आकाशार्थे व्यवहृतावास्ताम् ।

(श्रीअरविन्दस्य 'विविधरचना' इति बंगीयपुस्तकादनूद्य उद्धृतम् )

'ऑन दी वेद'––नामकात् तस्य बृहद्ग्रन्थादपि एकः सन्दर्भोऽत्र समुद्ध्रियते––'अध्वरो' नाम 'यात्रा' गमनं वा । अयं शब्दः 'मार्ग'–वाचकेन

प्रसिद्धमेवेदं लोके यत् यज्ञः देवत्वप्राप्तेः, देवानां स्वर्गादिलोकानां वा प्राप्तेर्मार्ग इति । स देवत्वस्य मार्गो वा तत्प्राप्तये मार्गप्रदायको वा इत्ययं भावोऽनया उपर्युक्तव्युत्पत्त्या विशदीक्रियते । किन्तु 'अध्वर' शब्दः सामान्यतया 'ध्वृ' हिंसायामिति धातोर्व्युत्पाद्यते । नास्ति ध्वरः हिंसा यस्मिन् सोऽध्वरः हिंसारहितोऽहिंसितो वा ( यज्ञः ) इति चार्थः क्रियते । परं श्रीअरविन्दमतेन 'अहिंसितः' इत्यर्थकशब्दस्य कालान्तरेण यज्ञपर्यायत्वेन प्रयोगो नैव सम्भाव्यते नोपपद्यते वा । शब्दानामीदृशमर्थ-परिवर्तनं भाषाविज्ञानेन अर्थविकासार्थपरिवर्तन-सिद्धान्तैर्वा समर्थयितुं न शक्यम् ।

(४) सम्प्रति वैदिकतत्त्वज्ञानस्यान्तिमं चतुर्थं च तत्त्वमुपवर्ण्यते । निखिलेऽपि ब्रह्माण्डे एकैव वस्तु-सत्ताऽस्ति नान्या इतीदं वेदस्य चरमशिखरायमाणं रहस्यम् । एतञ्च वेदस्य शतशः मन्त्रेषु विशदतया समुद्घोषितम् । तत्राहं कांश्चिन्मन्त्रान् श्रावयामि ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो
दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति
अग्निं यमं मातरिश्वानमाहुः ॥
( ऋ. १. १६४. ४६ )

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ।
( ऋ. १०. १२९. २ )

अथ च सन्ति अथर्ववेदे केचित् प्रसिद्धमन्त्राः ।

न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते
य एतं देवमेकवृतं वेद ॥१
( अथर्व. १३. ५. १६ )

न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते ।
य एतं देवमेकवृतं वेद ॥
( अ. १३. ५. १७ )

नाष्टमो न नवमो दशमो नाप्युच्यते ।
य एतं देवमेकवृतं वेद ॥
( अ. १३. ५. १८ )

---

'यात्रा'—परकेण वा 'अध्वन्' पदेन सम्बद्धः । इदं पदञ्च विलुप्ताद् 'अध्' धातोर्निष्पन्नम् । 'अध्' धातुः गति–विस्ताराऽऽयाम-संहत्यादिषु रूढ आसीत् । 'अध्वन्', 'अध्वर' इत्यनयो र्द्वयोः शब्दयोः सम्बन्धोऽर्थसाम्येन ज्ञायते-- 'अध्वा' वायुवाचकः आकाशवाचको वा, 'अध्वर' शब्दश्चापि एतदर्थकः । सन्ति वेदे अनेकानेकसन्दर्भा यत्र 'अध्वर'-स्य 'अध्वर-यज्ञस्य' वा सम्बन्धो यात्रायाः, पर्यटनस्य मार्गेऽग्रतः प्रयाणस्य वा विचारेण सह वरिवर्ति ( On the Veda-Page 214 )

१. सर्वे यस्मिन् देवा एकवृतो भवन्ति ।
य एतं . . . . . ( अथर्व. १३. ५. २१ )
सोऽर्यमा स वरुणः स रुद्रः स महादेवः ।
रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥
( अथ. १३. ४. ४ )
सो अग्निः स उ सूर्यः स उ एव महायमः ।
रश्मिभि . . . . . ( अथ. १३. ४. ५ )
एते अस्मिन् देवा एकवृतो भवन्ति ॥
( अथ. १३. ४. १३ )
तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥
( यजु. ३२. १ )
एक एवाग्निर्बहुधा समिद्ध
एकः सूर्यो विश्वमनु प्रभूतः ।
एकैवोषाः सर्वमिदं विभात्येकं
वा इदं विबभूव सर्वम् ॥
( ऋ. ८. ५८. २ )
इत्यादयो मन्त्रा अपि अत्र स्मर्तव्याः ।

तमिदं निगतं सहः स एष एक एकवृदेक एव।
य एतं देवमेकवृतं वेद ।। (अ. १३. ५. २०)

ईदृशः शतशो मन्त्राः तस्य ब्रह्मणः एकत्वं गुञ्जयन्ति घोषयन्ति च।

वस्तुतोऽसौ देव एक एव, स देवानामादिदेवो देवाधिदेवश्च। वेदेषु कीर्तिताः अग्नीन्द्रमित्रवरुण-भगार्यमादयोऽन्ये सर्वेऽपि देवा एकस्यैव परस्य पुरुषस्य देवादिदेवस्य नामानि, न च केवलं तस्य नामानि किन्तु तस्य शक्तयोऽपि, तत्तद्व्यक्तित्व-विशिष्टा मूर्तिमत्यः शक्तयः। प्रत्येकं देवस्य पृष्ठतः सर्वाअपि अन्या देवतास्तिष्ठन्ति। स च मुखत एव तत्तद्देवो भवति। तस्य पृष्ठतः सर्वदेवमयः परः पुरुष एव विराजते। स एव सच्चिदानन्दस्वरूपः परमदेवोऽस्माभिरनुसन्धेय उपलब्धव्यश्चेति वेदस्य प्रधानं प्रतिपाद्यम्। एतच्च स्वयं भगवान् वेदः प्राह स्वमन्त्रवर्णैः—

ऋचो अक्षरे परमे व्योमन् यस्मिन्
देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते ।।

(ऋ. १. १६४. ३९)

अस्मिन् मन्त्रे 'यः तत् न वेद किम् ऋचा करिष्यति' इति चरणेन स्पष्टमेव निरूपितं यत् यो मनुष्यस्तत् अक्षरं परमं विश्वदेवाधिष्ठानं 'तद् ब्रह्म' न वेद स ऋचा किं करिष्यति? न तेन विदितम् ऋचां विवक्षितं चरमं परमञ्च तत्त्वम्, तथा सति किं तस्य ऋग्भिः प्रयोजनम्?

इदमेव तच्चतुर्धा विभक्तं वैदिकं रहस्यज्ञानं यत् श्रीअरविन्देन On the Veda नामके स्वग्रन्थे सविस्तरं प्रस्थापितम्।

इत्थमस्माभिर्दृष्टं यत् श्रीअरविन्देन वेदस्य यो रहस्यार्थो निरूपितः स आन्तरिकः आध्यात्मिको मनोविज्ञानमूलको वा। जानन्त्येव भवन्तो यन्मनोविज्ञानम् आधुनिकान्तर्विज्ञानेषु नव्यतमम्। वेदोपनिषद्गीतायोगदर्शनादीनामध्ययनेन ज्ञायते यत् प्राचीनकाले मनोविज्ञानं चरमविकासमारूढमासीत्।[१] तत्समक्षम् आधुनिकं पाश्चात्यमनोविज्ञानन्तु बालचेष्टामात्रम्। श्रीअरविन्दो वेदानां प्राचीनभारतीयमनोविज्ञान (योगविद्या) सम्मतम् रहस्यार्थं व्याख्यातवान्। अनया दृष्ट्या सोऽस्मिन् युगे नूतनाध्यात्मिकवेदभाष्यस्य प्रेरणप्रणयनप्रवर्तनद्वारा संस्कृतसाहित्यक्षेत्रे आधुनिकतमां महतीं क्रान्तिं कृतवान्। ईदृशक्रान्तिकरणेन वेदस्य वास्तविकरहस्यगवेषकत्वेन च तस्य कीर्तिर्यावच्चन्द्रदिवाकरौ अजरामरा स्थास्यतीति नात्र मे संशीतिलेशोऽपि। आगामियुगमस्माकमिदं कथनं प्रमाणयिष्यतीत्यलं विद्वद्वरेण्येषु श्रीमत्सु।

---

१. वेदे उपनिषत्सु च चितेर्व्यापाराणां सूक्ष्मभेदप्रभेदा नानापदैर्निरूपिता दृश्यन्ते। तद्यथा मनः, मतिः, धीः, मनीषा इति मनसः शक्तेः क्रियायाश्च भेदाः; विप्रः, विपश्चित्, विचर्षणिः, कविः, ऋषिः इति प्रकाशयुक्तसत्ताया भेदाः; चेतनः, विचेताः, प्रचेताः इति चेतनसत्तायाः स्तरभेदाः; मनीषी, मेधावी, धीर इति स्थितप्रज्ञस्य भेदाः; स्वस्ति, सुम्नम्, भद्रम्, शिवम्, कल्याणम् इति सुखमयास्तित्वस्य भेदाः; मुदः, प्रमुदः, शम्, शर्म, वामम्, वनम्, मय इति आनन्दावस्थाया भेदाः; सत्, सत्यम्, ऋतम्, चित्, बृहत् इति परमसत्तायाः स्वरूपविवृतिरित्यादि। वेदोपनिषदामृषयः सत्तायाश्चेतनायाश्च गम्भीरतमविशालतमोच्चतमस्तदानवगाहितवन्त इति सम्यग् विज्ञायते वेदोपनिषदां पदैर्मन्त्रैश्च।



# आर्थिकसमस्या साम्यवादो वेदश्च

प्रा. श्री भद्रसेन दर्शनाचार्य वि. वै. शोध संस्थान होश्यारपुर

साम्प्रतिके संसारे सर्वत्र धनस्यैव सर्वा क्रीडा दरीदृश्यते, रथचक्रस्य नाभिरिव धनमेव समाज-चक्रस्य नाभिः। अद्यत्वे मनुष्यजीवनस्य सर्वा प्रक्रिया आधनात् संकुचिता।

इह चेदवेदीदथ सत्यमस्ति,
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति॥
१, २, ५

केनोपनिषदीया इमे भावा आकाशपुष्पवदेव जाताः। प्रातश्चतुर्वदनादपि पूर्वं केचन द्विचक्रिकासु दुग्धपात्राणि निधापयित्वा नगरेभ्यो ग्रामान् प्रयान्ति। कश्चित् त्रिचक्रिकासु स्वतोऽपि गरीयांसौ पुरुषौ गृहीत्वा राजमार्गान् परिमिमीते, तेभ्यो न स्वास्थ्यचिन्ता न च शारीरिककष्ट-विचारः। इत्येव न परं कश्चित् सर्वा रात्रि नेत्रेष्वेव यापयति। परं कश्चन प्राणानविगणय्य क्रीडारंगे ( सरकस ) सिंहैः सह क्रीडति वा मोटर साइकल इति यानं मृत्युकूपे चालयति।

अद्यत्वे नरः कृत्याकृत्य, धर्माधर्म पापपुण्य, उचितानुचितेत्यादिसर्वविधकर्मणि व्यासक्तः। प्रश्नोऽयं समुत्पद्यते यदिदं सर्वं किमर्थं? प्रायः समेषामुत्तरं समानमेव यत्–धनम्, धने, धनानि। यदि कस्यचित् कवेः शब्देषु निगद्येत्तु टकाधर्मस्टका कर्म टका हि परमं पदम्। यस्य गृहे टका नास्ति हाटकं टकटकायते॥ एतदर्थमेव राज्य–दण्ड-मुपेक्ष्य मानवता, आत्मसमव्यवहारः, भूतदया इत्यादि सदाचार–सूत्राणि नीतिवार्ताश्च पांसुरिव विमृद्य भ्रष्टाचारः, उत्कोचः मिश्रणं, विक्रयचौर्यं, शोषणादयो निन्दितव्यवहारा व्यवह्रियन्ते। एतावदेव न, परं चरित्रस्य, स्वस्य, स्वपरिवारस्य च विक्रयः, तथा जनहत्यादिविविधकरुणामया बीभत्साघटनाश्च प्रतिदिनं श्रूयन्ते, अधीयन्ते च। इदं सर्वं हिताहितयोरुचितानुचितयोः सर्वाः क्रीडा आर्थिकसमस्ययैव समुत्पद्यन्ते। समाचारपत्राणि संसारश्चास्याः कथाया विविधपक्षाणां प्रख्यापनमेव चलचित्रवत् प्रस्तुवन्ति।

नेयं समस्या अद्यतनीया, परं अति प्राचीना प्रतिभाति। सम्भवतः कस्यचिन्निर्धनस्य दुर्दशामेवेक्षमीक्षम् केनापि कविना लिखितम्—

तानीन्द्रियाण्यविकलानि तदेव नाम,
सा बुद्धिरप्रतिहता वचनन्तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव,
त्वन्यःक्षणेन भवतीति विचित्रमेतत्॥

परं वेदेऽपि समायाति—

अरायि काणे विकटे गिरिं गच्छ सदान्वे।
शिरिम्बिठस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि॥
ऋ० १०,१५५,१

एनमेव मन्त्रं व्याख्यायन् निरुक्तव्याख्याकारः श्री दुर्गाचार्यः प्राह–अरायि–अदायिनि! दुर्भिक्षाधिदेवते! अथवा हे अलक्ष्मि! दुर्भिक्षेण पीडितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याभिभूतानाम्। काणे! दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति, अन्नाभावात्, अलक्ष्मीपक्षेऽपि तद्रूपा। अलक्ष्मीरिति प्रतीयते, लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति सोच्यते। विकटे–दुर्भिक्षे दुर्बलत्वात् विकटैव प्राणिनां गतिर्भवति, अलक्ष्मीरपि तद्रूपा। गिरिं गच्छ माऽत्रावस्थानं कार्षीः। सदान्वे–सदा नोनुवे शब्दकारिके दुर्भिक्षे हि क्षुत्पीडिताः प्राणिनो निःश्वसन्तः सदैव शब्दं कुर्वन्ति,। शिरिम्बिठस्य मेघस्य स्वभूतैः सत्त्वभिः

—उदकैः सत्त्वम् इति ह्युदकनामसु पठितम्। तैरुदकैर्वयं त्वां चातयामसिनाशयामः। चातयतिर्नाशने प्रसिद्धः। मेघोत्थैरेव ह्युदकै दुर्भिक्षं नाश्यते। अपि वा शिरिम्बिठो भारद्वाजः तस्य सत्त्वैः—नामभिः तेन यानि दृष्टानि नामानि सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः

श्री छज्जूराम शास्त्री—हे अरायि ! दुर्भिक्षाधिष्ठातृ—देवते ! अथवा हे अलक्ष्मि ! काणे ! एकनेत्रे ! मन्ददर्शनशक्तिके ! विकटे ! विकुटितगतिके ! सदान्वे दुर्भिक्षपीडितजनरवाकुले ! त्वं गिरि—पर्वतं गच्छ मात्र तिष्ठे। तेभिः तैः प्रसिद्धैरित्यर्थः। शिरिम्बिठस्य—मेघस्य ऋषे र्वा भारद्वाजस्य सत्त्वभिः—नामभिः त्वा—त्वाम् चातयामसि नाशयामः। एषां भाष्यकाराणां छायायामहमनुवदामि अरायि—सहानुभूतिशीलसम्पन्नः आत्मसमव्यवहारकर्तैव दातुं प्रभवति। पदार्थानामभावे स किमपि दातुन्न प्रभवति। काणे—एकनेत्रः प्रत्येकं एकेन चक्षुषा पश्यति न कस्मै किमपि भेदं करोति, एवमेव निर्धनः यम् कमपि पश्यति अथवा किमपि पठति वा कुत्रचित् गच्छति—आगच्छति च परं तस्य नेत्रे सर्वदा धनमन्विष्यतः, सम्भवतः, कुतश्चिद् धनं प्राप्नुयात्। विकटे—अभाववशात् बालानां रोदनेन, वर्षाझञ्झावातैश्च भग्नं भवनं श्मशानवत् भयानकं प्रतिभासते तथा शरीरमपि विरूपं जायते। सदान्वे—गृहे बालानां याचनानि, श्रीमत्या निवेदनम्, अद्य इदमपेक्षते, अस्याः समाप्तिर्जाता अथवा यथाद्यत्वे महार्घ—विरोधि—शोभायात्रा, उत्सवः, विज्ञापनादीनां व्यापारश्च।

आर्थिकसमस्याभिरुत्पद्यमानानां सामाजिक—अव्यवस्थानां समाधानार्थं अनेकाभिर्विचारधाराभिः प्रयासो विहितः। सत्यमिदं, अयं प्रयत्नः समाज—सुव्यवस्थायै आसीत्, परं यथा उदरे विकारे समागते सति सर्वं शरीरं विकृतं जायते, तथैव आर्थिकस्थितावव्यवस्थायाः समागते सति समाजस्य सर्वा प्रणाली विकारत्वमापद्यते। अतः प्रस्तुतप्रसगे सर्वांगीणभावा एकांगिदृष्ट्या विचारिताः। आसु विचारधारास्वेका साम्यवादस्यापि, अत्र तस्या गुणदोषौ न विविच्येते। अस्य लेखस्य तु केवलं वादस्य मौलिकत्रिभिः सूत्रैरेव सम्बन्धः।

१—शक्त्यनुसारतः कार्यम्। २—आवश्यकतानुसारतो वस्तूनि। ३—उत्पादनस्योपरि राज्यस्यैवाधिकारः। अर्थात् उत्पादनकेन्द्राणां राष्ट्रियकरणं भवेत्। तात्पर्यम्—अ—प्रत्येको नागरिकः कार्यं करिष्यति, यः कार्यन्न करिष्यति स च न भोक्ष्यते। कार्यवितरणस्याधारः—योग्यतानुसारतः कार्यं, कार्यानुसारेण वेतनम्, वेतनेषु नात्यधिकमन्तरम्। आ—उत्पादनेषु राज्याधिकारः, अतः उत्पादनकेन्द्राणां राष्ट्रियकरणं करणीयम्, इ—उत्पादनमुपभोगाय़ैव न लाभाय। ई—राष्ट्रस्य सर्वविध उत्पादनस्त्रोतसां पूर्णोपभोगः स्यात्।

इदन्तु निश्चयप्रचम् यन्नरो हिताहित—उचितानुचितकर्तव्यं विस्मृत्य भ्रष्टाचारादिकं कृत्वा धनमर्जयति, तस्याभिप्राय अयमेव यत् सुष्ठु प्रकारेण स्वस्य स्वपरिवारस्य च पालनं पोषणं भवेत् तथा आत्मजानामुच्चशिक्षा, भविष्यञ्च सिद्ध्येत्। केवलं धनस्वामित्वभावना तु कस्मिन्नेवाप्नोति परं तत्रापि सूक्ष्मरूपेणोपरोक्तभावना भवत्येव।

मनुष्य एकः सामाजिकः प्राणी। तस्मात् यदि समाजः (राष्ट्रः) तस्य भरण-पोषणादीनां दायित्वं गृह्णाति तदा स्वात्मीयानां भरण—पोषण—शिक्षा— विवाह— यौतक (दहेज)— भविष्यादीनां कापि समस्यैव न समायाति। स्वतः सर्वा

समस्याः समाधास्यन्ति, तथा अनया रीत्या सर्वेभ्यः समुन्नतेः समानावसरप्रापणात् यत्र राज्याय अधिका योग्यकार्यकर्तारः प्राप्स्यन्ति, तत्र समुन्नतेः समानावसरस्याप्रापणात् यदसन्तोष, घृणा, ईर्षा, भेदभाव, परहान्यादयो भावा समुत्पद्यन्ते तेऽपि न भविष्यन्ति ।

ननु प्रस्तुतप्रसगस्यावबोधाय एका वार्ता मनस्याधेयः, यदत्र समानावसरस्याभिप्रायो न समैः सह सर्वदा सर्वथा समव्यवहारः । परं यथोचित–यथायोग्यव्यवहारः अर्थात् सर्वेभ्यो विना कयापि बाधया उन्नति–ऐश्वर्यप्राप्तेश्च समानावसरः समानाधिकारश्च प्राप्तव्यः ।

साम्यवादस्य मौलिकानि त्रीणि सूत्राणि विचारयन्नेवास्माकं ध्यानं ऋग्वेदस्यान्तिमसूक्ते तथा अथर्ववेदस्य तृतीयकाण्डस्य त्रिंशत्तमे सूक्ते गच्छति तत्रापि विशेषतः षष्ठ–सप्तममन्त्रौ, तौ चेत्थम्—

समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥

श्री सायणाचार्यः—हे सांमनस्यकामाः वः युष्माकं समानी एका प्रपा पानीयशाला भवतु । अन्नभागश्च सह एव भवतु । परस्परानुरागवशेन एकत्रावस्थितम् अन्नपानादिकं युष्माभिरुपभुज्यताम् इत्यर्थः । तदर्थम् अहं वः युष्मान् समाने योक्त्रे एकस्मिन् बन्धने स्नेहपाशे सह युनज्मि सह बध्नामि । अपि च सम्यञ्चः संगताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत पूजयत । कथमिव स्थिता इति तत्राह—अरा नाभिमिव अभितः रथचक्रस्य मध्यच्छिद्रं नाभिः तस्या अभितो वर्तमाना अराः चक्रावयवाः कीलका नियतस्थानाः परिवेष्ट्य वर्तन्ते । एवम् एकम् अग्निम् अभितो वर्तमानाः परिचरतेत्यर्थः ।

सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवनेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायं प्रातः सौमनसो वो अस्तु ॥

सध्रीचीनान् सह प्रवर्तमानान् एककार्यं करणे सहोद्युक्तान् संमनसः समान–मनस्कान् वः युष्मान् कृणोमि करोमि । तथा युष्माकम् एकश्नुष्टिम् एकविधं व्यापनम् एकविधस्यान्नस्य भुक्ति वा करोमि । संवनेन वशीकरणेन अनेन सांमनस्य–कर्मणा युष्मान् सर्वान् वशीकरोमीत्यर्थः । अमृतम् द्युलोकस्थम् अजरामरत्वप्रापकं पीयूषं रक्षमाणाः ऐकमत्येन पालयन्तः देवा इव इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति एवं वः युष्माकं सायं प्रातः एतदुपलक्षिते सर्वस्मिन् काले सौमनसः सौमनस्यं शोभनमनस्कत्वम् अस्तु भवतु ।

यथा प्राचीनशिक्षणालयेषु ब्रह्मचर्याश्रमे वसद्भ्यो विद्यार्थिभ्यो व्यवस्थायाः संकेतः प्राचीन-शास्त्रेषु प्राप्नोति । प्रत्येको जनः समाजयन्त्रस्यांशः, यदि स स्वस्थाने सम्यक्रूपेण संयुज्यते तर्हि द्वयोर्लाभः, अन्यथा स समाजे विकारं जनयति । यदि अत्र अग्निशब्दस्य अर्थः कार्यं, परिश्रमः; अमृतं समाजः, राष्ट्रम्; देवाः = इन्द्रियाणि क्रियेत, तर्हि प्रासंगिकभावोऽतिस्पष्टो भवेत् । अन्यच्च—

अज्येष्ठासो अकनिष्ठास एते संभ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ऋ० ५,६०,५,

श्री नारायणस्वामी— सर्वैर्मनुष्यैः सौभाग्यसंवर्धनाय भ्रातृवत् एकीभूय प्रयतितव्यम्, एषु न कोऽपि ज्येष्ठः कनिष्ठो वा । सर्वशक्तिमान् ( रुद्रः ) परमेश्वरः सर्वेषां पिता, अनेकविध–भोज्यादि (धन, धान्य) दात्री पृथिवी च माता ।

ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः ।।
यजु० १९,४६ ।।

ये जना मानसिकदृष्टया अर्थात् विचारैः समानत्वम् भजन्ते तथा संगठनसूत्रेण च संग्रथिताः, तेभ्य एव इदं विश्वस्य वैभवम् ।

## निष्कामकर्मयोगः—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।।
यजु० ४०,२

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।।
गीता २,४७ ।।

इत्यादीनि प्रमाणानि आश्रित्य वैदिकसाहित्ये निष्कामकर्मयोगस्य चर्चा चलति । अस्य विद्वद्भिश्च विविधा व्याख्या विहिताः । केचन निःस्वार्थं परोपकारमयं कर्म वा निष्काम–कर्म वदन्ति, परन्नैतत् शाब्दिकदृष्टया संघटते, एतदपि कर्तुरिच्छैव । इच्छा जलवत् भवन्ति, यासाम् प्रवाहो रोद्धुन्न शक्यते केवलं प्रवाहस्य परिवर्तनमेव कर्तुं शक्यते यथा भाखड़ानंगलबान्ध इति । निष्कामशब्दार्थानुसारेण तु व्यवहारोऽपि न सम्भवति । सर्वविधं कर्म कयापि कामनयैव जायते । इदञ्च कथनं यद् वैद्यश्चिकित्समाणः केवलं रोगिणः स्वास्थ्यस्यैव कामनां कुर्यात् धनन्त्वानुषंगिकम्, इयं वार्तापि अस्मिन्युगे साधु न संघटते ।

आम् साम्यवादस्य प्रक्रियायां निष्कामकर्मयोगस्य पूर्णं पालनं सम्भवति । तस्या व्यवस्थानुसारं कर्मकर्तॄणां फलं प्रति ध्यानमेव न गच्छति यतो हि स पुरुषस्य सर्वासां आवश्यक्तानां पूर्तेर्दायित्वं गृह्णाति । आवश्यक्तायाः पूर्तौ सत्यां कं कस्य चिन्ता ? तदा तु निर्वाहदृष्टया निश्चिन्तिते सति कार्यमपि अति तन्मयत्वेन भविष्यति । यतो हि यस्य मनसि सर्वदा स्वस्य स्वात्मीयानाञ्च भरण–पोषणादीनां चिन्ता भवति, स कर्मण्यपि तन्मयो न भवितुं शक्नोति । उपरोक्तभावनायामेव "न कर्म लिप्यते नरे" भावना चरितार्था जायते ।

## त्यागवादः—

ईशावास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम् ।।
ई० १;

'तेन त्यक्तेन भुञ्जीथाः' शब्दैः त्यागवादः मा गृध आदिभिः सन्तोषस्य भावना निर्दिश्यते । एको धनिको धनस्य क्षयात् त्यागाद् बिभेति, तथा त्यागेन पदार्थाः सर्वेभ्यः सुलभा भविष्यन्ति, अनेन च मूल्यवृद्धौ हानिर्भविष्यति, अतः स दूरत एव त्यागं नमस्करोति । यथा अमेरिकाराष्ट्रेण मूल्यवर्धनाय गोधूमाः समुद्रादिषु प्रक्षिप्ताः । यदि स त्यागं करोति तदा तस्योद्देश्यं भवति, त्यागेन स्वनाम्नः सर्वप्रियतामाप्य स्वव्यापारस्य विकास एव । अन्येषां पार्श्वे अस्त्येव किं यत्तो दद्युः । यदि भावनावशात् तैः किमपि दीयते तदा ते स्वबालानां भागमेव प्रददति । इयमेव स्थितिः सन्तोषस्यापि, यत्किमपि तत्सर्वं विवशतयैव न स्वेच्छया । अतः सामयिकप्रक्रियायां सन्तोषस्य स्वेच्छया न पूर्णं पालनं प्रभवति ।

आम्, उपरोक्तसूत्राणां व्यवस्थानुसारेण तु त्यागसन्तोषयोः पूर्णं सामञ्जस्यं पालनं च जायते । यतो हि पुरुषस्य आवश्यक्तानां पूर्तेर्दायित्वं गृहीते सति तस्य मनसि स्वतः सन्तोषः सम्भविष्यति । स च सन्तुष्टः सन् समाजाय अत्यधिकं कार्यं करिष्यति । तदा कार्यं कुर्वन् न कदापि स विचारयिष्यति, अहमेतावत् कार्यं करोमि, मम

परिवारश्च लघुः, तस्य च विस्तृतः । अहं महत् कार्यं करोमि स च न करोति । स तु स्वकार्यं समाजाय ( राज्याय ) त्यागपूर्वकं करिष्यति । अहं सामाजिकः प्राणीरित्यनुभवन् असौ त्यागाय स्पृहयिष्यति, यत्–अहं कथमपि राष्ट्रस्य सेवां कर्तुं समर्थो भविष्यामि । परिवाराणां संक्षिप्तता, विस्तृतिश्च समयानुसारं स्वयमेव समतामुत्पादयिष्यति । यथा यदि सम्प्रति क्वचित् अधिका भोक्तारः, तदा ते पश्चात् कार्यकर्त्तारोऽपि भवन्त्येव । इच्छानामपूर्तविवासन्तोषो जायते । अतोऽत्र भरण–पोषणादीनां व्यवस्थामीक्षमीक्षं पुरुषो बहु सन्तुष्टो जायते । सन्तुष्टः संश्च निष्ठापूर्वकं स्वकार्यं समाजसेवामिति मन्यमानः करिष्यति । यदि सर्वेषु पदार्थेषु राज्यस्यैव स्वत्वं स्वीक्रियेत तदा स्वस्वत्वाभावात् तदर्थं क्रियमाणानां हिंसा, चौर्य, परिग्रहादीनां प्रश्न एव नोत्पद्यते, यतो ह्येतत् स्वस्वत्वायैव भवति । तदा "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" योग ३, ३० । एषां सारल्येन पालनं सम्भवति ।

सारांशोऽयं निष्पद्यते यत्–समाने योक्त्रे सह वो युनज्मि, सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः, कुर्वन्नेवेह कर्माणि, सध्रीचीनान्, संभ्रातरो वावृधुः सौभगाय इत्यादिभिः शक्त्यनुसारतः कार्यं, इत्यस्य पुष्टिर्जायते ।

समानी प्रपा सह वोऽन्नभागः, एकश्नुष्टीन, ये समाना श्रीर्मयि कल्पताम् एभिः आवश्यकतानुसारेण पदार्थाः, इति भावना लक्षिता भवति । द्वितीयसूत्रं तदेव चरितार्थतां याति यदा – उत्पादनेषु समाजस्यैव अधिकारः स्यात् । अस्यामेवावस्थायां कथयितुं शक्यते "माता भूमिः पूत्रोऽहं पृथिव्याः" अ. १२,१,१२ । यदा सर्वेषां पृथिवी समानरूपेण माता तदा पदार्थेषु कस्यचित् विशेषस्वत्वस्य कः प्रश्नः ? इमां सर्वाधिकारभावनामेव अथर्ववेदस्य पृथिवीसूक्तं सूचयति । उदाहरणार्थं विमृश्यताम्—

सा नो भूमिर्विसृजतां माता पुत्राय मे पयः ।१०।
सा नो भूमिरादिशतु यद् धनं कामयामहे । ४० ।
निधिं बिभ्रती बहुधा गुहावसु मणिं हिरण्यं पृथिवी ददातु मे । १२,१,४४ ॥

अस्य वादस्य साफल्ये सन्ति केचन प्रमुखा बाधाः, प्रथमं कारणमिदमस्ति, यत् जनेषु सहस्रैः वर्षैर्व्यष्टिभावना प्रबला, अतः सा शीघ्रं विपरिवर्तयितुं कठिना, तस्य स्थाने समष्टिभावना प्रसाराय बहुसमयोऽपेक्ष्यते, वृद्धानां विचाराः शीघ्रन्न परिवर्ततां यान्ति । शिशुकालादेव एतादृशी शिक्षा व्यवहारश्च विधेयः । जनेषु समष्टिभावना भवति, परं तस्य प्रबोधस्यैवापेक्षा वर्तते । सा च सामूहिक– क्रीडावसरे, भाषा–धर्म– प्रान्तादीनां प्रसंगे स्वतः स्पष्टा भवति । आधुनिक शिक्षा–प्रणाल्या तु व्यष्टिभावनैव पुष्यति । द्वितीयं कारणं–अकर्मण्यजनाः, ये अन्येष्वपि अकर्मण्यतां विस्तारयन्ति, तेषामुपचारस्तु समाजस्य दण्ड एव ।

तृतीया बाधा उच्चवर्गस्थजनैः प्रस्तूयते, तेषां हृदये भयमस्ति, यदनया अस्माकमुच्चस्थानं समाप्स्यति । अस्मानपि सर्वैः सह कार्यकरण आवश्यकं भविष्यति । तदा नः साम्प्रतिकं ऐश्वर्यं, सुखं, पूर्वपुरुषोपार्जितसम्पत्तिश्च हस्तान्तरा भविष्यति । अस्य चरितार्थतां सर्वतः प्रबला बाधा–इयमस्तियत्–शक्त्यनुसारं कार्यं,आवश्यक्तानुसारं वस्तु, इमौ नियमौ पालनाय बहुनैतिक–आत्मबलञ्चापेक्षते । अद्यत्वे तच्च न दृश्यते, तस्याभावे इदं सर्वं असम्भवम् । इयं बाधा केनापि कविना इत्थमगादि—

तालीम का शोर इतना, तरक्की का जोर इतना ।
बरकत जो नहीं होती, नियत की खराबी है ।



# आङ्गिरसो वेदः—अथर्ववेदः

लेखकः—स्वामी समर्पणानन्द महाराजः

कस्मादयमाङ्गिरसो वेदः कस्माच्चाथर्वण इत्येव व्याख्यास्यामः । तत्र शरीरोपयोगि किमपि तत्त्वमस्मिन् वेदे प्रपञ्चितमित्यनुपदं व्याख्यास्यते । तच्च शरीरं द्वेधा विचेष्टते । पञ्चभूतसंघातोत्पन्नया सप्तधातुसम्पदा कूटस्थसाक्षिमात्रपुरुषशक्तिप्रेरितया प्राणचेष्टया च । तत्र धातुसप्तकस्याधारभूतमङ्गाराख्यं तत्त्वमिति रसायनतन्त्रविदो विदुः । तस्यैवाङ्गाराख्यस्य तत्त्वस्याङ्गिरा इति नाम । इदमेव च नाम प्राणानामपीति नापश्चिमम्ब्राह्मणग्रन्थालोचनसमुन्मीलितप्रज्ञानां विपश्चिद्वराणाम् । अङ्गारा एवाङ्गिरा इत्यपि च ब्राह्मणेष्वाम्नायते । तदेतयोरुभयोः प्राणशरीरधातुविशेषयोर्युगपदभिधाने समर्थस्याङ्गिरसो व्याख्यानपरत्वादाङ्गिरसोऽयं वेद इति स्वाभिप्रायमाविर्भावयत्यथर्वाङ्गिरसो मुखमि ( अथर्व १०।७।२० ) त्युपश्लोकयन्ती भगवती श्रुतिरेव । अपि चाङ्गिरसस्य वेदस्याविर्भावाय साधनतारूपं गौरवातिशयं प्राप्तवानृषीणामाद्योऽप्यङ्गिरा इत्यभिधानमाप्तवानित्युन्नीयतेऽस्माभिः ।

अथर्वसंज्ञा थर्वतेर्गतिकर्मणः । तथा हि थर्वणरहितेनाविचलेन मनसा ज्ञानार्जनाय बद्धनिर्बन्धोऽथर्वा तस्याथर्वणो वेदोऽथर्ववेद इति नामोपव्याख्यानम् ।

तत्रान्येषु वेदेषु यज्ज्ञानन्तत् किमनुपयोगि ? किमाथर्वण एव वेदे तनूपयोगितत्त्वमाविष्कृतमिति चेन्मैवम् । ज्ञानं हि नाम द्विविधम् । प्राणभृतामायुर्वेदादिवत् साक्षादुपकारकं नक्षत्रविद्यावत् परम्परया वा । नहि सूर्यमण्डलादपि शतगुणितकोटिपरिणाहस्य मनसोऽपि जवीयसा किरणगतिवेगेन वर्षैः कतिपयैरवापनीयस्य गगनैककोणसन्निविष्टस्य कस्यापि तारकगोलकस्य परिज्ञानं कथमस्मदादीनामुपकारकमिति स्फुटं विज्ञायते । तथाऽपि दृश्यत एव निष्कारणं धृतज्ञानोपासनव्रतानां स्वाध्याययज्ञदीक्षितानां तस्मिन्नेव तपोमूर्धन्ये यज्ञे बद्धाभिनिवेशानां सकललोकपरित्राणहेतुभूतानां परमकारुणिकानां विशालविज्ञानमण्डपमहास्तम्भानां तदवगमे महान् निर्बन्धो ब्राह्मणश्रेष्ठानाम् । आयुर्वेदतन्त्रेऽपि च ते सकललोकोपेक्षणीये तृणादावपि भैषज्यधिया महान्तं तत्त्वावजिगमिषामयमनवरतमादधानाः समुपलभ्यन्ते प्रयतनम् । कालान्तरे च नक्षत्रविशेषस्य तृणविशेषस्यापि च मानवशरीरोपकारकत्वं तत्त्वान्वेषणकाले यदृच्छयैवोपनमति स्वप्नेऽप्यतर्कितेन केनापि घटनासन्निपातेन । परन्नैतावता तेषां कर्मणोऽनासक्तिमयो महिमाऽण्वप्यपचीयते । प्रत्युतान्येभ्यो यशस्सङ्क्रामणेन वर्धत एव सुतराम् । तादृशञ्च ज्ञानमृग्वेदे समुन्मीलितम् । संधुक्षितश्चासौ तत्र जिज्ञासाग्निः । यजुःषु तु तस्यैव ज्ञानस्य लोकहितार्थे स्वार्थात्यन्तार्पणमयं राष्ट्रोपयोगितत्त्वं सम्प्रदर्शितम् । सामसु तु "नियतिनियमरहिताऽनन्यपरतन्त्राह्लादैकमयी काऽप्यन्यैवाऽनुसृता नवरसरुचिरा सरणिः" यत्र च वीरः प्रधानो रसानाम् । परमिदानीं तस्यैव ज्ञानराशे र्यज्ञपुरुषाङ्गभूतपुरुषव्यक्तिहितकारि किमपि तत्त्वमाविष्कर्तुमुदयते भगवान् निगमपुरुषः ।

तस्याथर्वणस्य वेदस्य वाचस्पतिदेवताकमृक्चतुष्टयात्मकं प्रथमं सूक्तम् । अथर्वा च सूक्तस्यर्षिः ।

तत्र चादावेवेदं सूक्ते रूपकम् । सकलस्याऽपि जगतस्तमसाच्छादकत्वाद् वृत्रेति यथार्थतया समा-

स्ययाभिधीयमानस्याज्ञानशत्रोर्वधाय स्वकीयामतनुं धनुर्यष्टीकृत्य तत्र प्रयत्नमयीं ज्यां सञ्चितसञ्चेष्यमाणयो र्ज्ञानयोरधिगमाधिजिगमिषाख्ये कोटिद्वये समारोप्याततधन्वा जिज्ञासुरव्यर्थशरसन्निपाताय बलवन्तमात्मानं कर्तुं तमेव बलानां परमं निधानं शरण्यानां परमं शरण्यं भगवन्तं परमपुरुषमुपधावमानः प्रणयानुनयगद्‌गदया वाचाऽभिमुखीकुरुते "ये त्रिषप्ताः परियन्तीति" अत्र वाचस्पतिरिति पदेन भगवतः स्मरणाज्ज्ञानप्रार्थनमत्रेति ध्वन्यते ।

इदञ्चाथर्वणस्य वेदस्य पुरुषाणामैहिकाभ्युदयविशेषनिर्वर्तकत्वं प्रमाणान्तरादप्यवसीयते । तथा चाथर्वणिकानां मन्त्राणां शान्तिकपौष्टिकादिषु कर्मसु रथशस्त्रादिसंस्कारेषु च विनियोगः कौशिकादिसूत्रेषु प्रतिपादितइति व्याजोघुष्यते निगमभाष्यकृताचार्येण सायणेनापि । कीदृशोऽसौ शस्त्रादिसंस्कारइति तत्त्वन्त्वन्यदेव । यद्धि तत्त्वमनवबुध्यमानैः भूतप्रेतपिशाचकृत्तिकादिसाधनपरतया व्याख्यानेन व्याकुलीकृतम्प्रसन्नगम्भीरमनाविलं भगवत्याः श्रुतेर्हृदयं भाष्यकृद्भिरेभिः । तच्च यथामति यथास्थानं व्याख्यास्यते । नत्वनेनास्मास्ववलेपोद्दामशीर्षत्वमारोपि । यद्यस्माभिस्तल्लब्धं तत्रापि हेतुभूतो विलुप्तवैदिकमर्यादापुनरुद्धारकः प्रतिवादिभयङ्करो यावद् वैदिकवाङ्मयपारावारपारीणः मृदुकठिनयोरुभयोरपि तत्त्वयोर्विचित्रमेकत्राधिगमस्थानं भगवान् मौर्वीटङ्कारजन्मा । यद्वाऽत्र कारणं ज्ञानकणिकाः काश्चन विद्याव्यसननिर्धूतपाप्मनां ज्योतिष्मतां प्रकृतितत्वावबोधेऽप्रतिमप्रतिभाभास्वराणामार्यजातेर्विस्मृतप्रसूतीनां विप्रवराणाम्पाश्चात्यविदुषां गृहप्राङ्गणे भिक्षयाधिगताः । सायणादयोऽपि च सकलशास्त्रावगाहिनो वेदाभ्यासपराङ्मुखेऽस्मिन् घोरतमे काले विनियोगादिसामग्रीसंग्रहीतारः पदवाक्यप्रमाणेषु त्रिष्वपि तन्त्रेष्वव्याहतगतयो मादृशानान्तु वन्दनीया एव ।

---

न वेदस्य प्रामाण्यसिद्ध्यर्थमन्यत् प्रमाणं स्वीक्रियते । किन्त्वेतत् साक्षिवद् विज्ञेयम् । वेदानां स्वतः प्रमाणत्वात् सूर्यवत् । यथा सूर्यः स्वप्रकाशःसन् संसारस्थान्महतोऽल्पांश्च पर्वतादीन् त्रसरेण्वन्तान् पदार्थान् प्रकाशयति तथा वेदोऽपि स्वयं स्वप्रकाशः सन् सर्वा विद्याः प्रकाशयतीत्यवधेयम् ।

—स्वामी दयानन्दः

० ० ० ०

वेदेषु शब्दार्थसम्बन्धाः परमेश्वरादेव प्रादुर्भूताः तस्य पूर्णविद्यावत्वात् अतः किं सिद्धमग्निवायुरव्यंगिरो मनुष्यदेहधारि जीवद्वारेण परमेश्वरेण श्रुतिर्वेदः प्रकाशीकृत इति बोध्यम् ।

—स्वामी दयानन्दः

# तत्वपरामर्शः

( स्नातक: श्री सत्यव्रतः माटुंगा, बम्बई )

एकादशोपनिषत्सु बृहदारण्यकोपनिषदोऽनन्य-स्थानमिति विदितमेव विपश्चिदपश्चिमानाम् । तत्र ( ३ । ८ । ११ ) एकं वाक्यं यद् "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ' इति वर्तते । तत्

"नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ... इति आत्मभेदप्रतिषेधात्" ब्रह्मसूत्रशां १।३।१२ इति शाङ्करभाष्यं जीवब्रह्मणोर्भेदनिषेधकमिति यदुक्तं तदपि पूर्ववाक्यैर्विरुद्धं प्रमाणान्तर्विरुद्धं स्वव्याहतं जीवभेदानिषेधकं च । तथाहि--

'नान्यदतोऽस्ति द्रष्टृ इति वाक्यं अक्षरप्रकरणस्थं एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्या चन्द्रमसौ विधृतौ तिष्ठतः । द्यावापृथिव्यौ विधृते तिष्ठतः, निमेषा मुहूर्ता अहोरात्र्याण्यर्धमासाः, ऋतवः, संवत्सरा इति विधृता स्तिष्ठन्ति इत्यादि वाक्यं एतस्य अक्षरस्य प्रशासने = आज्ञायां ( आज्ञामात्रेण ) सूर्याचन्द्रमसौ विधृतौ सन्तौ तिष्ठतः, द्यावापृथिव्यौ विधृतौ तिष्ठतः, निमेषा, मुहूर्ता, अहोरात्राणि, अर्धमासा, मासा, ऋतवः संवत्सराः, तदभिमानिदेवाश्च विधृताः सन्तस्तिष्ठन्ति इति सूर्यादिदेवतानां ( दिव्यगुणयुक्तानां ) अक्षरनामकं ब्रह्मशासकमित्याद्युक्त्या

(१) सूर्याचन्द्रमसौ विशिष्टज्ञानवता निर्मितौ, प्रकाशत्वात् प्रदीपवत्

(२) जगद्व्यवस्था प्रशास्तृपूर्विका, व्यवस्थात्वात् राज्यव्यवस्थावत्

(३) विमतौ नियन्तृपूर्वकौ विशिष्टचेष्टावत्त्वात् भृत्यादिवत्

(४) विमते प्रयत्नवता विधृते सावयवत्वेऽप्यस्फुटितत्वात् गुरुत्वे सति अपातित्वात् चेतनावत्त्वेऽपि अस्वतन्त्रत्वाच्च हस्तन्यस्तपाषाणादिवत् ।

इत्याद्यनुमानसूचनद्वारा शास्यशासकयोः, धार्यधारकयोः सूर्यादिदेवता अक्षरनामकब्रह्मणोश्च विरुद्ध-धर्मवत्वात् भेद उक्तः '

एवं यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन्लोके जुहोति, यजते तपस्तप्यते, बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति, यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः, अथ एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ( बृ. । ३ । ८ । १० ) इति परमात्मनः ( अक्षरस्य ) ज्ञेयत्वं, जीवस्य ज्ञातृत्वं परमात्मज्ञानपूर्वकं एव कृतानां यज्ञयागतपआदीनां मुक्तिफलकत्वं परमात्माऽज्ञानपूर्वकं कृतानां होमयागादीनां नश्वरफलकत्वमित्याद्युक्त्या ज्ञातृज्ञेयभावेन फलप्रापकत्वप्राप्यफलत्वादिना भेद उक्तः । तथा जीवानां द्रष्टृत्वादिकमुक्तं इति 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यं यदि ब्रह्मान्यद्रष्टृत्वनिषेधकं ( जीवब्रह्मनिषेधकं ) जीवस्य द्रष्टृत्वनिषेधकं चेति यद्युच्यते तदा पूर्ववाक्यविरोधः स्पष्टः ।

प्रमाणान्तरविरुद्धं च जीवब्रह्मणोर्भेदनिषेधनम् । जीवब्रह्मणोर्भेदबोधकानि श्रुतिस्मृतिगीतावाक्यानि बहून्युदाहृतानि । उदाहरिष्यन्ते चोतरत्र भेदबोधकानि श्रुतिस्मृतिगीतावाक्यानि ।

तथा "आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृह० ) इति वाक्यं परमात्मना द्रष्टव्यत्वं श्रोतव्यत्वं निदिध्यासितव्यत्वं च बोधयन्, जीवस्य द्रष्टृत्वं श्रोतृत्वं मन्तृत्वं च बोधयति ।

एवं 'तमेव विद्वान् अमृत इह भवति' "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" ।

"पृथगात्मानं प्रेरितारं च मत्वा" इत्यादि परस्सहस्त्राणि प्रमाणानि जीवानां द्रष्टृत्वश्रोतृत्व-

मन्तृत्वबोधकानि तत्र तत्रोदाहृतानि इति तद्विरोधस्तु स्फुट एव ।

न च जीवस्य द्रष्टृत्वादिप्रतिपादकानि वाक्यानि व्यावहारिकद्रष्टृत्वादिकं बोधयन्ति, इदं वाक्यं पारमार्थिक द्रष्टृत्वादिकं निषेधतीति न तद्विरोध इति वाच्यम् । श्रुत्यादिप्रमाणसिद्धद्रष्टृत्वादेः व्यावहारिकत्वकथनयोगस्य पूर्वं प्रदर्शितत्वेन व्यावहारिकपारमार्थिकभेदेन विरोधपरिहारस्य कर्तुमशक्यत्वादिति दिक् ।

---

# अग्नि-स्तुतिः ( अग्नि-दूतः )

लेखकः — श्री भगवद्दत्तो वेदालङ्कारः

[ अग्निदेवताकस्य ऋ० १।१२ सूक्तस्यायं पद्येषु भावानुवादः सामान्यजनानां सुखबोधाय सरलायां संस्कृतभाषायां विहितः । यजमान – भक्तः यज्ञे देवानामानयनाय "अग्ने देवां इहावह" अग्निं दूतरूपेण वृत्वा तान् प्रति प्रहिणोति, तेभ्यः स्वसंदेशमपि ददाति ] ।

१. ओ३म् अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।

ऋ० १।१२।१

दूतवरणम्—

अग्निं तु वृणमः किल देवदूतं
चारुं सदा सर्वगुणैरुपेतम् ।
पूर्वस्थितं सर्वपुरोहितं तं
दूतत्वकार्ये निपुणं पुराणम् ।। १ ।।

जाता बुभुत्सा हृदि मानुषाणाम्
स्वाभाविकी सा श्रुतितत्पराणाम् ।
दूतत्वकार्ये कथमग्रजन्मा
देवो हि वेदे भणितः पुराणः ।। २ ।।

होता—

हव्यादिवोढा खलु देवतात्मा
विश्वस्य वेत्ता स चराचरस्य ।
स्तुत्यः स पूर्व्यः प्रथितो हि वेदे
स्वाह्वानकर्ता दिवि देवतानाम् ।। ३ ।।

सुक्रतुः—

लोकेषु यज्ञः प्रसृतो विशालो
देवात्मनि स्वार्पणरूपहव्यः ।
देवो ह्यसौ सुक्रतुनामधेयो
यज्ञस्य कर्ता ननु देवयोनिः ।। ४ ।।

२. ओ३म् अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ।

पुरुप्रियः—

यद्यस्ति कश्चिद् भुवि मानुषाणाम्
कामं प्रियः पावनदेवतासु ।
प्रेमास्पदं सोऽभिहितः पुरूणाम्
वेदेषु सर्वेषु च हव्यवोढा ।। ५ ।।

हव्यवाहः—

ज्ञातं मया सुष्ठु विचारितं वै
हव्यं प्रदातुं दिवि देवताभ्यः ।
नास्तीह लोके तु विहाय वह्निम्
कोऽप्यन्यदेवो वहने समर्थः ।। ६ ।।

विश्पतिः—

पाति प्रविश्याखिलभूतजातं
सूक्ष्मं च लोकं स पतिः प्रजानाम् ।
प्रोतः स देवः सकलासु पूर्षु
प्रज्ञायते वै मुनिभिः प्रभुः सः ॥ ७ ॥

हवीमभिः—

अग्निं सुदेवं बहुधा नतोऽह-
माह्वानमन्त्रैः सततं पुराणैः ।
वारं तु वारं प्रणतोऽस्मि देव-
मुत्तिष्ठ देहे यजनाय वह्ने ! ॥ ८ ॥

३. ओ३म् अग्ने देवाँ इहावह जज्ञानो
वृक्तबर्हिषे । असि होता न ईड्यः ।

अग्ने त्वमेवासि हृदि प्रलीन
इध्यस्व सन्दीप्ततमैः समेधैः ।
हार्दं ममैतत् प्रसृतं तु बर्ही
रुद्धं समग्रं यजनारिवर्गैः ॥ ९ ॥
रिक्तं तु बर्हिः कुरु देवताभ्यः
हत्वा रिपूंस्त्वं सुरहन्तृसंघान् ।
देवान् समग्रान् दिवि राजमानान्
यज्ञं विधातुं त्वमिहानयस्व ॥ १० ॥
ईड्योऽसि पूज्योऽसि सुवन्दनीयो
होता त्वमेवासि चराचरस्य ।
पुनः पुनः प्रार्थनयाऽनया वै
देवान् समग्राँस्त्वमिहानयस्व ॥ ११ ॥

४. ओ३म् ताँ उशतो विबोधय यदग्ने
यासि दूत्यम् । देवैरासत्सि बर्हिषि ।

अग्ने यदा यासि विबोधनाय
प्रतीक्षमाणान् दिवि भासमानान् ।
वाच्यास्त्वया ते विहिता सुसज्जा
सज्जां विदध्वं चलनाय यूयम् ॥ १२ ॥

यज्ञाय वेद्यां हृदि संस्थितायां
वन्दारुवृन्दारकदिव्यसंघाः ।
समुत्सुकास्ते स्वयमेव सर्वे
स्थितिं शरीरे खलु कामयन्ते ॥ १३ ॥
त्रस्यन्ति ते दानवदुष्टसंघात्
प्राप्ताधिकारान्नरदेहसंस्थात् ।
देवाः प्रवेशं हृदि नारभन्ते
रिक्ता यतो नास्ति मनःस्थली सा ॥ १४ ॥
अस्माच्च हेतोर्भण देवसंघान्
स्थास्यामि देवैः सह वेदिमध्ये ।
रक्षां च सम्यक् भवतां विधास्ये
सज्जां विदध्वं चलनाय सर्वे ॥ १५ ॥

५. ओ३म् घृताहवन दीदिवः प्रतिष्म
रिषतो दह । अग्ने त्वं रक्षस्विनः ।

घृतं तु वीर्यं कथितं विबुद्धै-
र्वेदोदधिं सुष्ठु विगाहमानैः ।
भक्त्या प्रदेयश्चमसो घृतस्य
तस्मै सदा विष्णुपदाक्रमज्ञैः ॥ १६ ॥
वीर्यं च विष्णुः श्रुतिषु प्रसिद्धः
सोमात्मकञ्चापि निगद्यते तत् ।
विष्णोस्त्रिपद्यां क्रमते तदेव
तत् सोमपानं विदधाति सर्वम् ॥ १७ ॥

दीदिवः—

दिव्या प्रदीप्तिः प्रथते सुवह्ने-
स्तस्यैव धारा क्रमते तथोर्ध्वम् ।
विज्ञानसूर्यं खलु भाति भाभि-
स्तत् सोमपानं विदधाति सर्वम् ॥ १८ ॥
हिंसाप्रवीणाऽऽसुरशक्तिरेषा
विज्ञानसूर्यं वलते प्रवृद्धा ।
नित्यं च यूनां ग्रसते प्रवीर्यं
तामासुरीं त्वं कुरु वै विदग्धम् ॥ १९ ॥

६ ओ३म् अग्निनाग्निः समिध्यते कवि गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ।

अग्निः समिद्धो भवतीह देहे
प्रवृद्धवह्नेः पुरुषस्य सङ्गात् ।
सर्वत्र चैतज्ज्वलने विधानं
धात्रा प्रदीपेषु यथा विधत्तम ।। २० ।।

देहस्त्वयं सद्म विभूतिजानां
क्रीडाङ्गणञ्चापि तदासुरीणाम् ।
आभिर्निरुद्धं सकलं शरीरम्
युद्धं तु यत्र प्रथते च शश्वत् ।। २१ ।।

अग्ने ! पतिं त्वां प्रभणन्ति वेदाः
आवासभूमेः खलु देवतानाम् ।
कविं पुराणं श्रुतिषु प्रसिद्धं
युवानमाहुः सततं सुविज्ञाः ।। २२ ।।

हव्यं सदा त्वं वह देवताभ्यः
आस्येन तेन ज्वलतार्चिषा वै ।
ज्वाला तु जिह्वा प्रथितागमेषु
जुह्वास्य नाम्नात्र निगद्यसे त्वम् ।। २३ ।।

७ ओ३म् कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ।

कविं पुराणं स्तुहि देव देव-
मृतात्मकं तं धृतधर्मरूपम् ।
हिंसाविहीनेऽध्वरनामधेये
तं सत्यधर्माणमलङ्कुरुष्व ।। २४ ।।

देवो ह्यसौ शक्तिधरः प्रवृद्धः
रोगांश्च हर्तुं सततं समर्थः ।
रोगास्त्वमीवाः श्रुतिषु प्रसिद्धा
हन्तारमेषां सततं भजस्व ।। २५ ।।

८. ओ३म् यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ।

बाह्यं तथैवान्तररूपहव्यं
नानाविधं चारुतरं विचित्रम् ।
श्रद्धानुरूपं किल साररूपम्
दानाय तस्मै समलङ्कुरुष्व ।। २६ ।।

श्रद्धां समालम्ब्य हविष्पतिर्यः
दूतं प्रपूज्यं परिचर्यया त्वाम् ।
नक्तन्दिवं पूजयतीह लोके
त्वं प्राविताऽस्मै भव देवमूर्ते ।। २७ ।।

९. ओ३म् योऽग्निं देववीतये हविष्मां आविवासति । तस्मै पावक मृडय ।

दिव्यं च तन्तुं हृदि सन्निधातुं
कान्तिं च दिव्यां वपुषि प्रभर्तुम् ।
यस्त्वां हविष्मान् सततं तनोति
पुनीहि तं पावक देवभक्तम् ।। २८ ।।

स्थूलं च सूक्ष्मं सकलं शरीरं
संशोध्य सम्यक् परिवर्ज्य दोषम् ।
बद्धं तथैवान्तरजालनद्धं
तं देवभक्तं सुखिनं पुनीहि ।। २९ ।।

१०. ओ३म् स नः पावक दीदिवोऽग्ने देवाँ इहावह । उप यज्ञं हविश्च नः ।

दिव्या प्रदीप्तिस्तव देवयोने !
विज्ञानदात्री तमसां निहन्त्री ।
संहारकर्त्री ननु साऽऽसुरीणां
सम्पावयित्री नरशक्तिधाम्नाम् ।। ३० ।।

अग्ने यदा यासि विबोधनाय
देवान् समग्रान् हृदि संनिलीनान् ।
वेदिं च पूतां कुरु पूर्वमेव
यज्ञस्य पार्श्वे वह तद्धविष्यम् ।। ३१ ।।

११. ओ३म् स नः स्तवान आभर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ।

नव्यां च नित्यं स्तुतिगानमालां
भक्त्या प्रदेयां तव कण्ठमध्ये ।
ग्रथ्नामि पुष्पै ऋचि सामरूढै
देहि स्तुतस्त्वं च रयिं सुवीराम् ।। ३२ ।।

१२. ओ३म् अग्ने शक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः ।

शोचिः शुभं शुक्रवता विधार्यं
तद्ब्रह्मचर्याचरणं पवित्रम् ।
दिव्यं वपुर्दिव्यबलं प्रकृष्टं
तत्साग्निना देवजनेन साध्यम् ।। ३३ ।।

देवाश्च सर्वे वपुषि प्रशस्ते
ब्रह्माण्डहर्म्ये परमे प्रकृष्टे ।
छन्दो वपुस्ते ननु सूक्ष्मरूपं
सन्धार्य शश्वन्निवसन्ति सर्वे ।। ३४ ।।

सूक्ष्मं च रूपं बहुदिव्यजालै-
श्छन्दोमयं धर्मधृतैः सुनद्धम् ।
प्राप्तं मयाऽपि श्रुतिसाधनैस्तैः
कर्तुं समर्थः खलु देवहूतिम् ।। ३५ ।।

सन्धार्यसे त्वं हृदि देवतुल्यै-
राप्तैस्तथा योगिजनैरुदारैः ।
अग्ने ! प्रभो ! त्वं शृणु देवयोने
स्तोमं तवेमं खलु नः जुषस्व ।। ३६ ।।

—०—

# वैदिकी संस्कृतिः

श्री पं० धर्मदेवो वेदवाचस्पतिः

## वेदानां महत्त्वम्

आसन् किल पुरा प्रभूताः सभ्यता अस्मिन् जगतीतले । असीरिया–बेबिलोनिया–मिश्र–ग्रीस–रोम–चीन–भारतप्रभृतीनां चिरन्तनाः सभ्यताः श्रूयन्ते । तास्विदानीं केवलं भारतीया सभ्यतैव जीवति, अन्याः सर्वाः सम्प्रति कालक्रमात् क्वापि विलयं गताः । किं तत्र कारणम् । एतदेव यत्तत्र अन्तर्हितं बीजं निर्बलमासीत् । भौतिकसुखसमृद्धिरेव सुखस्य यूनमिति मन्वानास्ताः भोगपरायणं स्वार्थसिद्धिकरमेव जीवनं समर्थयन्त्यो मात्स्यन्यायं प्रावर्तयन्, स्वयमपि तद् ग्रस्ता बभुवुः ।

यादृशो महिमा, गरिमा, प्रथिमा चासीत् पुराऽस्माकं देशस्य तस्य सर्वस्य मूलं वैदिक–संस्कृतिरेव वर्तते । एतासु सर्वासु पूर्वोक्तासु सभ्यतासु आसीत् मनोः महान् प्रभावः–इति पुष्टैः प्रमाणैः साधितमनेकैः शेमुषीमद्भिर्विपश्चिद्भिः । अस्य मनोर्गौरवं अस्माकं देशस्य सर्वे शास्त्रकारा अपि निंशंकमित्थं जगुः—"यत् किं च वै मनुरवदत् तद् भेषजं भेषजतायाः" । परं तेनैव सकलगुणनिधानेन विश्ववन्द्येन मनुना मुनिना स्वीये धर्मसमाम्नाये वेदानां यत् गौरवं प्रतिष्ठापितं, तदेकतमेव वेदानां महत्त्वप्रतिपादनाय अलम् । भगवान् मनुराह—

वेदोऽखिलो धर्ममूलम् ।२।६।।
सर्वज्ञानमयो हि सः ।२।७।।

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ।।
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।

न केवलं मनुरेव परमन्येऽपि भारतीयाः विचक्षणसक्षणाः वेदमपौरुषेयं वचनं आहुः ।
'तद्वचनादाम्नायस्य प्रामाण्यम्' इति ब्रुवता श्रीमता कणादमुनीना ईश्वरस्य वाक्यत्वाद् आम्नायस्य वैदिकवाङ्मयस्य प्रामाण्यमंगीकृतम् । 'शास्त्रयोनित्वात्' इति वेदान्तसूत्रेणापि अंशतोऽयमेवार्थः स्फुटीक्रियते । स्वयं भगवती श्रुतिरप्येवमाह—

तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।।

'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति पतञ्जलिमुनिना प्रोक्तेन विधिना सृष्ट्यादौ वेदेतरग्रन्थाभावाद् वेदस्यापौरुषेयत्वं स्फुटमेव । अत्र विषये नाण्वपि सन्देग्धव्यम् । अत एव कर्तव्याकर्तव्यनिर्णये सदसद्विवेके च वेदा एव परमं प्रमाणमित्याहुः मनुप्रभृतयः सर्वे विद्वांसः ।

धर्मं जिज्ञासमानानां प्रमाणं परम श्रुतिः ।। मनु. ।।
प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।

प्रत्यक्षानुमानशब्दैः प्रमाणैरेव यथार्थज्ञानप्राप्तिः । प्रत्यक्षानुमानाभ्यां उपायसिद्ध्यभावे तृतीयं शब्दप्रमाणं वेद एव अंगीकरणीयं भवति । अतीन्द्रियाणामप्यर्थानां साक्षाद् दर्शनं एषु विद्यते, अस्मादेव तेषां वेद इति संज्ञा विश्रुता ।

तस्माद् प्रथमं तावद् वेदानां इदमेव महत्त्वं यत्ते सृष्ट्यादौ भगवता सकलजगत्प्रभविष्णुना विष्णुना सकलजनकल्याणाय तत्त्वार्थविवेकाय च विरचिताः । तथाविध निर्भ्रान्तं विविधविद्यानिदानं वेदाभिधानं ज्ञानागारमधिगम्य अस्माकं प्राचीनाः ऋषयो मुनयः कवयः स्मृतिकारा अन्ये च सर्वे विद्वांसः स्वकीयान् ग्रन्थान् प्रणिन्युः । सर्वैरेव आचार्यैः स्वग्रन्थादौ इदमंगीकृतम् । वेदे पुराणी अपि अक्षुण्णा कल्याणी सा वाणी, या अद्यावध्यपि निरवद्या सकलसत्यविद्योतिनी अविद्यान्धकारविध्वंसनी चेति सत्यं प्रतीमः ।

अतएवास्माकं धर्मस्य, संस्कृतेः, सदाचारस्य ज्ञानविज्ञानस्य मूलं इमे वेदाः । परेषां प्राचीनानां पुरुषाणां वचनोदाहरणैः को लाभः । यद्यस्ति एषु वेदेषु किंचिदुदात्तं उपादेयं वा तदुच्यताम्, इत्यस्ति केषांचित् वाक्पटूनां प्रगल्भं वचः । यतो हि ते केषांचित् स्वधर्माग्रहग्रहिलानां पाश्चात्यविदुषां मुखात् लेखाच्च 'असभ्याना प्रलापमात्रमेव वेदाः" इति निशम्य संशयाकुलिताः वेदाध्ययनं निरर्थकं वृथाकालक्षेपकरं च मन्यन्ते । तेषां शंकानिराकरणाय स्थालीपुलाकन्यायेन किंचिदुच्यते ।

एते वेदा न आविकानां असभ्यानां वा गीतविलसितमात्रं परं सूक्ष्मेक्षिकया ईक्ष्यमाणा विविधविद्यानिदर्शकाः अर्थगम्भीराश्च सन्ति । आदौ तावदध्यात्मविद्या निदर्शकाः केचिन्मंत्राः प्रस्तूयन्ते—

पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेवविदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।।

किं बहुना ऋग्वेदस्य नासदीयसूक्तं, हिरण्यगर्भसूक्तं, अस्य वामीय सूक्तं, विश्वकर्मादिसूक्तजातं, तथैव यजुर्वेदस्य पुरुषसूक्तं, षट्त्रिंशत्तमो अन्तिमश्चाध्यायः, अथर्ववेदस्य च स्कम्भसूक्तं, उच्छिष्ट-

सूक्तं चेति सर्वं अध्यात्मविषयमेव प्रस्तुवन्ति । न केवलं अध्यात्मविद्यां परं क्षात्रविद्यां, युद्धविद्यां, शासनदर्शनं, कृषिवाणिज्यज्योतिषायुर्वेदादि लौकिकोभ्युदयकरं विविधं ज्ञानविज्ञानजातमपि अक्षीलक्षीभवति आम्नायवचनेषु । चतुर्णां वर्णानां आश्रमाणां च व्यवस्था वर्णिता ।

ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद वैश्यः पद्भ्यां शूद्रोऽजायत ॥

अन्ये च बहवो मानवोचिताः सत्य-श्रद्धा-मैत्री- दीक्षा- तपः- मनोवशीकारप्रभृतयो गुणाः जीवनोद्धाराय आचरितुमादिष्टाः । तद्यथा—

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ।
मित्रस्य चक्षुषा समीक्षामहे ॥
द्विषो नो विश्वतो मुखाति नावेव पारय ।
अप नः शोशुचदधम् ॥
कृधी न ऊर्ध्वाञ्चरथाय जीवसे ॥
विश्वदानीं सुमनसः स्याम ॥
ऋतस्य धीतिर्वृजिनानि हन्ति ॥
तन्मे मनः शिवसंकल्पमस्तु ॥

तथैव संज्ञानसूक्ते सामाजिकजीवनस्य, सांमनस्य सूक्ते सत्कुटुम्बजीवनस्य, पृथिवीसूक्ते राष्ट्रसमृद्ध्या उपायाः प्रदर्शिताः । नारीणां यन्महत्वं वेदेषु प्रतिपादितं तन्नान्यत्र कस्मिंश्चिद् धर्मे दृश्यते ।

एतत् सर्वं विलोक्यैव मनुना वेदमहिमा वर्णितः । अथ अन्यदप्यस्ति कारणं येन वेदानां महत्त्वं सर्वैः परधर्मावलम्बिभिः पाश्चात्यैरपि स्वीकृतम्, ये वेदान् नापौरुषेयान् मन्यन्ते । India what it can teach us नाम्नि पुस्तके मोक्षमूलरः ऋग्वेदस्य अतिप्राचीनतां प्रमाणयन् प्रागैतिहासिक कालिकानां विविधानां विषयाणां अन्वेषणाय परमप्रामाण्यं मन्यते , कथं प्राक्काले धर्मस्य, भाषायाः, विवाहादिप्रथानां विकासोऽभूत्, अस्य ज्ञानाय वेदा महान्त उपयोगिनः सन्ति—इति ऐतिहासिकपक्षपातिनः पाश्चात्या अपि स्वीकुर्वन्ति ।

परं महत् कष्टं यत् चिरकालं वेदानां यावत्-पठनपाठन-परम्पराया विलोपाद अस्पष्टार्थाः संवृत्ता एते इदानीमस्माकं कृते । यज्ञविनियोगपरमर्थं विधाय ततोऽप्यधिकं दुर्बोधाः कृताः । विविधानां पद्धतीनां सम्यगालोडनं विधाय, अस्माभिः वेदानां सन्मूलानां वैदिकग्रन्थानां च सूक्ष्ममध्ययनं विधेयम् । तेन इतोऽप्यधिकं महत्त्वं प्राकाश्यं यास्यति—इति दृढो नो विश्वासः, तस्मादेव श्री शंकराचार्य स्वामिदयानन्द श्री अरविन्दप्रमुखा वेदेषु श्रद्धाबुद्धयः प्रयत्नशीलाश्च आसन् । समयाभावादलमतिपल्लवितेन ॥



# वेदमन्त्रेषु वीरपुरुषाणां वर्णनम्

श्री पं. श्रीपाददामोदर सातवलेकरः, स्वाध्यायमण्डलं, पारडी, जिः बलसाड

वेदमन्त्रेषु वीरपुरुषाणां वर्णनं मरुतां मन्त्रेषु दृश्यते। तत् तत्र दृष्ट्वा सर्वैः ज्ञातव्यं यत् वेद-मन्त्राः वीरभावमपि प्रकाशयन्तीति। ये मरण-पर्यन्तं उत्थाय युध्यन्ते ( मर+उत् ) ते मरुतः वीरोत्तमाः। एतेषां सप्त-सप्त-वीराणां एका पंक्तिः वर्तते। अर्थात् प्रत्येकस्यां पंक्त्यां सप्त-सप्तवीर-पुरुषाः भवन्ति, एतेषां सप्तानां पंक्तीनां एको मरुतां गणो भवति। अर्थात् सप्तानां पंक्तीनां एको गणः संघो वा जायते। युद्धसमये एते मरुतः शत्रोरुपरि यदा आक्रमणं कुर्वन्ति, तदा ते सप्तसप्त-वीराणां पंक्तिषु आत्मानं विरचय्य युद्धभूम्यां युद्धकार्यं कुर्वन्ति। इत्थमेतेषु सुदृढ़ं संघटनं वर्तते। एतदेतेषां संघटनं तेषां बलं संवर्धयितुं सहाय्यकं भवति। अतः मरुद्देवतानां वर्णनं वेदमन्त्रेषु पठित्वा स्व-कीयानां सैनिकानां सांघीयं बलं कथं संवर्धितव्य-मिति ज्ञातव्यम्, तथा तथैव स्वकीयानां सैनिकानां रचना कर्तव्या। एवं स्वसैनिकानां बलं संवर्धितं चेत्, तत् राष्ट्रस्य सैनिकीयबलसंवर्धनाय सहायकं भविष्यति, इत्यत्र न कोऽपि संशयलेशः।

गोमातरः यत् शुभयन्ते अञ्जिभिः ।।

ऋग्वेद १. ८५. ३।

स्वकीयां भूमिं मातृवत्पूजनीयां मत्वा ये वीरा अञ्जिभिः स्वकीयैरलंकरणैः आत्मानं शोभयन्ते ते मरुतः सन्ति। अत्रत्यं मरुतां सैनिकानां **'गो-मातरः'** इति विशेषणं अतीव मननीयं वर्तते। गां भूमिं मातृभूमिं ये स्वकीयां मातरं मन्यन्ते, तस्या उन्नत्यै च स्वसर्वस्वं समर्पयितुमिच्छन्ति, ते वीरा आत्मानं स्वकीयैरलंकरणैः वीरोचितवस्त्रादिकैः शस्त्रैश्च तथा युद्धोपकरणैः शोभयन्ति, ते वीराः प्रशंसनीयाः। ते च शस्त्रास्त्रैः यदा सुसज्जा भवन्ति, तदा ते शोभना दृश्यन्ते। यथा अलंकारैः स्त्रियः शोभन्ते, तथैवैते वीराः शस्त्रास्त्रैः समलंकृताः शोभना दृश्यन्ते। उक्तं च तथैव वेदमन्त्रे—

स्वायुधासः इष्मिणः सुनिष्काः।
उत स्वयं तन्वः शुम्भमानाः ।।

ऋग्वेद ७. ५६. ११।

स्वायुधासः शोभनानि युद्धायुधानि धारयन्त इष्मिणः सुनिष्काः शोभनानि आभूषणानि धारय-न्तश्च स्वयं तन्वः शुंभमानाः स्वकीयं शरीरं यथा शोभनं भवेत् तथा तं शरीरं शोभनतमं कुर्वाणा एते वीराः दृश्यन्ते।

एतेषां सैनिकानां वीराणां दर्शनं शोभनं दृश्यते इति सर्वे जानन्त्येव। एते वीराः सर्वे मिलित्वा एकस्मिन्नेव महति गृहे निवसन्ति, तथैव वेदमन्त्रेण वर्णितं दृश्यते, यथा—

समोकसः इषुं दधिरे।

ऋग्वेद १. ६४. १०।

समोकसः एकस्मिन्नेव गृहे निवसन्ति सर्वे तथा सर्वेषां सैनिकानां महान्ति गृहाणि भवन्ति एक-स्मिन्नेव स्थाने। ते सर्वे इषुं शस्त्रं धृत्वा युद्धाय प्रस्थानं कुर्वन्ति। एतेषां एतादृशेन संघटनेन सां-घिकी शक्तिः संवर्धिता भवति। तया शक्त्या च ते सर्वान् स्वकीयान् शत्रून् पराजयन्ति। आत्मनः विजयो यथा स्यात् तथा ते संघशः स्वकीयमाचरणं कुर्वन्ति।

उरुक्षयाः सगणा मानुषासः ।।

अथर्व. ७. ८२. ३ ।

एते मरुतः उरुक्षयाः । एतेषां गृहाणि महान्ति भवन्ति । यतः तेषु गृहेषु एभिः वीरैः संघशः निवसितव्यं भवति, अतः तेषां गृहाणि महान्ति भवन्ति । एते वीराः सर्वे समानाः सन्तीति सर्वे जना अनुभवन्त्येव । न तेषु कोऽपि श्रेष्ठः कनिष्ठो वा । तेषां एवमेव वर्णनं वेदमन्त्रेषु दृश्यते यथा—

अज्येष्ठासो अकनिष्ठास एते
सं भ्रातरो वावृधु सौभगाय ।।

ऋ. ५. ६०. ५ ।

ते अज्येष्ठा अकनिष्ठास उद्भिदो ।
ऽमध्यमासो महसा विवावृधुः ।।

ऋ. ५. ५९. ६ ।

तेषु वीरेषु मरुत्सु न कोऽपि ज्येष्ठ, न कोऽपि कनिष्ठः, न च कोऽपि मध्यमः । ते सर्वे समानाः भ्रातरः इव सर्वाणि राष्ट्रस्य सेवाकार्याणि सदा कुर्वन्ति, अतः ते महसा महत्या शक्त्या वावृधुः संवर्धमाना दृश्यन्ते । एवमेव सर्वैः वीरैः वर्तितव्यं इति बोधः एतेषां वर्णनात् प्राप्यते । स बोधः सर्वैः स्वीकर्तव्यः तस्य परिपालनं च कर्तव्यम् ।

महान्तः विराजथ ।

ऋ. ५. ५५. २ ।

महासामर्थ्ययुक्ता भूत्वा एवमेव सर्वे वीराः राष्ट्रे विराजन्तु । राष्ट्रं सुवीरयुक्तं सुरक्षितं च कुर्वन्तु । एते वीराः स्वराज्यं सुरक्षितं कृत्वा सामर्थ्ययुक्तं कुर्वन्तीति हेतुना ते वीराः सर्वत्र वन्दनीया भवन्ति अतः कथितं—

मारुतं गणं नमस्य ।

ऋ. ५. ५२. १३ ।

मारुतं शर्धं अभि प्रगायत ।

ऋ. १. ३७. १ ।

वन्दस्व मारुतं गणम् ।

ऋ. १. ३८. १५ ।

मारुतं गणं नमस्कुरु । मरुतां बलं सर्वत्र गेयं । तस्य सामर्थ्यस्य गानेन तेषां महद्यशः सर्वत्र संमान्यते । तेन सर्वेषां कल्याणं भवितुं शक्यमिति सर्वैर्ज्ञातव्यम् ।

एतद् मरुतां वर्णनं दृष्ट्वा मरुत्सदृशा अस्माकं वीराः पुरुषा भवेयुः इति बुद्ध्या राष्ट्रीयतरुणानां सुयोग्या शिक्षा सर्वत्र प्रदेया । तथा सर्वे तरुणा यथा शूरा वीराः तथा धीराः संभवेयुः तथा सर्वैः संचालकैर्यत्नो विधेयः ।

---०---

अग्ने वै धूमो जायते धूमादभ्रमभ्राद्व वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति । --श. प. ।

० ० ० ०

पुनर्धूमगमनानन्तरमाकाशे जलसंचयो भवति तस्मादभ्रं घना जायन्ते तेभ्यो वायुजलेभ्यो वृष्टिर्जायते ।

—स्वामी दयानन्द ।

--:०:--

# अहो वेदव्याख्यातारः

श्री पं० उदयवीरः शास्त्री, गाजियाबादस्थः

वेदार्थविषये कश्चन निश्चितो वादस्तर्कप्रमाणादिसम्मतः सर्वात्मना तदानीमेव संभवति यदा तादृगर्थविस्तारे प्रयुक्ता भाषा अपि वेदानुसारिणी एव भवेत् । आधुनिकानामेषा कल्पना प्राथमिकमानवानां वने वसतां यदाऽकस्मादेव सूर्यचन्द्रनिशोषः-प्रभृत्यत्यद्भुतवस्त्वस्तित्वविषयक आश्चर्यजनको बोधः समजायत, तन्मूलक एव प्राचीनधर्माणां समुद्भवः, तादृश जांगलिकजनसमुद्गारभूता एव वेदाः । ते खल्वाद्यपुरुषाः सूर्यादिसत्तां यथार्थतयाऽजानन्तः सर्वथाऽप्यसस्कृत काल्पनिकञ्च विधिमाश्रित्य तादृशानुन्मत्त प्रलापानिव शब्दसमूहमात्रान् मिथोऽसंबद्धान् महत्यारभटचाहमहमिकया समुदचारयन्त । कालान्तरेण स एव शब्दराशिर्वेदतामाप । एवं समुद्घोषयन्तः पाश्चात्या अधुनातना विचारकाः सहसा तस्मात् बालसदृशादाश्चर्यपदात् समुत्प्लुत्य खल्वेकपदेनैव ग्रीकदार्शनिकविचारेषु वेदान्तादिगम्भीरशास्त्रनिर्मातॄणां सिद्धान्तेषु चात्मानं प्रापयन्ति । प्रतिपादयन्ति च वेदोद्भवं जांगलिकजनकुतूहलविनोदनपरिणतिमात्रम् ।

तुलनात्मकं पाश्चात्यदेशीयगाथाशास्त्रमधुना ग्रीकभाषाविदां विदुषामनुपमा विचित्रा कृतिरेका प्राचुर्येण बुद्धिजीविषु प्रचलति, यामुपजीव्य खल्वितरदेशीयधर्मसिद्धान्ताः सुनिपुणं व्याख्यायन्ते । इदमन्यद् हास्यास्पदम्, यत् सा व्याख्या अपि तथाविधया दृष्ट्या क्रियते, या ग्रीकजनमानसमपि नानुसरति, गाथालेखकाभिप्रायाः साम्प्रतं सन्तुलनां कुर्वद्भिराधुनिकैरन्यथैव प्रस्तुताः, गाथासंतुलनरीतिरियं केवलं काव्यकल्पनामूलां प्रतिभामेव नूनं प्रख्यापयेत् परं न यथार्थभूतां वैज्ञानिकीमन्वेषणभूयिष्ठां कामपि कृतिं सूचयति ।

एवंविधविचाररीतिपरिणामेषु यदा वयं दृष्टिपातं कुर्मः,तदा तत्र मूलगाथागतरूपकेषु तद्व्याख्यानेषु चासाधारणं विपर्यासं पश्यामः, न क्वापि मिथः सामञ्जस्यं तेषूपलभ्यते । सर्वं तद् विविधवर्णनानामितस्ततः सञ्चितं समुदायमात्रम्, यश्चान्योन्यस्मिन् बलात् प्रवेष्टुं प्रयतमानो दृश्यते । अव्यवस्थया पारस्परिके पथि समायाति, यद्यप्यन्योऽन्येन सह न कथमपि संगतः सहमतो वा वर्त्तते, तथाप्येकोऽपरेण ग्रन्थीभूतोऽस्ति । एवंभूतविविधवर्णनसमुदायानां प्रामाणिकतायाः केवलं निराधार कल्पना एवावलम्बनम्, यासु खलु ज्ञानस्यैकमात्रसाधनत्वं निर्बाधं सुनिर्भृतमारोपितं वर्त्तते । किञ्च गाथानां तद्व्याख्यानां चेयं मिथोऽसंगतिस्तथा महोच्चपदं प्रापिता, यथा सैव तथ्यतायाः कस्याश्चित् मानदण्डत्वेनावबुध्यते । यतः प्रमुखैः कैश्चिद् विद्वद्भिरियं युक्तिगाम्भीर्येण समुपस्थाप्यते-यदपेक्षाकृतमधिकं तर्कसम्मतं सुव्यवस्थितञ्च परिणामं प्रद्योतयन्ती प्रणाली खल्वनयैव दिशा खण्डिता प्रतिषिद्धा अविश्वसनीया वा सिद्ध्यति, यतस्तत्र संगतिः परस्परमुपलभ्यते, ते हि प्रतिपादयन्ति विद्वांसः—प्राक्तनगाथाकवितात्मकयोग्यतायाः खल्विदमावश्यकमेकं तत्त्वं यत्तत्राव्यवस्थायाः सद्भावोऽनिवार्यः स्यात् । परमस्यामवस्थायां तुलनात्मकगाथाविज्ञानमुपजीव्य ये परिणामाः प्रकटीकृतास्त एव तथ्यभूता इत्यत्र नियामकं, किञ्चित् प्रमाणं नोपलभामहे । काचिदन्या साधारा कल्पना प्रवृत्ते प्राक्तनगाथाविचारे परिणामान्तरं प्रख्यापयन्ती कुतस्तथ्यमूला न स्यात् ।

यद्यपि तुलनात्मकगाथाविज्ञानमीमांसायां भूयसी विचारपरम्परा समुपयोगितां भजते, तथाप्यस्याः परिणामाः प्राचुर्येण सयुक्तिकाः स्वीकार्याश्च भवेयुरेतदर्थं अपेक्षयाऽधिकधैर्यसाध्यस्य संगतस्य च विधेराश्रयणमावश्यकम् । सुप्रतिष्ठितं धर्मविज्ञानमुपेक्ष्य केवलं बाह्यांगसंतुलनधिया समुद्भाविता प्राक्तनगाथामीमांसा न कञ्चित् तथ्यभूतं शुभावहं

वा परिणाममाविष्कर्त्तुं क्षमा स्यात् । आधुनिकैरेतदवश्यं स्वीकर्त्तव्यमेव, यत् प्राक्तनधर्मसंस्थानानि तादृशानेवांगोपांगयुक्तान् विचारान् सोहापोहान् वोपजीव्य प्रावर्त्तन्त, यादृशानाश्रित्येदानींतनानां धर्मविश्वाससंस्थानानि प्रवर्त्तन्ते । अज्ञानकालुष्यं रागद्वेषादिकालुष्यं वा तेषां प्राक्तनधर्मसस्थापकानां हृदि लेशतोऽप्यासीदिति न केनापि सद्भावनया शक्यते वक्तुम् । एतदप्यधुनातनैः स्वीकर्त्तव्यमेव, यत् धार्मिकसम्प्रदायसंस्थानानि दार्शनिकविचारसंस्थानानि वा प्राक्तनकालादारभ्य अद्यावधि बुद्धिगम्यामेव परम्परामाश्रित्य प्रवृत्तानि वर्त्तन्त इति । एवंभूतां भावनामभिमुखीकृत्य यदा वयं समुपलब्धं विविधविचारसाहाय्यभूतं सामग्रीजातं सगम्भीरं सविस्तरं चालोकयिष्यामः, मानवीयविचारविश्वासपरम्परापद्धतीनाञ्च याथातथ्यमन्वेषयिष्यामः, तदानीमेव वस्तुभूतसत्यदर्शनकामनाऽस्माकं सुसम्पन्ना सफला च भविष्यतीति नात्र सन्देहलेशोऽपि ।

ग्रीकसंस्कृतभाषागतानां केषांचिद् पदानां यथाकथञ्चित् तद्रूपतां समतां वाऽऽश्रित्य-हैरेकलनाम्नः कस्यचिद्देवस्य चिता दिवाकरस्यास्तंगा'मनः प्रतीकमात्रम्, हैलन-पारिस नामनी च वेदोक्तसरमापणिपदयोः ग्रीकभाषानुकूलमपभ्रंशमात्रम्—एवंभूतानि चातुर्यपूर्णान्यन्वेषणानि खलु कल्पनाभिभूतमनोविनोदाय कामं भवेयुर्नाम, परमनया रीत्या कस्यचिद् यथार्थभूतस्य गभीरपरिणामस्यापादनं सर्वथा दुराशामात्रमेव । तथाविधान्यन्वेषणानि न कथञ्चित् सन्देहमात्रारहितानीति शक्यते प्रतिपादयितुम् । एवंविधं कल्पनामात्रमूलमन्वेषणविधिमालम्ब्य कदापि वयं कञ्चिन्निश्चयमाप्तुं न शक्नुमः; सन्देहदोलामारूढा एव कदाचिदेवं नैवमिति प्रतीपमालपन्तः कालं यापयामः ।

पदानां ताद्रूप्यबोधे मिथः संतुलने वाऽधुनातनं संतुलनात्मकं भाषाविज्ञानमस्माकं किञ्चित् साहाय्यं कर्त्तुमर्हतीति केचित् । परमात्मनो वर्त्तमानावस्थायां समुपलब्धं विज्ञातं वा भाषाशास्त्रं निश्चयात्मिकयाऽत्यल्पमात्रमेवात्र विषये साहाय्यं कर्त्तुं शक्तम् । यद्यपि आधुनिकभाषाविज्ञानोद्भवकालात्प्रागस्माकं यादृशी गतिरासीत् सर्वथाऽपि निरर्गला खल्वस्मिन् विषये; तदपेक्ष्य साम्प्रतमुन्नतिर्महती संजाता इति सत्यम् । कश्चिन्नियमः काचिन्नियता प्रणाली च तथाविधाऽत्र समुद्भाविता, यामालम्ब्य कस्या अपि भाषायाः शब्दरूपाणामध्ययने शब्दव्युत्पत्तिविज्ञाने च किं सम्भवं किं वाऽसम्भवमिति चतुरस्त्रमानुकूल्येन वयं विवेचयितुं पारयामः । किञ्चात्र सुनिर्धारिताः केचन तथाविधा नियमाः, ये खलु कस्याश्चिद् भाषायाः शनैः शनैः भाषान्तरपरिवर्त्तनात्मके विचारवने प्रवेष्टुकामाय पन्थानं सुनिपुणं प्रदर्शयन्ति ।

तथाप्यन्ततो भाषाविज्ञानजनितलाभाः स्तरमेतमाप्य संरुद्धा इव संजायन्ते, यत्र तद्विज्ञानविद एव दीर्घकालं परिश्रम्य तन्मूलञ्च याथार्थ्येनान्विष्य तस्य क्षुद्रतां कल्पनामूलकताञ्चापादयन्ति । केवलं कल्पनामूलं यत्तद् विज्ञानं कथं स्यात् ? अत एवाधिकयाथार्थ्येन सूक्ष्मतया च ज्ञानस्य विशुद्धरूपाण्यनुसरन्तो विचारकास्तुलनात्मकभाषाविज्ञानकृते 'विज्ञान' नामप्रदानमपि नाभिनन्दन्ति । न केवलमेतावदेव, केचित्तु भाषासम्बन्धिनः कस्यचिद् विज्ञानस्य संभावनामेव तिरस्कुर्वन्ति, वस्तुतोऽद्यावधि भाषाविज्ञानोपजीव्या ये परिणामाः प्रकटीकृता विद्वद्भिर्न तेषु निश्चयात्मकता कियतीमपि मात्रां भजते । द्वित्रान्नियमानतिरिच्य क्वापि कस्यचिन्निश्चितस्याधारस्याभाव एवास्ति । निश्चितनियमानां द्वित्राणामतिसीमितं क्षेत्रम् । अनन्तशब्दप्रयोगात्मकस्य भाषाविस्तारस्य तावद्भिर्नियमैः कथं नियता व्यवस्था स्यात् ।

ह्यः सर्वेषामयं विश्वास आसीत्-वैदिक 'वरुण' पदस्य ग्रीक 'औरेनस' पदस्य च समानार्थकत्वं वर्त्तते । एतादृक्साम्यमद्य भाषाविज्ञानबोध्यमन्यथा-

त्वमाश्रित्य दोषयुक्तमुद्घोष्यते, संभाव्यते श्वस्तदेव पुनः स्वीक्रियेत । 'परमे व्योमन्' इति पदद्वयं वेदेषु बहुत्र प्रयुक्तं वर्त्तते, सर्वे वेदार्थविदः प्रायेणास्य 'महति उच्चत्तमे वा आकाशे' इत्येवार्थं साधारण्येन प्रतिपादयन्ति । परमभिनवो विद्वान् टी. परमशिवो अय्यरोपाह्वो महाभागः स्वीये 'दि ऋक्स' इति नाम्नि ग्रन्थे 'परमे व्योमन्' इति पदद्वयस्य निम्नतमगुहायाम्' इत्याश्चर्यजनकमर्थं विज्ञापयति, यतो 'व्योमन्' पदस्यार्थो भवति-विच्छेदः 'दरार' इति लोके प्रसिद्धः रक्षार्थं 'ऊमा' पदमाश्रित्य विगता ऊमा यस्मात्तद् व्योम इति व्युत्पत्त्या 'व्योमन्' इत्यस्य शाब्दिकोऽर्थः रक्षाया अभावः-इति । एतदर्थप्रतिपादनेऽय्यरमहोदयेन या रीतिर्युक्तिर्वा प्रयुक्ता, कोऽप्याधुनिको भाषाविज्ञानपण्डितस्तामन्यथाकर्त्तुं नोत्सहेत, रक्षाया अभावस्य, अर्थः—विच्छेदो ( दरार ) नास्तीत्युक्त्वा न ताममान्यां कर्त्तुं शक्नुयात् । न चैवं शक्नोति वक्तुम्—मानवभाषानिर्माणं नैवंभूतनियमानुसारमभूदिति । सैव रीतिर्वेदाद्यर्थबोधे वर्त्तमानभाषाविज्ञानविद्भिरबाधमाश्रीयते ।

वस्तुतस्तु भाषानिर्माणमूलभूतानां नियमानामन्वेषणे वर्त्तमानभाषाविज्ञानस्यासफलतामेव प्रतीमः । अय्यरमहोदयस्य जल्पनामिव सदिग्धकल्पनानामेव चमत्कारमाधुनिकभाषाविज्ञानक्षेत्रे सुनिर्भृतमवलोकयामः । अत एव वेदेषु प्रयुक्तं 'परमे व्योमन्' पदं 'उच्चतममाकाशं' निर्दिशति 'निम्नतमां गुहां' वेति निर्णयाय न साहाय्यमादधाति तच्छास्त्रम् । नैतावदेव केवलम्, अय्यरमहोदयः खल्वितोऽप्यधिकं साहसमाकलय्य निरूपयति—समस्तेऽपि ऋग्वेदे तात्कालिकस्य भूगर्भसम्बन्धिघटनाक्रमस्यैव वर्णनं वर्त्तते, यदा चिरकालात् प्रवृत्ताया हिमसंहतेर्विनाशोऽन्तमाप, तदनन्तरं चास्माकं भूग्रहस्य यथाक्रमं नव्यं जन्म बभूवेति ।

अनया दिशा प्रवर्त्तमानायां वेदव्याख्यायां महर्षेर्दयानन्दस्य महानयमुपकारोऽपूर्वश्च प्रयत्नः—यन्महर्षिर्वेदानां समस्तसत्यविद्याधारत्वेन पुनः संस्थापनामकरोत् प्राचीननिरुक्तादि प्रतिपादितस्य पुरातनभारतीयभाषाविज्ञानस्य स्वतन्त्रप्रयोगमुपजीव्य वेदान् व्याख्यत् । महर्षिकृतं वेदव्याख्यानमेभिर्विचारैर्नियन्त्रितमस्ति—यद्वेदाः किल धार्मिकस्य नैतिकस्य वैज्ञानिकस्य च सत्यस्यैकमात्रं पूर्णमीश्वरप्रेरितं ज्ञानम् । सर्वे वेदा एकमेव देवमुपास्यत्वेनोपदिशन्ति, स एव देवो वेदेषु विभिन्नैर्नामभिस्तत्तन्निमित्तप्रवृत्तैर्बहुधा वर्णितः । तादृग्वर्णनं तस्यैवैकस्य विविधाः शक्तीः सूचयति । या वयं प्रकृतिकार्येषु निरन्तरं व्यापृताः पश्यामः । अनयैव दिशा वेदेष्वार्यैः प्रयत्नो विधेय इति विनिवेद्य विरम्यते ।

---

**तथा यज्ञः कर्तव्य इतीयमप्याज्ञा तेनैव दत्तास्ति तामपि य उल्लंघयति सोऽपि पापीयान् सन् क्लेशवांश्च भवति । . . . अस्मात् कारणात्सर्वोपकाराय सर्वैर्मनुष्यैर्यज्ञः कर्तव्य एव ।**

—स्वामी दयानन्द ।

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यच्च सर्वं वेदात् प्रसिध्यति ॥**
**बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥**

—मनुस्मृति ।



# भारतीयसंस्कृतेराधारभूताश्चत्वारो वेदाः

श्रीनरहरिभट्टश्शाङ्करवेदान्त–दर्शनाचार्य्यः

अयि, भव्यभारतभावुकाः ! वेदार्थतत्त्वज्ञाः ! महामान्याः ! वैदिकविद्वांसः ! गुरुकुलपत्रिकाया-स्सहृदयपाठकप्रवराः !

परुत्संवत्सरे हि वैदिकविष्णुदेवतामधिकृत्य निर्गतो 'विष्णु-तत्त्वाङ्कः' विदुषाम्पुरस्तादागत आसीत्। सम्प्रत्यचिरादेव भूयो 'वेदाङ्कः' अस्मत्पुरस्तादायातीति। महदुल्लासवृत्तं नानाविधाकरग्रन्थपत्रपत्रिका-परिशीलनतत्पराणामनुसन्धानकुशलानां शेमुषीमतामिति।

भारतीयसंस्कृतवाङ्मये सर्व्वाङ्गीणानां वेदानां सर्व्वोत्कृष्टत्वं समस्तीति कस्य सहृदयभारतभावुकस्याविदितमिति। ब्राह्ममुहूर्तादारभ्य शयनवेलापर्यन्तं, जन्मतो मृत्युपर्य्यन्तञ्च करणीयन्निखिलङ्कार्य्यनिवहमादिश्य श्रेयोमार्गे सम्प्रेरयति समस्तान्मानवनिकरान्। लोके न हि तदस्ति किंचिद् यद्वेदेन न विज्ञायते। अतो भगवता मनुनाऽभ्यधायि यत् 'सर्वज्ञानमयो हि सः' इति वाक्यं युक्तियुक्तं संगच्छते। गोविन्दराजस्तु–'सर्व्वज्ञानमयः' इत्यस्य सर्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह। विद्-धातोर्वेदशब्दस्य निष्पत्तिर्भवति। विद् धातुस्तु ज्ञानार्थकः। ज्ञानार्थत्वादेव 'सर्वज्ञानमयो हि सः' इति वचनं साधु संश्लिष्येत। ज्ञानं तु पवित्रं वस्तु इत्यत्र नास्ति वैमत्यं कस्याऽपि विदुषो नाम। भगवता कृष्णेनाप्यभिहितं गीतायाम्–'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।'

ज्ञान-विज्ञानस्वरूपं ब्रह्म-परमात्मा। तस्मादेव वेदानां चतुर्णां प्रादुर्भावः–अत्रास्त्याम्नायः—

**तस्माद्यज्ञात्सर्व्वहुत ऋचस्सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥**

अन्योऽप्याम्नायः—

**अस्य महतो भूतस्य निश्श्वसितमेतद्।**
**यद् ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्व्वः॥**

आभ्यां वचनाभ्यां हि वेदानामीश्वरप्रादुर्भावकर्तृकत्वं प्रसिद्ध्यति। महर्षिमनुनाऽप्युक्तम्—

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्मसनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्॥**

ऐतरेये ब्राह्मणेऽपि—

**त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत।**
**यजुर्वेदो वायोस्सामवेद आदित्यात्॥**

तत्रभगवत्पादा आद्यशंकराचार्य्या अप्येवमाहुश्शांकरभाष्ये—

'महत ऋग्वेदादेश्शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य, प्रदीपवत्सर्व्वार्थावद्योतिनस्सर्व्वज्ञकल्पस्य योनिः कारणम्ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्व्वज्ञगुणान्वितस्य सर्व्वज्ञादन्यतस्सम्भवोऽस्ति। यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्सम्भवति, यथा व्याकरणादिपाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके। किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्य्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्व्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिश्श्वासवद्यस्मान्महतो भूताद्योनेस्सम्भवः।' अतो भ्रमप्रमादविप्रलिप्सादिनानादोषविरहिता वेदाः।

चतुर्णां वेदानां कृते 'वेदत्रयी' अपि शब्दश्शास्त्रेषु प्रयुज्यते। यथा हि 'ऋग्यजुस्सामलक्षणाः' तिस्रो विद्या येषां ते त्रिविद्या एव स्वार्थिकस्तद्धितेन त्रैविद्याः। अत्र विषये महामण्डलेश्वरदार्शनिकसार्व्वभौमवेदार्थमर्मविन्महेश्वरयतिकृत – अथर्ववेदशत-

कस्य प्रास्ताविकवक्तव्ये गवेषणापुरस्सरं यदुल्लिखितन्तदेवात्रोपन्यस्यते विज्ञजनमनस्तोषाय ।

'त्रय्या=वेदत्रयेण प्रतिपादितं धर्म्मं त्रयीधर्म्ममित्यर्थः । इत्यादिबहुस्थलेषु वेदत्रयाणामुल्लेखादवगम्यते, सन्ति त्रय एव वेदाः, न तु चत्वारः, अत ऋग्यजुस्सामवेदेष्वेव वेदत्वमस्ति, नाथर्ववेदस्य चतुर्थस्य, तस्य त्रयीबहिर्भूतत्वादतस्त्रयीसंज्ञकेषु वेदष्वथर्ववेदस्य संग्रहो न भवितुमर्हति; इति चेदत्रोच्यते—चतुर्षु वेदेषु सन्ति ऋग्यजुस्सामरूपास्त्रिविधा मन्त्राः कर्म्मोपासनाज्ञानलक्षणविद्यात्रयप्रतिपादका येषामथर्वशेन पादव्यवस्थाऽस्ति । ते पद्यरूपा ऋग्मन्त्राः, ये च विशिष्टगानयोग्यास्सन्ति ते साममन्त्राः, ये च तदतिरिक्ता गद्यरूपास्सन्ति ते यजुर्मन्त्रा विज्ञेयाः, इत्येवं अध्वरमीमांसासूत्रेभ्यो निरूपितत्वात्, त्रयीति संज्ञायाश्चतुर्वेदगतमन्त्रत्रैविध्यनिदानत्वात्, तिस्रो विद्या अधीयते विदन्ति वा चतुर्षु वेदेषु ते त्रैविद्याः=चतुर्वेदविद इत्यर्थाभ्युपगमात् ।

तेषु चतुर्वेदेषु ऋगादित्रिविधमन्त्राणां कर्मोपासनाज्ञानविद्यात्रयस्य च विद्यमानत्वात्, त्रिविधमन्त्रविद्यात्रयसमुपेताश्चत्वार एव वेदाः, न त्रयः, तथा च यथा ऋगादिवेदस्त्रयीरूपस्तथाऽथर्ववेदोऽपि त्रयीरूपोऽस्तीति, सत्येवमथर्ववेदस्य च त्रयीबहिर्भूतत्वाभावाद् वेदत्वमक्षुण्णमेवास्तीति वेदितव्यम् । तदेतत्सर्वानुक्रमण्यामप्युक्तम्—

**विनियोक्तव्यरूपश्च त्रिविधस्सम्प्रदर्श्यते ।**
**ऋग्यजुस्सामरूपेण मन्त्रो वेदचतुष्टये ॥**

तथैवाहुर्भगवन्तो वेदव्यासा अपि भारते शान्तिपर्वणि मोक्षधर्मे—

**त्रयीं विद्यामवेक्षेत वेदेषूक्तामथाङ्गतः ।**
**ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा ॥**

चत्वारो वेदा ज्ञानेन—विज्ञानेन चोताःप्रोताश्च सन्ति । ज्ञानेनैव निखिलं कार्यजातं प्रसिद्ध्यति, ऐहिकं पारलौकिकं वा । वेदा ज्ञानस्यानन्तार्ण्णव इव सन्ति । भारते—'सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्' अपि चोक्तं—'यः कश्चित्कस्यचिद् धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे ।' 'वेदोऽखिलो धर्ममूलम् ।' चरमेऽध्याये म० स्मृतौ मनुनाऽभिहितम् ।

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।**
**भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति ॥**
**शब्दस्स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।**
**वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः ॥**
**बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।**
**तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥**

वेदास्समग्रज्ञानस्य निधयस्सन्ति । अखिलाञ्जनाञ्श्रेयोमार्गे नयन्ति—प्रेरयन्ति, लौकिकं पारलौकिकं वस्तुजातं च संदिशन्ति । यो हि वेदं नाधीते, तदर्थं च न वेत्ति । तदर्थं मनुस्स्वयमभिधत्ते—

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥**

यो द्विजो ब्राह्मणः वेदमनधीत्य—अपठित्वा अन्यत्रार्थशास्त्रादौ श्रमं यत्नातिशयं विदधाति स जीवन्नेव पुत्रपौत्रादिसहितश्शीघ्रं शूद्रत्वं प्राप्नोति । अपि चोच्यते तत्रैव—

**तपो विशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।**
**वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना ॥**

वेदाध्ययनमेव परं तप इति परिपुष्टयति—

**वेदमेव सदाऽभ्यसेत्तपस्तप्स्यन्द्विजोत्तमः ।**
**वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥**

वेदाभ्यासरतस्य द्विजस्य जन्मसाफल्यं दर्शयति

द्वाभ्याम्—

**यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।**
**आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ।।**
**एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः ।**
**प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ।।**

वेदाध्ययनेनैव द्विजो कृतकृत्यो भवतीति अन्तर्हितोऽभिप्रायः । वेदपरिशीलनतत्परस्य मानवस्य कृते हि मोक्षोऽपि दुर्लभो नास्तीति तत्र प्रयासो विधेय इत्यधस्तनीयं पद्यं स्पष्टमभिधत्ते—

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।**
**समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ।।**

भूतेष्वखिलेषु स्थावरजङ्गमात्मकेष्वहमेवात्मरूपेणास्मि सर्वाणि भूतानि परमाणुपरिमाणसिद्धानि मय्येव परमात्मन्यासत इति सामान्येन जानन्नात्मयाजी ब्रह्मार्पणन्यायेन ज्योतिष्टोमादि कुर्वंस्स्वेन राजते–प्रकाशत इति स्वराड् ब्रह्म तस्य भावस्स्वाराज्यं ब्रह्मत्वं लभते मोक्षमाप्नोतीत्यर्थः । तथा च श्रुतिः–'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किंचन' 'तज्जलानिति शान्त उपासीत ।' यजुर्वेदमन्त्रोऽपि उक्तार्थमेव द्रढयति—

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।।** इति

वेदविज्ञानम्—

चतुर्षु वेदेषु समदर्शनभावमुद्दिश्याधिदैविकाधिभौतिकाध्यात्मिकविषयेषूत्कृष्टं विज्ञानं लौकिकानां जनानां कृते विस्तृतमुपन्यस्तम् । वेदेषु भूगर्भविद्या, गणितविद्या, ज्यौतिषविद्या, रसायनशास्त्रं, शारीरिकविज्ञानं, आचारविचारधर्मः, मनोविज्ञानं, धर्मविज्ञानं, राजनीति, धर्मनीति, अर्थनीति इत्याद्यनेकविषयेषु मीमांसा दरीदृश्यते । न हि कश्चिदपि धीमान् वेदेषु कस्यापि विषयस्य न्यूनत्वमभिधातुमर्हति ।

अतो हि ग्रन्थान्तरेऽभिहितम्—'यः कश्चित्कस्यचिद् धर्मो मनुना परिकीर्तितः । सर्वोऽभिहितो वेदे । अतो भगवता मनुना कण्ठरवेणाभिहितम्–'वेदोऽखिलो धर्ममूलम् ।

एतस्माद्धेतोर्वेदाध्ययनविषयेऽभियुक्तोक्तिर्दृश्यते–'वेदो नित्यमधीयतां, तदुदितं कर्मस्वनुष्ठीयताम्' मनुनाऽप्यभिहितं वेदाऽध्ययनवैशिष्ट्यम्—

**वेदशास्त्रार्थतत्त्वज्ञो यत्रतत्राश्रमे वसन् ।**
**इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ।।**

चतुर्षु वेदेष्वागतानि शिक्षाप्रदानि सुसूक्तानि दिङ्मात्रमत्रोदाहृत्य विस्तरभयादुपरम्यते ।

१–संगच्छध्वं संवदध्वम् । २–न स सखा यो न ददाति सख्ये । ३–सुगा ऋतस्य पन्थाः । ४–ऋतस्य पन्थाः न तरन्ति दुष्कृतः । ५–स्वस्तिपन्थामनुचरेम । ६–देवानां सख्यमुपसेदिमा वयम् । ७–समाना हृदयानि वः । ८–भद्रं कर्णेभिश्शृणुयाम । ९–भद्रं पश्येमाक्षभिः । १०–मा गृधः कस्य स्विद्धनम् । ११–मित्रस्य चक्षुषा समीक्षामहे । १२–सर्वा आशा मम मित्रं भवन्तु । १३–मा नो द्विक्षत कश्चन । १४–मधुमतीं वाचमुदेयम् । १५–ऋतस्य पथा प्रेत । १६–अदीनास्स्याम शरदश्शतम् । १७–पश्येम शरदश्शतम् । १८–कुर्वन्नेवेह कर्माणि जिजीविशेच्छतं समाः । १९–असतो मा, सद् गमय । २०–तमसो मा, ज्योतिर्गमय । २१–मृत्योर्मा, अमृतं गमय । २२–उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । २३–तमेव विदित्वातिमृत्युमेति । २४–नान्यः पन्था विद्यतेऽयनाय । २५–धियो यो नः प्रचोदयात् । २६–न तस्य प्रतिमा अस्ति । २७–यस्तन्न वेद किमृचा करिष्यति । २८–स ओतः प्रोतश्च विभूः प्रजासु । २९–शं नः कुरु प्रजाभ्यः । ३०–मे मनः शिवसंकल्पमस्तु । ३१–ईशावास्यमिदं सर्वम् ३२–शतहस्त समाहर । ३३–सहस्रहस्त संकिर । ३४–

अनागसो अदितये स्याम । ३५–असपत्ना: प्रदिशो भवन्तु । ३६–अभयं नो अस्तु ।३७–सर्वाणि शं भवन्तु मे । ३८–देवस्य पश्य काव्यं न ममार न जीर्यति । ३९–ऋतस्य जिह्वा पवते ।

इत्यादीन्यमृततुल्यानि सच्छिक्षाभरितानि मन्त्रसूक्तानि चतुर्षु वेदेषु ओताः प्रोताश्च दृश्यन्ते । अनेन वयमनुमातुं शक्नुमो यत् वेदस्य गौरवं कियन्महत्वञ्च । अतो यावज्जीवं कल्याणाभिलाषुकेण जीवेन वेदार्थचिन्तनेनैव समयो यापनीयः । अन्यथा फलश्रुतिस्स्वयमुपन्यस्यति—

इह चेदवेदीदथ सत्यमस्ति,
न चेदिहावेदीन्महती विनष्टिः ।

---

# श्रुतिप्रशस्तिः

श्री पं० धर्मदेवो विद्यामार्तण्डः आनन्दकुटीरम्, ज्वालापुरम्

( १ )

वेदाः सत्करुणाऽऽकरेण हरिणा, सृष्टा जगत्स्वस्तये,
यो देवो जनकस्तथा च जननी, कल्याणरूपा सदा ।
कर्त्तव्यं विविधं समस्तसुखदं, सम्बोधयन्तोऽखिलं,
तेऽध्येयाः सकलैर्जनैरिह सुखं, शान्तिं च ये लिप्सवः ॥

( २ )

ज्ञानं सर्वविधं सुशान्तिजनकं, सत्सौख्यसम्पादकं,
वेदेष्वस्ति न कोऽपि तत्र विबुधैः, कार्यो मनाक् संशयः ।
भानो रश्मिसमा इमे जनिजुषां, ध्वान्तं हरन्तोऽखिलम्,
अध्येयाः सकलैर्जनैरिह सुखं, शान्तिं च ये लिप्सवः ॥

( ३ )

लोके नोऽभ्युदयो भवेदिति जना वाञ्छन्ति येऽहर्निशं,
ये वा मोक्षपरायणादि सततं, सत्यव्रतास्तापसाः ।
सर्वेभ्यः शुभमार्गदर्शकतमा, भ्रान्तेर्विहीनास्तथा,
अध्येयाः सुखशान्तिमङ्गलकरा वेदाः सुविद्याऽऽकरा; ॥

( ४ )

ज्ञानं कर्म च भक्तिरेतदखिलं, वेदेषु मोक्षप्रदं,
नैतेष्वस्ति सुखप्रदेषु सततं, सत्यं विरोधः क्वचित् ।
एषामाचरणं समेत्य कुरुते, योऽसौ मनीषी जनः,
इत्थं सर्वसमन्वयं हितकरं, वेदाः समाचक्षते ॥

# भासस्य काव्यम्

श्री निगम शर्मा

सद्‌गुणां नारीति विदितां यादृशीं प्रसाधितवेशां सिद्धेः परां कोटिमापन्नां कवितां वामनोऽधिजगौ, कलहंसवचाः कलहं सज्जयन् दण्डी आकुमारं अभिनवां यादृशीं काव्यमूर्ति सुधाबिन्दुसदृशैः सुवर्णैं वर्णयति, सहृदयशिरोमणिः कुन्तको– ब्रह्मणः पादपद्मान्यवनेजयन्तीं कविव्यापारसारां विदितामाभुवनप्रसारां यादृशीं कवितां श्लाघते, पंडितराजो जगन्नाथो मननसिन्धुमन्थनजन्यां यादृशीं काव्यलक्ष्मीं स्तौति प्रस्तौति च; तस्या एव कवितायाः कोऽप्यपूर्वश्चमत्कारो गुणगर्भायां प्रसादान्वितायां भासस्य कवितायामुल्लसति ।

वाग्देवतावतारो विदितकवितावतारमार्गो मम्मटः कविताकरणे "एते त्रयो गुणा हेतु र्न तु हेतवः" इति लिलेख । तस्यैव कवित्वबीजस्य प्रतिभानस्य, लोकशास्त्राद्यवेक्षणजन्यस्य नैपुण्यस्य, कवितारहस्योल्लासनचतुराणां साक्षात्कृतधर्माणां सहवासजन्याभ्यासपाटवबलस्य च यद् हृदि सहजं मनः प्रह्लादि दिगन्तपावनं सौन्दर्यं सत्त्वसमुदयोपेतं विगलिततिमिरावरणं रसमयं किमप्यपूर्वं वस्तुतत्त्वं कविताहेत्ववगाहनरहस्यं भासस्य नाटकचक्रे तत् परिस्फुरति । यद्वीक्ष्य सहृदयाः सानन्दं नेत्रोत्सवं लभन्ते, सत्कवयः सादर नम्रा भवन्ति, गुणदर्पाः सेर्ष्यया विलोकन्ते, कालिदासप्रमुखाः कवितविलासैकवसतयो ऽनु कुर्वन्ति ।

कवितायामिनीकान्तकमनीयं मणिमयमङ्गलदीपदापितं भवनमिव साह्लादं तस्य हृदयं भवति यो ह्यकिञ्चनज्ञोऽहमिति सावधानो ध्यायन्नभ्यासपाटवतामाप्नोति । तस्य हि हृदयमध्यान्मप्रसादोपेतं प्रसन्नतामासादयति । एतादृशस्य कवेर्वचनमकृत्रिमं मनमुग्धकरं सागरस्य रत्नोच्छलनमिवं महावैभवसम्पन्नं उद्भवति विस्मयकरणं च मङ्गलजननं च । भास कवे र्वचनमेतादृशकोटिकम् । कवेः कालिदासस्य तु वचने स्वभावसुन्दरतायामपि कलाधरकरकूर्चिकाभि र्भावानां सचमत्कारं दरीदृश्यते मसृणकलाविन्यासः । अत एव कृत्रिमताया यत्र क्वचित् कलायाः स्फुटोल्लेखः प्रतीयते । निवेदिताया वाग्वल्ल्याश्चार्थपुष्प क्वचिन्प्रकाश क्वचिच्चाप्रकाशं सौभाग्यं जनयति । भासे कृत्रिमतायाः पाटवं नास्ति । स तु कण्वमुनेः शकुन्तलामिव स्वभावसरसां बहुगुणकृतलोभां अविदितपरिखेदां काञ्चन काव्यमयीं वनदेवीं रचयति । तामेव मनस्विनीं विधाय कालिदासः साभिमानं राजभवने आनयति । राजसिंहासने स्थापयति । प्रभावातिशयां करोति । प्रम्वीं च सम्पादयति;

भवभूतिस्तु कृत्रिमतायामतितरामवतरति यत्किमपि निर्माय दर्शकान् पृच्छति, तेषामुत्तरमपरिज्ञाय स्वयं श्लाघते 'अहो सम्विधानकम्' इति कृत्वा स्वयं चात्मान स्वयं प्रस्तौति । ततोऽपि निराशः सन् उत्पत्स्यमानानां समानधर्मणां भविष्यं प्रति चक्षु र्बध्नाति । महतीं पटुतां कवित्वप्रतिभानं चासाद्य नाटकताया महत्तेजः पाण्डित्यधूम्रसन्दोहे निम्लोचयति । प्रम्वीं विवासयति, प्रभावातिशयां निराशैकशरणां करोति, तेजस्विनीमालस्यभस्ममलिनां सम्पादयति ।

यदा मधुरमधुकरबोधितलतागहनपुष्पगन्धसमेधिते प्रसादगाम्भीर्यगुणाभिरामे भासवीवधे दृगध्वनीनवृत्तिमाचरति तदा ऽनुपमं कमपि गुणगन्धमासाद्य रूपसम्पदं चाभिनिरीक्ष्य प्रेमसुखमहिम्ना समुच्छलति दृष्टिः । अनन्तरत्नप्रभाभास्वरभवनसन्निभे निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्ते यथा ब्रह्मरसः आनन्दमकरन्दबिन्दुभि र्बहिरपि ज्योत्स्नां प्रक्षिपति तद्वद भासस्य अनिष्ठुरो वाक्प्रभवो ऽपास्तसमस्ततम-

स्काण्डतयाऽधिगताखिलनाटचगुणतया च नाटकचक्रे मनांसि सहृदयानामाह्लादयति ।

भासस्य पदानां नृत्यत्प्रायत्वं प्रतिभानवैपुल्योपेतं झटिति प्रतीयमानार्थान्वयकत्वं अपरुषवर्णहृदयहारि किमधिकं तस्य त्वास्यं लास्यगृहमिव प्रतीयते, यत्र विहितनेपथ्या सरस्वती सभाव स्वभावपुलक दधाना नृत्यति । भासस्य अर्थवैमल्यं अन्तर्हासिलसत्कपोलं व्यञ्जनाव्यापारं च सादर वीक्ष्य उक्तिवैचित्र्यं च निभाल्य अस्माकं चेतांसि प्रमोदार्णवे ब्रुडितानि भवन्ति ।

पश्यन्तु तावत् कृष्णस्य जन्मप्रस्तावनासमये नारद प्रति कवेरुक्तिः—

**क्षीणेषु देवासुरविग्रहेषु,**
**नित्यप्रशान्ते न रमे ऽन्तरिक्षे ।**
**अहं हि वेदाध्ययनान्तरेषु,**
**तन्त्रीश्च वैराणि च घट्टयामि ॥**

षण्णां पुत्राणां क्रूरकंसस्य कराभ्यां दीनं मरणं निभाल्य **सप्तमं** कंसमृत्युरूपं भगवन्तं नारायणं धारयन्तीं देवकीं दुःखितां च प्रसन्नां च पीडितां च व्रीडितां च ब्रुडितां चोत्थितां च कवि वर्णयतिः—

**लोकानामभयकरं गुरुं सुराणां,**
**दैत्यानां निधनकरं रथाङ्गपाणिम् ।**
**शोकार्ता शशिवदना निशि प्रशान्ता,**
**बाहुभ्यां गिरिमिव मन्दरं वहन्तीम् ॥ १.६**

कालियनागस्य मदमर्दनं विधाय कृष्णस्तस्य भोगे स्थितः—

**दामोदरो ऽयं परिनिगृह्य नागं विक्षोभ्य तोयं समूलमस्य ।**
**भोगे स्थितो नीलभुजङ्गमस्य मेघेस्थितः शक्र इवावभाति ॥**

तमः स्वरूपवर्णनं त्वस्य रहस्यभूतम् । सर्वे साहित्यवीथीचङ्क्रमणरसिका उदाहरन्ति—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १.१५**

**अप्रकाशा इव दिशो घनीभूता इव द्रुमाः**
**सुनिविष्टस्य लोकस्य कृतो रूप विपर्ययः ॥ १.१६**

राक्षसीनां मध्ये सुमध्यमा सीता कीदृशी लगति—

**राक्षसीभिः परिवृता विकृताभिः सुमध्यमा ।**
**नीलजीमूतमध्यस्था विद्युल्लेखेव शोभते ॥**

अभिषेक—२.७

भगवान् वाल्मीकिरपि इत्थं वर्णयति, घनसमय वीक्ष्य रामो लक्ष्मणं कथयति—

**नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मे ।**
**स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥**

बा. रा. किष्कि.२८.१२

सीता विनीताभिर्वचो रचनाभिर्हनुमन्तं पृच्छति— " . . . . . आर्य पुत्रस्य अस्मिन्ना् जनेऽनुक्रोशं परिश्रमं च श्रुत्वा सुखस्य दुःखस्य चान्तरे दोलायत इव मे हृदयम् । भद्र ! कथं युष्माभिरार्यपुत्रस्य सङ्गमो जातः ? "

इदमेव प्रकृतं वर्णनं वाल्मीकिरामायणे इत्थमास्वादयन्तु—

**अमृतं विषसम्पृक्तं त्वया वानरभाषितम् ।**
**यच्च नान्यमना रामो यच्च शोकपरायणः ॥**

सुन्दर ३७ २

श्रीकृष्णेन प्रेषितो दूतत्वमासाद्य दुर्योधनेन निन्दितः सन् घटोत्कचो नितरां क्षुभ्यति । बन्धोरभिमन्यो र्मरणवृत्तान्तपीडिताः खल्वपि पाण्डवा धर्मानुक्रोशबुद्ध्या सन्धिं चिकीर्षन्ति । यूयं च राक्षसयोनिं मां निन्दथ, शृणुत—

**न तु जतुगृहे सुप्तान् भ्रातॄन् दहन्ति निशाचराः,**
**शिरसि न तथा भ्रातुः पत्नीं स्पृशन्ति निशाचराः ।**
**न च सुतवधं संख्ये कर्तुं स्मरन्ति निशाचरा,**
**विकृतवपुषोऽप्युग्राचारा घृणा न तु वर्जिताः ॥**

यू० घ० १.४७

महादानी कर्णः कवचकुण्डलमपि प्रदाय इन्द्राय शल्येन निषेधितः कथयति—

शिक्षा क्षयं गच्छति कालपर्ययात्,
सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतं च शुष्यति,
हुतं च दत्तं च तथैव तिष्ठति ।।
क. १.२२

चारुदत्ते दरिद्रस्य दशां कवि वर्णयति--

सुखं हि दुःखान्यनुभूय शोभते,
यथान्धकारादिव दीपदर्शनम् ।
सुखात्तु यो याति दशां दरिद्रतां
धृतः शरीरेण मृतः स जीवति ।। १.३

कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता ।। ३.१५

चौरः स्वकीयं गुणग्रामं वर्णयति—

मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने,
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः ।
माया वर्णशरीरभेदकरणे वाग् देशभाषान्तरे,
दीपो रात्रिषु सङ्कटे च तिमिरं वायुः स्थले नौर्जले ।।
३.१?

परन्तु—

यः कश्चिच्चकितगति निरीक्षते मां,
सम्भ्रान्तो द्रुतमुपसर्पति स्थितो वा ।
सर्वां स्तांस्तुलयति दोषतो मनो मे,
स्वै र्दोषै र्भवति हि शङ्कितो मनुष्यः ।। ४.६

आयान्तीं निद्रां स्वरूपतो विस्पष्टयति—

इयं हि निद्रा नयनावलम्बिनी,
ललाटदेशादुपसर्पतीव माम् ।
अदृश्यमाना चपला जरेव या,
मनुष्यवीर्यं परिभूय वर्तते ।। ३.४

कुरङ्गी नयनसुधामकरन्दं यतः प्रभृति पीतवान् अविमारकः । तस्य तु—

दृष्टि स्तदा प्रभृति नेच्छति रूपमन्यद्,
बुद्धिः प्रहृष्यति विषीदति च स्मरन्ती ।
पाण्डुत्वमेति वदनं तनुतां शरीरं,
शोकं व्रजामि दिवसेषु निशासु मोहम् ।। २.१

विरहस्य रहस्यं अविमारक उद्भावयति साभिलाषम्—

दृष्टि र्न तृप्यति परिष्वजतीव साङ्गं,
बुद्धि स्त्वरां व्रजति बोधयतीव सुप्ताम् ।
रागोऽभिचोदयति सादयतीव चाङ्गं,
हर्षात् प्रसीदति विमुह्यति चान्तरात्मा ।।३.७

अमुमेव भाव भवभूतिरेव जग्राह—

हा हा देवि ! स्फुटति हृदयं स्रंसते देहबन्धः,
शून्यं मन्ये जगदविरलज्वालमन्त र्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि ।।

स्मर्यमाणः शृङ्गारः करुणं पुष्णाति । वासवदत्तां स्मरन् वत्सराजः कथयति—

स्मराम्यवन्त्याधिपतेः सुतायाः प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृद्धं नयनान्तलग्नं स्नेहान् ममैवोपरि पातयन्त्याः ।। ५.५

कीदृशः खलु मुग्धः स्नेहः, शठश्च कामचारो यत्र स्वजनः श्वजनइव हीयते, निद्रया गृहीत इव प्रेयान् न सुखं परित्यक्तुं शक्यते ! अन्यच्च—

श्रोणी समुद्वहनपार्श्वनिपीडितानि,
खेद स्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि,
वाद्यान्तरेषु कथितानि च सस्मितानि ।। ६.२

पूर्वं यदानन्दोपकारकमभूत्, स एवेदानीं ज्वरो महान् ! यानि हृदयानुबन्धीनि न पारयन्तेस्मशब्दाख्येयानि कर्तुम्, तानि खलु मधुरप्रियभणितानि वाद्यान्तरेषु सस्मितप्रवाहमुच्यन्तेस्म !

ये भावा गुणा वा गुरुभिः कारणै र्नियम्यमाना

श्छन्ना भवन्ति त एव परव्यसनान्यपोहितुं भास-भारतीषु संस्कारपूर्वनियमानासाद्य विवृता भवन्ति छन्ना महापुरुषा इव—

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः ।
रामाभिधान मेदिन्यां शशाङ्कमभिषिञ्चता ॥
प्रतिमा. १४

स्नेहसौजन्ययोरद्भुतः सन्निवेशः—

समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितु र्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः॥ १.६
रामो वात्सल्यजन्यं स्नेहमाविर्भावयति ।
नारीणां प्रथमोऽस्य कल्पो यद् भर्तारमनुगच्छेयुः ॥

सीता खल्वपि तपस्विनीवेषमासाद्य वनं गन्तुमर्हति—

अनुचरति शशाङ्कं राहुदोषेऽपि तारा,
पतति च वनवृक्षे याति भूमिं लता च ।
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं,
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः ॥
प्रतिमा १.२५

सर्वेषु खलु स्थलेषु त्वमसि मयानुगन्तव्यः, कथं पुन र्न वनवासे, लक्ष्मणस्य परिकांक्षितमेतद् यद् वनेऽपि सहैव गमनम्—

निर्योगाद् भूषणान् माल्यात् सर्वेभ्योऽर्धं प्रदाय मे ।
चीरमेकाकिना बद्धं चीरे खल्वसि मत्सरी ॥ १.२६

अहो दशसु दिक्षु रथं यः सञ्चारयति तस्य दशरथस्येयमवस्था—

मेरुश्चलन्निव युगक्षयसन्निकर्षे,
शोषं व्रजन्निव महोदधिरप्रमेयः ।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः,
शोकाद् भृशं शिथिलदेहमतिर्नरेन्द्रः ॥२.१

धन्याः खलु वने वातास्तटाकपरिवर्तिनः ।
विचरन्तं वने रामं ये स्पृशन्ति यथासुखम् ॥ २.१२

सुमन्त्रं प्रति — . . . . . . सत्यमयुक्तमभिहितं मया । नायं तपस्विनामुचितः प्रश्नः । तत् कथ्यताम् । अपि तपस्विनां तपो वर्धते ? अप्यरण्यानि स्वाधीनानि विचरन्तो वैदेही न परिखिद्यते ? . . .

रामलक्ष्मणयो र्मध्ये तिष्ठत्वत्रापि मैथिली ।
बहुदोषाण्यरण्यानि सनाथैषा भविष्यति ! २.१५
सकृत्स्पृशामि वा रामं सकृत्पश्यामि वा पुनः ।
गतायुरमृतेनेव जीवामीति मति र्मम ॥ २ १६
अङ्कं मे स्पृश कौसल्ये न त्वां पश्यामि चक्षुषा ।
रामं प्रति गता बुद्धिरद्यापि न निवर्तते ॥ २ १८

इत्थमटवीभूतायामयोध्यायां पिपासार्तो भरतो मूर्च्छितः ।

काले खल्वागता देव्यः पुत्रे मोहमुपागते ।
हस्तस्पर्शो हि मातृणामजलस्य जलाञ्जलिः ॥
३.१२

सकलः खलु भरतपरिवारः कलङ्केन, राजा चाकालमृत्युना, समस्ता व्यस्ताऽयोध्या रोदनकर्मभिः. सुकुमारः कुमारो लक्ष्मणो मृगजन्तुभिर्मातरः सुतशोकेन, गृहवधूः सीता कण्टकाकीर्णमार्गेण सर्वे खल्वप्येते एकेनैव नृशंसकर्मणा संयोजिताः ! ननु अम्बे कैकेयि !

मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।
गङ्गायमुनयो र्मध्ये कुनदीव प्रवेशिता ॥ ३.१६

हे लक्ष्मणाग्रज ! अयमहं अयोध्यासिंहासने रघुतश्चतुर्थः, अजादपि तृतीयः, तेजस्विनश्च तव पितुर्द्वितीयो यस्य त्वं अग्रजोऽथ च कुलस्य कर्तुर्भवसि सोऽयम् आगतोऽस्मि, भक्तिमानयं स तिष्ठतु, आहोस्विद् यातु . . . .

मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता ।
तमहं द्रष्टु मिच्छामि दैवतं परमं मम ॥ ४.३

नैते पाण्डवा धनदायाद्यमर्हन्ति, यतो हि—

**वने पितृव्यो मृगया प्रसङ्गतः**
**कृतापराधो मुनिशापमाप्तवान् ।**
**तदा प्रभृत्येव स दारनिस्पृहः**
**परात्मजानां पितृतां कथं व्रजेत ?**

दूतवाक्ये १.२१

वासुदेव .. पुराविदं भवन्तं पृच्छामि — ( हे दुर्योधन ! )

**विचित्रवीर्यो विषयो विपत्ति**
**क्षयेण जातः पुनरम्बिकायाम् ।**
**व्यासेन जातो धृतराष्ट्र एष**
**लभेत राज्यं जनकः कथं ते ।१.२२**

कन्यानां सम्प्रदाने श्लाघ्यं कुलं तावत् तदथ दयादाक्षिण्यशौर्यगुणसम्पद् वरे, अन्यदपीदमभीप्सितं ज्ञातीनां समत्वम्, अथापि मातु र्हृदयं वातान्दोलितदीपशिखामनोहरं सुकुमारं च भवति, यतोहि—

**अदत्ते त्यागता लज्जा दत्तेति व्यथितं मनः ।**
**धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ।।**

प्र यौ. २.७

पुत्रशोको नाम अन्धस्य पुनरन्धीकरणरसायनम्—

**वृद्धस्य मे जीवितनिस्पृहस्य**
**निसर्गसम्मीलितलोचनस्य ।**
**धृतिं निगृह्यात्मनि संप्रवृत्त**
**स्तीव्रः समाक्रामति पुत्रशोकः ।।ऊ.भ.४.८**

नयनासेचनकं खलु प्रेम इति पीयूषमकरन्दगर्भं भ्रात्रो र्हृदयवर्ति किमपि नाम रसायनम्—

**वक्षः प्रसारय कवाटपुटप्रमाण-**
**मालिङ्ग मां सुविपुलेन भुजद्वयेन ।**
**उन्नामयाननमिदं शरदिन्दुकल्पं**
**प्रह्लादय व्यसनदग्धमिदं शरीरम् ।।७.७**

भासस्य नाटकपद्यानि तथाविधानि रमणीविलसितानीव रमणीयानि सन्ति यानि विषयान्तरपरिहारेण पुनः पुनश्चेतसि प्रवेशनयोग्यानि क्रियन्ते सहृदयैः । पद्येष्वपि खल्वेकतस्तु काव्यगतसौन्दर्यं समुल्लसति, अन्यतश्च नाटकभङ्गीमङ्गीकृत्य पदानि पात्राणीव स्फुरन्ति ।

संस्कृतसाहित्ये वाञ्छितपदक्रमाणां चङ्क्रमणं विधातुं भासस्य नाटकचक्रं बालकशिशोरंगुलिग्रहणमिवैकतः सुजनसज्जनरसोर्मिमज्जनतामाचरति, अन्यतश्च भवभूतिकालिदासप्रभृतीनां काव्यकर्ममर्मसाचिव्याचार्याणामपि वाचां संचारे चत्वरसञ्चारितमणिमय दीपचक्रमिव चक्रधरस्य, चटुलकविचकोरचित्तवर्तिचातुर्योल्लासनपटु चन्द्रचरित्रमिव नितरां अभिनन्दनयोग्यं चन्दति ।

भगवच्चरणारविन्दमकरन्दं प्रति दन्ध्वन्यमानभ्रमरचक्रमिव भासस्य नाटकचक्रं जगदाह्लादनचतुरं खेचरचक्रमिव चन्द्रज्योत्स्ना स्नातानुलिप्तं दीप्तं च दीव्यति । एकतो ब्रह्मणो निष्ठाऽन्यतश्च जगतः प्रतिष्ठा, एकतो धर्मार्थकामानां संग्रहोऽन्यतश्च मोक्षमार्गं प्रति चारुसङ्केतः, एकतः संयोगस्याऽऽनन्दमन्दाकिनी अन्यतश्च विप्रलम्भस्य आशासञ्चारमुदिराणि परिदेवितानि, एकतो वीरस्य सहसोल्लसितानि परिगर्जितानि अन्यतश्च शान्तस्य निर्मलस्वान्तपरिकर्माणि, शिष्टाः शिष्टेभ्यः कथं भाषेरन्निति एकत उपदेशो ऽन्यतश्च भारतसंस्कृतेरासंसारं माहात्म्यमुपवर्णितं कविना । मनोरञ्जनं त्वस्त्येव पदे पदे । एवं भारतानुरूपं विदुष्मदभिमतं महदुपकारजननं मानवतामुग्धदुग्धपरिपूर्णं सुकविराजहंसरुचिरमृणालनालं साहित्यिकमन्दारमन्दितमन्दरमेरुमन्दिरं नर्तितच्छात्रमयूरघनपटलं विलकसच्चन्दनगन्धमलयानिलं सरस्वतीनूपुरझंकृतशृङ्गारभृङ्गारं परिलसित स्फटिकफलकगुरुप्रतिबिम्बम् उदयगिरिविराजमानपूर्णशशिमण्डलं नितरां नयनोत्सवजननं भासस्य नाटक चक्रम् । वक्तुं च शक्यते, इत्थं भासस्य नाटकचक्रतपोवनात् सिद्धिरिवानीता कविकुलगुरुणा कविताज्योत्स्नामण्डितहृदयेन कालिदासेन।

—०—

# श्रमसिद्धिः

विद्याभूषणः श्री गणेशरामशर्मा, झालावाडः ( राजस्थान )

: १ :

आषाढमासः। मेघाडम्बरेणाच्छादितं नभोमण्डलम्। नीरवनिस्पन्दं स्तब्धं च वातावरणम्। घर्मोष्मणा व्याकुलाः सर्वे प्राणिनो यत्र तत्र च्छायासु निलीनाः कथमपि कालक्षेपं कुर्वन्तो दरीदृश्यन्ते। चण्डांशुः प्रखरतरं तातप्यमानोऽधुना मध्याह्नोत्तरं पश्चिमां दिशं प्रति किञ्चिदिवानतो विभाति। यदा कदा ग्रीष्मतापाहतो झंझावायुः प्रवहन् रजस्तोमानितस्ततो विकिरन् सशब्दं दिशामञ्चलेषु विलीयमानोऽस्ति। भूमिर्ह्युत्तापादिवोच्छ्वसन्ती धर्मोद्गारान् विमुञ्चति। अपराह्णप्रायोऽसौ समयः।

अस्मिन्नेव समये धरणीधरनामा कश्चित्पथिको घोटकारूढो निर्मानुषमरण्यं प्रविश्य दुर्गमे वनप्रान्तरे व्रजन् क्रमशो गतिशीलतामासादयन् वर्तते। स हि पथिको राजकीयवनविभागस्य वनरक्षकस्य ( फौरेस्ट गार्ड ) पदे नियुक्तोऽस्ति। ततः स स्वनियोगकर्तव्यपरिपालनाय गन्तुं सयत्नोऽस्ति। घोटकमनुचलन्नेको भिल्लो भृत्यजनः स्वशिरसि कांश्चन सम्भारान्नीत्वा शनैः-शनैर्गच्छन् वर्तते। इत्थं तौ द्वावपि निबिडवने निःशब्दं चलतः।

यावत्तौ वनान्तरेऽर्द्धप्रायं मार्गमतिक्रामतस्तावदेव पूर्वदिग्भागाद् वाताहतामेघाः क्रमेणागत्य खं रोदसी चाच्छादयितुमारेभिरे। स खलु घोटकारूढो राजकीयकर्मचारी धरणीधरो वातावरणं घनगम्भीरं श्यामायमानमालक्ष्य गन्तव्यायां दिशि वेगेनाग्रेसर्तुं स्वघोटकं प्रेरयति, त्वरते च परन्तु घोटको यथापूर्वमेव स्वगतिक्रमेण चलति। यतः सोऽपि च शिथिलसर्वाङ्गः प्रस्वेदक्लिन्नः परिश्रान्तो दीर्घमुष्णञ्च श्वसन्नुच्छ्वसन्नातिजवेन प्रचलितुं पारयते। तावदेव धरणीधरः पश्चाद्ग्रीवाभङ्गमवलोक्य — 'अये, त्वर्यताम्, अधुना बहु गन्तव्यमवशिष्यते! किं न पश्यसि भो! मेघाच्छादितं नभः? त्वर्यताम्! त्वर्यताम्!

इत्थं धरणीधरो घोटकं भृत्यं च प्रेरयन् यावत् पर्वताधीत्यकामेकामनुद्वितीयामतिलङ्घ्य झटिति गन्तुं प्रवर्तते, तावदेव पूर्वक्षितिजे मन्द्रध्वनिधीरं गम्भीरं च गर्जतां जलदानां ध्वनिं शुश्राव, मध्ये-मध्ये विद्युल्लतास्फुरणानि च ददर्श। तेन पश्चात् परिवृत्यावलोकितं तदा ज्ञातं यत्तदनुगामी भिल्लो भृत्यो गिरिमेखलायां पथि चलन् स्खलन् प्रस्खलंश्च महता काठिन्येन शनैः-शनैः सायासप्रयासं पर्वतमार्गमतिक्राम्यन्नागच्छन्नास्त इति। दृष्ट्वैतत् स तत्रैव मध्येमार्गं कांश्चित् क्षणांस्तस्यागमनं प्रतीक्षमाणस्तस्थौ। ततः पुनरितस्ततो विहङ्गमावलोकनक्रमेण दिङ्मण्डलं च पश्यति। समीपमुपयाते भारवाहिनि भृत्ये स तमुवाच—'अये, त्वं किं न पश्यसि भोः! विलम्बो जायते! दृश्यताम्, तत्रेशानकोणे मेघमाला व्युत्तिष्ठमाणास्ते, विद्युल्लता च विस्फुरन्ती वर्तते। मन्येऽद्य मध्येमार्गमेव मेघवर्षणं स्यात्। तत्त्वं शनैः शनैरागच्छ, यावदहं शीघ्रमग्रे सर्तुं सयत्नो भवामि। पश्य, कार्यालयस्य कर्गदादीनि निपुणं रक्षितव्यानि, मम पदपद्धतिमनुसरता त्वया झटिति वनमध्ये वर्तमाना रक्षाकुटी समागन्तव्या। सावधानो भव! अहमितो गच्छामीदानीम्! एवमाभाष्य धरणीधरो घोटकं सम्प्रेर्य पुनः पर्वतारोहणे सचेष्टोऽभूत्।

अथ यावद्धरणीधरो घोटकारूढः क्रोशप्रायं पन्थानमतिवर्तते तावदेव वर्षाजलं निपतितुमारेभे। वायुवेगेन साकं धारासारं जलं ववर्ष। क्षणादेव सर्वमपि प्राकृतिकं दृश्यं पर्यवर्तत। असह्यो भीषणोऽपि च ग्रीष्मातपोऽधुना मह्यतामिव जगाम। वायुवेगेन साकं प्रचुरं वर्षितेन जलेन सर्वमपि वायु-

मण्डलं शीतलं समभूत् । सर्वतो हिमशीतला वायुतरङ्गाः प्रावहन् । सघोटको धरणीधरो जलक्लिन्नो बभूव । तच्छरीरे यदा कदा शीतबाधाजन्य प्रकम्पो जायते । स हि सर्वाङ्गे पीडामिवानुभवन्नपि मार्गातिक्रमणे सयत्नो भवति मनसि चेत्थं चिन्तयति—'अथेदानीमपि मया क्रोशाधिको मार्गोऽतिक्राम्योऽवशिष्यते । सन्ध्यासमयो जातः । स च मे भृत्यस्तावद्दूरेऽवरुद्धो वागच्छन् वा वर्तत इति न ज्ञायते । अहो ! अन्धकारः क्रमशः सर्वतो घनिष्ठो जायमानो भवति । तदहं कथमिव शीघ्रतरं गन्तव्यस्थलं प्राप्नुयाम् । अस्तु, मया तु कथमपि गन्तव्यमेव, भृत्यस्तावदायास्यति स्वगतिक्रमेण । अहह ! बाधते मां नन्विदं शीतम् !! किमहमत्र कुर्याम् ? ईश्वरेच्छा बलीयसी ! यद्भाव्यं तद्भविष्यति । इत्थं चिन्तनपरो धरणीधरः पुनः स्वपथे गतिशीलतामासादयितुं तत्परो बभूव ।

सोऽयं सघनवनवृक्षलतापादपाच्छन्नः सकण्टको मार्गः । नववर्षाजलेन यत्र तत्र प्रवहन्तो जलौघाः । उच्च वचा सकर्दमोद्घातिनी च वन्या पर्वतभूः । घनान्धकारः नेत्रदृष्टिर्न किमपि स्पष्टतोऽवलोकयितुं पारयते । वन्यजीवाश्च यत्र तत्र दिग्भ्रान्ता इव विचरन्तो विद्यन्ते । यदा कदा सिंहशृगालघूकादीनां वन्यजन्तूनां गर्जनरवा दूरतः समीपतो वा श्रूयन्ते । मण्डूकानां कलकलध्वनिप्रसारात् किमपि स्पष्टं श्रोतुं न सम्भवति । अतीव भयङ्करं वनम् । सत्यप्येवं धरणीधरो महता काठिन्येन स्खलन् प्रस्खलन् पन्थानमनुलग्नः प्रयाति । यदा कदा विद्युद्वल्ली घनगर्जनेन साकं विस्फुरति, तदासौ मार्गस्थो धरणीधरस्तदालोके पन्थानं निश्चित्य मनसि कामपि प्रसन्नतामिवानुभवति क्षणम् पुनर्विलीने विद्युत्प्रकाशे, सर्वतोऽन्धकारकुहरे परिव्याप्ते च स्वात्मानं पथभ्रष्टकान्दिशीकमेकाकिनमसहायमगतिकञ्च सम्भाव्य भयार्दित इवानिष्टबाधाशङ्कातङ्काकुलहृदय इव भवति । इत्थं कथमपि क्रमेण स धरणीधरः प्रहरप्रायं व्यतीतायां रात्रौ महता कृच्छ्रेण वनैकदेशे काष्ठनिर्मितां कुटीं प्राप ।

: २ :

अथासौ कुटी चापि घोरेऽरण्यप्रान्तेऽतीव प्राकृतिके स्वरूपेऽवस्थितास्ते । पार्वत्ये प्रदेशेऽपि च समधरातले शतद्वयहस्तप्रमाणे प्राकृतिकैः साधनैरेव निर्मितमेतत् कुटीरमास्ते । आयताकारां कुटीं सर्वतोऽभ्रङ्कषाः काष्ठवलयो वितस्तिप्रमाणान्तरे भूमौ निखाताः सन्तिष्ठन्ते । ताः सर्वाः काष्ठवलयः कुटीं परित आयताकारं क्षेत्रं विरच्य संस्थिता वर्तन्ते । वलिद्वयान्तरेऽवकाशश्छिद्राणि वा सन्ति तानि सर्वाणि वनवृक्षलतापत्रप्रतानैः पल्लवतृणादिभिश्चाच्छादितानि सन्ति । वलयश्च ता इमाः पुरुषत्रयप्रमाणोच्छ्राया दीर्घाकाराः सुदृढाश्च सन्ति ततो विवरेभ्यो न कोऽपि वन्यजन्तुः कुट्या अभ्यन्तरं प्रवेष्टुं पारयते । कुटीमध्ये प्राङ्गणं प्राङ्गणे चैको निम्बवृक्षः सघनच्छायासनाथो विराजते । इत्थं रक्षादृष्टचा कुटीरमिदं सर्वतः सुरक्षितं वरीवर्ति । कुट्यामस्यां, सति प्रयोजने, यदा कदा केचन वनरक्षका भृत्याः शासको वा मृगया प्रसङ्गे समागत्य विश्रमन्ति । राजकीयेन प्रबन्धेन निर्मापितायामस्यां हि कुटचां न कोऽप्यन्यो जनः प्रवेशं लभते, न चास्मिन् राज्यद्वारा सुरक्षिते घोरेऽरण्यप्रदेशे जनसाधारणस्य कृते यातायातमार्गोऽपि च विद्यते । अस्यां हि कुटचां प्रांगणातिरिक्तमेकः सुविशालं आवासकक्षोऽस्ति, यस्मिन् किलैका खट्वा, कानिचिदिन्धनानि गोमयोपलादीनि, रज्जुवलगनी तथा चुल्ली प्रभृतीनि वस्तूनि यत्र तत्र निहितानि वर्तन्ते । यतः कुटीयं वनस्य मध्यकेन्द्रे, सर्वतः प्रोच्चतमे शिखरधरातले विद्यमानास्ते ततोऽत्र निवसञ्जनः स्थानादस्मात् क्रोशद्वयपर्यन्तं सर्वतोदिक् सर्वमपि वनं दृष्टुं पारयते ।

अथेदानीं धरणीधरः कुटीं प्रविश्य, घोटकं च विगतपर्याणं कृत्वाङ्गणैककोणे स्थूणायामेकस्यां बबन्ध। तस्मै तृणादिकाहारं च दत्तवान्। स्वेन साकं घोटकपृष्ठे समानीतान् सर्वान् सम्भारान् कुटया अस्या अलिन्दे न्यधत्त। ततो मृद्घटमेकं प्राङ्गणे निपतन्त्या जलधाराया अधस्ताज्जलसङ्ग्रहाय संस्थापयामास। इत्थमारम्भिकं कर्तव्यं परिसमाप्य धरणीधरः स्वकीयानि वर्षाजलक्लिन्नानि वस्त्राणि निस्सार्यैकतः समस्थापयत्। ततश्चुल्यां शुष्केन्धनपर्णादीनि निक्षिप्य दीपशलाकयाग्नि प्राज्वालयत्। तदनन्तरं स एकतो रज्जुं बध्वा जलाप्लुतानि स्ववस्त्राणि प्रासारयत्। स्वयं च स्वकीयमुष्णीषं (साफा) प्रसार्याद्धं परिधार्यावशिष्टमर्द्धमग्नेर्ज्वालातापे शोषयितुमुपचक्रमे। तावदेव तस्यानुचरो भृत्योऽपि तत्र कुटीमागत्य सम्भारान् सर्वानेकतो निधाय विरराम। धरणीधरो वस्त्रादीनि व्यवस्थितानि कृत्वा तं भृत्यमाह—

'अये गोतम ! महता कष्टेनाद्य वयमत्र कुटीमिमां प्राप्ताः स्मोऽधुना। अथेदानीं क्षुधा मामतीव बाधते। तदत्र निर्मानुषेऽरण्ये कथमिव किमपि भोज्यं वस्तु लभ्येत ?'

गोतमः—'स्वामिन् ! सत्यमेव हि परिश्रान्तावावाम्। अहमपि चातीव क्षुधापीडितोऽस्मि। अन्यत्तु किं ममाधीनम्, परन्त्वितः क्रोशप्राये दूरे काचिद् ग्रामीणानां वसतिर्विद्यते। यदि च भवतामाज्ञा भवति, तदाहं तत्र गत्वा किमपि भोज्यं यथोपलब्धमानेतुं प्रयतेय।'

धरणीधरः— 'अये गोतम ! निखिलमपि मार्गं भारमुपढौकयन् मार्गकष्टानि च सहमानस्त्वं नूनमेव परिश्रान्तोऽसीति जानेऽहम्। पुनश्च वनेऽत्र भ्रमणात्ते महत्कष्टं त्ववश्यं स्यात् परं यदि नातिखेदकरमसह्यं वाकलसि तदा त्वया तत्र गन्तव्यमेवोचितम्। तद्गच्छ त्वम्। यथोपलब्धं किमपि भोज्यमानयस्व येनावां जठराग्निमुपशामयितुं पारयेव।'

एवमुक्तवति धरणीधरे सभिल्लो भृत्यो गोतमस्ततः कुटीराद्बहिर्निष्क्रम्य वनमार्गे प्रचलितः क्षणादेव दृष्टितो विलीनोऽदृश्यतां जगाम।

अथ व्यतातेऽर्द्धप्रहरप्राये समये स भृत्यो गोतमस्तत्र परावृत्यागतः। आगत्य च सविनयेनावादीत्—

'प्रभो ! नान्यत् किमपि भवद्योग्यं भोज्यं वस्तु सुलभं बभूव। केवलमेते किलैकशेरभारा धान्यकणा अर्द्धशेरप्रायं दुग्धं च मयासादितम्' इत्युक्त्वा तेन धरणीधरसमक्षं यावदानीतं सर्वं तत्र निहितम्।

अथ धरणीधरेण मृत्पात्रमेकं भङ्क्त्वा तदग्नेर्ज्वालासु निधाय ते धान्यकणाः पर्यपच्यन्त। ततस्तेन दुग्धेन चायचषकं संसाध्य तौ द्वावपि चाहारं कर्तुं प्रावर्तताम्।

: ३ :

अथ यावत्तावन्नपानादिकं कर्तुं व्यवस्यतस्तावदेव तत्रारण्यकुटीरसमीपं कस्यचित्पदध्वनिरिव दूरतोऽस्पष्टमश्रूयत। धरणीधरो यावद् भृत्यं गौतमं 'कोऽसौ ध्वनिः ? कश्चागच्छन्स्यात् ?' इत्यादि ज्ञातुं प्रेरयति, तावदेव कश्चनाश्वारूढो भद्रजनो मृगयोपयुक्तवेशभूषां परिदधानः शस्त्रास्त्रधरस्तत्कुटीरद्वारमागत्योवाच। नवागन्तुकः—'अये, कोऽत्र भोः ! वर्तते कुटीराभ्यन्तरम् ? कुटीरद्वारमुद्घाटयताम् !'

धरणीधरः — 'कस्त्वमसि भोः ? किमर्थं चात्र मध्यरात्रे श्वापदाकुलं निर्मानुषं महारण्यं सर्वकारेण सुरक्षितं प्रविश्येतस्ततो भ्राम्यसि ? इयं तेऽनधिकारचेष्टास्ते ! आदौ स्वनामधामादिकं परिचयं ब्रूहि, नो चेन्निगृह्यात्र बन्दी करिष्यसे त्वम् ! ब्रूहि, ब्रूहि,

त्वरितमेव ब्रूहि स्वपरिचयम् ! यदि च धृष्टतया त्वं विलम्बसे तदा ममाग्नेयास्त्रेणेतः प्रयुक्तेनात्मानं पञ्चत्वं गतमेव भावय भोः ! उच्यताम्, कोऽसि त्वम् ?'

नवागन्तुकः – 'अाम् अहमसौ महेन्द्रो नामास्य राज्यमण्डलस्य शासकोऽस्मि । मृगयाप्रसङ्गान्नगराद्-बहिर्विनिर्गतोऽहमत्रारण्येमार्गविभ्रान्तोऽस्मि संजातः। कृपया द्वारमुद्घाटचताम् !'

'शासको महेन्द्र' इति श्रवणसमकालमेव धरणीधरो द्वारसमीपमागत्य ज्योतिर्लिङ्गप्रकाशसाहाय्येन कपाटविवरेषु निपुणं निरीक्ष्य 'स हिशासक एवासौ वर्तत' इतीदमित्थं निर्भ्रान्तं मनसि विनिश्चित्य कुटीरस्य तस्य काष्ठकपाटमुद्घाटयामास । शासकश्च स महेन्द्रो नाम तत्कुटीरप्राङ्गणं प्रविश्याश्वादवारुरोह । धरणीधरस्तं महेन्द्रं विनयेन ववन्दे, गोतमश्च तस्याश्वं विगतपर्याणं कृत्वा कुटीराङ्गणस्यापरस्मिन् कोणे स्थूणायां निबबन्ध, तस्मै राजकीयतुरङ्गाय तृणादिकमाहारं च व्यसृजत ।

अथ मृगयावेशधारी महेन्द्रोऽन्तः कुटीरं प्रविश्य तत्र प्रकोष्ठे समास्तृतां खट्वां न्यषीदत् । सहि मृगयाप्रसङ्गे चिराद्वनेऽस्मिन् बंभ्रम्यमाणो मार्गान्मार्गमाहिण्डन् श्रान्तः क्लान्तः परिश्रान्तः क्षुत्तृड्परीतो निष्प्रभः खेदखिन्नो महायासप्रयासैः शिथिलितसर्वदेहावयवो महानपि तेजस्वी चापि कष्टां दशां गतो दयनीय इव शरणं याचमान इवागतिक इव कान्दिशीक इवादृश्यत धरणीधरगोतमाभ्याम् । क्षणादनन्तरं धरणीधरो जलमपाययच्छासकं महेन्द्रम् । ततः किञ्चिदिवाश्वस्तो भूत्वा महेन्द्रो धरणीधरं पपृच्छेत्थं तयोर्वार्तालापक्रमश्च प्रारेभेः—

शासकः — 'अथ किंनामा भवान् किञ्चात्र क्रियते भवता ?'

धरणीधरः – 'श्रीमन् ! जनोऽसौ भवतां वनविभागान्तः सेवां सम्पादयन् वनरक्षकत्वेन ( फौरिस्ट गार्ड ) विभागीयाधिकारिभिर्नियुक्तोऽत्र स्वनियोगं परिपालयन्नास्ते । धरणीधरश्चेति ममाभिधानम् ।'

महेन्द्रः–'त्वमत्र कदा नियुक्तः ? कियन्तं कालं चैतद् वनरक्षणकार्यं कुर्वाणः सन्तिष्ठसे ?'

धरणीधरः – 'अहं हि मासचतुष्टयादेवात्र कर्मणि नियुक्तोऽस्मि, कार्यमेतच्च सम्पादयन् वर्ते!'

एवं वार्तालापक्रमे प्रवर्तमानयोस्तयोः स भृत्यो गोतमो न्यवेदयत्– 'श्रीमन् ! प्रसीदतु भवान् !' इदानीमग्निना परिपक्काः शेरपरिमाणा धान्यकणाश्चायचषकपेयं चोष्णं संसाधितमवध्रियते, तद्यदि मामाज्ञापयन्ति भवन्तस्तदात्रानीयोपस्थापयानि !'

महेन्द्रः–'अवश्यमानीयताम्,क्षुत्तृट्परीतोऽस्मि '

एवं ते त्रयोऽपि यावदुपलब्धं सर्वं भुक्त्वा शयनायोद्यता बभूवुः । शासकश्च क्रमशो धरणीधरगतं सर्वमपि वृत्तं प्रश्नोत्तरपरम्परया जजान ततस्तेऽशयन्त ।

अथ प्रभाते बुद्धो महेन्द्रः शय्यां त्यक्त्वा शौचस्नानादिकं कृत्यं निर्वर्त्य स्वस्थचित्तो भूत्वा पुनः कुटीरकक्षे खट्वामधिष्ठाय सुखासीनो बभूव । धरणीधरञ्च वनप्रदेशस्यास्य स्थितिविषये तद्रक्षाविकाशादिविषये च विभागीयप्रबन्धप्रयत्नयोजनादिकं पृष्ट्वा स्वकीय दैनन्दिन्यां किमपि समुल्लिख्य पुनरश्वमारुह्य तेन भिल्लसेवकेन गोतमेन प्रदर्शितमार्गो महेन्द्रो नगराभिमुखं प्रतस्थे ।

: ४ :

अथ राजभवने शासको महेन्द्रो वनविभागाध्यक्षेण तत्पदे सद्यो नियुक्तेन साकं राजकीयवनानां रक्षाविकाशसम्बद्धां मन्त्रणां कुर्वन्नास्ते । कर्णदानां, मानचित्राणां च साहाय्येन वनाध्यक्षः शासकस्य प्रश्नानामुत्तराणि प्रयच्छंस्तं तोषयितुं चेष्टते, परं शासकस्य पूर्णतः समाधानं संतोषश्च न भवतः ।

प्रसङ्गोपात्तं शासकेन पृष्टम्— 'वनाध्यक्ष ! अस्माकं वनविभागे कोऽस्ति ननु तादृशः सेवको यो हि वनगतं सर्वं तत्त्वतो जानीते, वनानां रक्षार्थं तद्विकाशार्थं च स्वयमेवोत्साहप्रेरितोऽवधानं प्रदत्ते, सावधानं सपरिश्रमं जागरूकं च प्रयतमानस्तत्र कर्मकलापेषु प्रेरणामभिरुचिं च धत्ते ?'

वनविभागाध्यक्षः – 'श्रीमन् ! नाहं सविशेषं किमपि तादृशमिदमित्थं जानानोऽस्मि सर्वविभागे कार्यसम्पादनपराणां सेवकानां विषये, परमेतत्त्वह सम्यग् जाने यद्धि धरणीधरो नाम वनरक्षकोऽतीवोत्साहपरो वनविभागीयकार्यकलापेष्वतितरां मनोयोगं दधाति, स चात्र विभागीयवनानां सम्बन्धे प्रामाणिकमनुभवं रक्षतीति ।'

शासकः -- 'आम्, स्यादेवम्, सम्भवति !'

एवं क्रमेण धरणीधरस्य विषये लोकेभ्यः प्रशंसां शृण्वानः स्वानुभवाच्च तद्गतगुणान् सम्भावयन्नसौ शासको महेन्द्रस्तद्विषयेऽधिकाधिकं जिज्ञासुराकृष्टचेताश्च बभूव ।

अथैकदा शासकोऽयं महेन्द्रो मृगयाविहारप्रसङ्गे वनाद्वनं पर्यटंस्तत्र वनान्तरे तत्कुटीरं जगाम, यत्र धरणीधरो वनरक्षकत्वेन स्वनियोगं परिपालयन्नास्ते । तत्समये धरणीधरः सरोवरे स्नात्वा धौते वाससी परिधाय पश्चिमाभिमुखमासीनः सायंसन्ध्यामुपासानोऽभूत् । प्रशासको दूरत एव तं तथाविधमालोक्य क्षणं प्रतीक्षमाणस्तस्थौ । सन्ध्यावन्दनं परिसमाप्य कुटीरं प्रति निवर्तमानेन धरणीधरेण शासकोऽवलोकितः सोपचारं च नमस्कृतः । कुटीं प्रविश्य वस्त्राणि परिधार्य बहिरागत्य शासकस्य पुरतो विनयेनोपतस्थे । क्षणं प्रासङ्गिकं वार्तालापं विधाय शासको महेन्द्रो धरणीधरं पृष्टवान्—

'धरणीधर ! त्वं ब्राह्मणो भूदेवो वर्णगुरुः कुलीनोऽपि सन् किमर्थमत्र शूद्रजनैः सेवनोचिते वनविभागे वनरक्षकपदे राज्यसेवां स्वीकृतवानसि ?

धरणीधरः – 'श्रीमन् ! यतोऽहं श्रीमच्छासितेऽत्र राज्ये किलैकस्मिल्लघुतमे ग्रामे लब्धजन्मास्मि, मम शैशव एव मत्पिता मृतो विधवामात्रा चाहं महता कष्टेन प्रयत्नशतैश्च कथमपि पालितः पोषितश्च । निर्धनत्वान्नाहं यावदभीष्टामधिकाधिकामुच्चशिक्षामाप्तुं सुविधामाप्नवम् । ततोऽष्टमीं कक्षां यावत् पाठशालायामधीत्य निर्वाहार्थमत्र वनविभागे नौकरीमासादयम् । गतवर्षेऽहं मध्यप्रदेशे बालाघाट इति वनसम्बन्धिप्रशिक्षणकेन्द्रे प्रशिक्षणं लब्धवानस्मि । मासद्वयपूर्वमेवाहमत्रायातोऽस्मि । यतो वनभ्रमणं, वननिवासो, वनरक्षणं, वन्यजीवानां निरीक्षणं च मह्यं सुतरामभिरोचन्ते तस्मादेवात्र वनरक्षकस्य कार्यं कुर्वाणोऽस्मि । निसर्गत एव कार्यमेतन्मम स्वभावरुचेरनुकूलम् ।'

शासकः– 'अपि त्वं संतुष्टोऽसि कर्मणानेन ?'

धरणीधरः-- 'आम्, संतुष्टोऽस्मि महोदय ।'

शासकः – 'साधु, अहमधुना ममास्य राज्यमण्डलस्य वनानामामूलचूलं नवपद्धत्या विकाशं साधयितुमिच्छामि । अपि त्वमत्र वनविकाशकर्मणि तद्रक्षणविधाने च सोत्साहं स्वसेवासमर्पणं सहयोगं च करिष्यसे ?'

धरणीधरः — 'श्रीमन् ! क्वाहमल्पशिक्षितोऽल्पधीरल्पशक्तिर्दीनो जनः क्व च भवन्तोऽत्रभवन्तो महान्तः प्रशासका अधीतसर्वविद्याः ? किं च ममायत्तम् ?? किं वाहं लोकोत्तरं किमपि कर्तुं पारये ??? सत्यप्येवं स्वयोग्यतानुसारं यथाशक्ति यच्छ्रीमान् मादेक्ष्यति तदहं मनसा वाचा कर्मणा च सर्वात्मना सम्पादयितुं प्रयतिष्ये । आज्ञापयन्तु महोदयाः किमहं करवाणि ?'

शासकः — 'अहं तवेतः स्थानान्तरं विधाय राजधान्यां वनविभागकार्यालये नियुक्तिं कर्तुं वाञ्छामि । येन तव च मम च सुविधा स्यात् ।'

धरणीधरः — 'भवद्वचः प्रमाणम् । यदि च श्रीमन्तः कार्यगौरवान्ममोपयोगानुरोधात् स्नेहाद्वा मां राजधान्यां नियोक्तुं कृपयन्ति तदा तन्मे सौभा-

ग्यायोन्नतये श्रेयसे च स्यात् परमहमत्रातीव विनयेन निवेदयानि यदह नगरनिवासं न कामये । अहं तु वनेऽवस्थानमेव वाञ्छामि । बाल्यादेवाहं वनप्रियः । वनप्राये ग्रामेऽहं लब्धजन्मा, वनप्राङ्गणेषु क्रीडितो वनविभागे च राज्यसेवां विदधानो वनवसतिमेव मे क्षेमाय मन्ये । निसर्गत एव मह्य वननिवासोऽभिरोचते । ततो यथाज्ञा भवेच्छ्रीमतां तथैव कर्तुं सन्नद्धोऽस्मि ।'

शासकः— 'अथ च तवात्र वने किन्नामाकर्षणम्, येन त्वं वनवसतिमभिलषसि भोः ?'

धरणीधरः— 'श्रीमन् ! क्षम्यतां मे वाचालता, परन्तु वनानामपरं महत्त्वमास्ते । वनेषु या शान्तिर्यच्च नीरवनिःस्तब्धं वातावरणम्, या प्रशान्ता प्रकृतिः, यद्वा स्वस्थं प्रसन्नं प्राकृतिकं निसर्गरमणीयं जीवनं च भवति तत्कुतो नु बत जनसङ्कुले कोलाहलाक्रोशचीत्कारबहुलेऽशान्ते च नागरिके जीवने ? ममपुनर्वनविभाग एव सेवासम्पादनाय नियुक्तिर्वनमेव हि मे कार्यक्षेत्रम्, ततो नगरापेक्षया वनजीवनं मे समधिकं रोचते !'

शासकः — 'यदि चैवमेवास्ति ते मनोऽभिलाषस्तदाहं तवात्रैव नियुक्तिं परिपालयामि । परमहं राजस्य, विशेषतो वनविभागस्य विकाशं साधयितुं कृतसङ्कल्पोऽस्मि ततो विचारविनिमयाय मन्त्रणासौकर्याय च त्वामहं स्वसमीपे स्थापयितुं सयत्न आसम् । तथापि त्वं वनवसतिमेव श्रेयसे मन्यसे, तदा त्वमत्रैव वने ससुखं स्वनिवासं प्रकल्पय, विभागीयां सेवां च विधेहि ।'

धरणीधरः — 'यथाज्ञापयति देवः ।'

( शेषागामिन्यङ्के )

## 'जवाहरः'

व्याप्तस्त्वत्कीर्त्यास्ति जवाहर ! संसारोऽयमपारः ॥

सदसद्विवेकिनी ते बुद्धिः । लब्धा त्वया समस्ता सिद्धिः ॥
दिव्यं वपुः कान्तिमद् रूपं विचरति कुत्राकारः ॥ व्याप्त . . .
विश्वरङ्गभुवि नरीनृत्यते । नटीव कीर्तिर्नावमन्यते ॥
ते गुणांस्तु गायति धृतशोको मुग्धोऽयं संसारः ॥ व्याप्त . . .
आढ्यान्वये हि लब्धं जन्म । परन्तु न ज्ञातं भुवि शर्म ॥
कदापि चेतस्यभून्न दुःखं नासीन्मनोविकारः ॥ व्याप्त . . .
नूनं राजनीतिरिह सुप्ता । दिवङ्गते त्वयि बुद्धिर्लुप्ता ॥
आसीर्लोकस्यास्य सदा त्वं मुख्य एक आधारः ॥ व्याप्त . . .
नैके विश्वविश्वनेतारः । राजनीतिविद्यावेत्तारः ॥
चक्रुस्त्वत्पूजां सन्तुष्टा हा ! हा !! नष्टो हारः ॥ व्याप्त . . .
भावय राष्ट्रं भारतवर्षम् । देशो व्रजेदमन्दं हर्षम् ॥
वक्ति कवीशरामकैलाशः प्रसरतु शुद्धाचारः ॥ व्याप्त . . .

— कवीशः रामकैलाशः पाण्डेयः, एम. ए., शास्त्री,
रिसर्च स्कालर संस्कृत विभागः, प्रयाग विश्वविद्यालयः, प्रयागः ।

# देवतास्वरूप मीमांसा

## ( सूक्त-रत्न-संग्रहः )१

### श्री अरविन्दः

[ अयमनुवादोऽत्र मया सामान्यपाठकस्य प्रयोजनपूर्त्तये, केवलं निष्कृष्टसाररूपेण, स्वप्रस्थापित सिद्धान्तस्योदाहरणरूपेण च प्रस्तूयते । भाषाविज्ञानस्य समीक्षाशास्त्रस्य च दृष्टयाऽस्यानुवादस्य ( मत्कृत-शब्दार्थस्य ) समर्थनं तावदतिपरिमितपण्डितमण्डलस्यैव मनोरञ्जकं स्यात् । तथापि कतिपयसङ्केता उत्तरत्र दास्यन्ते ये खलु मे पद्धतिं निदर्शयेयुः । ]

### प्रथमोऽध्यायः

#### इन्द्रागस्त्य–संवादः

( ऋग्वेदः म १ सूक्त १७० )

इन्द्रः—

**न नूनमस्ति नो श्वः कस्तद् वेद यदद्भुतम् ।**
**अन्यस्य चित्तमभि सञ्चरेण्यमुताधीतं विनश्यति॥१॥**

( तत् न नूनम् अस्ति ) तत् न अधुना वर्तते ( नो श्वः ) नापि श्वो भविष्यति । ( यद् अद्भुतम् तत् कः वेद ) यत् परमोच्चम् अद्भुतञ्च तत् को जानाति ? ( अन्यस्य चित्तम् ) अन्यस्य चैतन्यं ( अभि सञ्चरेण्यम् ) तस्य गत्या क्रियया च समुपेतं भवति, अर्थात् अन्यस्य चैतन्ये तस्य गतिः क्रिया वा भवति, (उत) किन्तु ( आधीतं ) आध्यातं धीविषयीकृतं, धिया समुपसृतं वा तत् ( विनश्यति ) विलुप्यते ।

अगस्त्यः—

**किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।**
**तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥२॥**

( इन्द्र किं नः जिघांससि ) हे इन्द्र ! कुतस्त्वं नो हन्तुमिच्छसि ? ( मरुतः तव भ्रातरः ) इमे मरुतस्ते भ्रातरः सन्ति । (तेभिः साधुया कल्पस्व) तैर्द्वारा त्वं पूर्णत्वं ( सिद्धावस्थां ) संसाधय । ( समरणे ) समरे, लक्ष्यप्राप्तिनिमित्तकेऽस्माकं सङ्ग्रामे ( नः मा वधीः ) अस्माकं वधं मा कुरु ।

इन्द्रः—

**किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे ।**
**विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥३॥**

(किं भ्रातरगस्त्य ) कुतो रे भ्रातरगस्त्य ! ( सखा सन् ) मम मित्रं भवन्नपि त्वम् ( नः अतिमन्यसे ) स्वविचारं मत्तः परस्तात् धारयसि ? अस्तु, ( विद्म हि यथा ) सम्यग् वेदाहं यत् कुतस्त्वं ( ते मनः ) स्वकीयं मनः ( अस्मभ्यम् इत् न दित्ससि ) अस्मभ्यम् न दातुम् इच्छसि खलु ।

**अरं कृण्वन्तु वेदिं समग्निमिन्धतां पुरः ।**
**तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥ ४ ॥**

ते मरुतः (वेदिम् अरं कृण्वन्तु) वेदिं प्रस्तुतां कुर्वन्तु ( पुरः अग्निं समिन्धतां ) स्वपुरतः अग्निं प्रज्वलयन्तु । ( तत्र ) तस्यामवस्थायामेव ( अमृतस्य चेतनं ) चैतन्यम् अमृतत्वं प्रति प्रबुद्धम् भवति । एहि ( ते यज्ञं तनवावहै ) आवां सम्भूय फलसाधकं ते यज्ञं तुभ्यं विततं कुर्याव ।

---

१. श्री अरविन्दलिखितस्य On the Veda इतिग्रन्थस्य 'Selected Hymns' इतिशीर्षाङ्कितद्वितीयखण्डस्य प्रथमोऽध्यायः । —अनुवादकः

**अगस्त्यः—**

**त्वमीशिषे वसुपते वसूनां**
**त्वं मित्राणां मित्रपते धेष्ठः ।**
**इन्द्र त्वं मरुद्भिः सं वदस्वा ध,**
**प्राशान् ऋतुथा हवींषि ॥ ५ ॥**

( वसूनां वसुपते ) वसूनाम् अर्थात् सत्ताया जीवनस्य वा सर्वेषां तत्त्वानाम् अधिपते वसुपते ! ( त्वम् ईशिषे ) त्वं शक्तिमान् ईशः स्वामी वा असि । ( मित्राणां मित्रपते ) हे प्रेमशक्तीनां शासितः प्रेमाधिपते ! ( त्वं धेष्ठः ) त्वं स्थितौ सुप्रतिष्ठं कर्तुम् शक्तिमत्तमः । ( इन्द्र ) हे इन्द्र ! ( त्वं मरुद्भिः संवदस्व ) त्वं मरुद्भिः सह अवश्यं संवादी, सामञ्जस्य-सामस्वर्ययुक्तो भव । ( अध ) अथ ( ऋतुथा ) सत्यस्य सुव्यवस्थित-पद्धत्या ( हवींषि प्राशान् ) हव्यानि स्वादस्व ।

## भाष्यम्

अस्य सूक्तस्याधारभूतः प्रधानविचार आध्यात्मिकोन्नतेरवस्थाविशेषेण संबद्धः । तस्यामवस्थायां मानवस्यात्मा केवलं विचारशक्त्यैव सवेगं प्रगतिं कृत्वा परं पारं गन्तुमिच्छति येनासौ सचेतनक्रियायाः सर्वास्वपि क्रमिकावस्थासु स्वसत्तायाः पूर्णविकासमलब्ध्वैव, परिपाकात्प्रागेव, वस्तुमात्रस्य मूलमुद्गमं प्राप्नुयात् । व्यष्टिजगतः समष्टिजगतश्च शासका देवाः तस्य प्रयत्नमिमं प्रतिरुन्धन्ति । अतो मानवचेतनायां प्रचण्डसंघर्षः प्रवर्तते यस्मिन्नेकतोऽहङ्कारमूलकौत्सुक्यसमवेतो व्यष्टिगतात्माऽपरतश्च विश्वशक्तयो भवन्ति । इमा शक्तयस्तत्र विश्वस्य दिव्यमुद्देश्यं साधयितुमीहन्ते ।

ईदृशेऽस्मिन् संङ्घर्षक्षणे ऋषिरगस्त्यः स्वाऽन्तरनुभूतौ स्वर्पतिमिन्द्रं साक्षात्करोति । स्वर्नाम विशुद्धप्रज्ञायाः लोकः यं निस्तीर्यैव ऊर्ध्वारोही आत्मा दिव्यसत्यं प्रविशति ।

आदौ तावदिन्द्रो वस्तूनां तदज्ञेयं मूलं वर्णयति यत्प्राप्तुमगस्त्योऽत्यन्ताधीरतया प्रयतमान आस्ते । स कथयते— तन्मूलस्रोतः कालातीतम्, काले प्राप्तुमशक्यम् । तद् वर्तमानकालस्य वास्तव ( व्यक्त ) सत्तासु भविष्यस्य सम्भाव्य (व्यञ्जयिष्यमाण ) सत्तासु वा, नावस्थितम् । न हि तदद्य वर्तते, नापि वा इतः परं भवति । देशकालातीता तस्य सत्ता । अतश्च देशकालगतेन केनापि वस्तुना तत् तत्त्वतो ज्ञातुमशक्यम् । आत्मनो रूपैः क्रियाभिश्च तद् आत्मनोऽन्यस्य चैतन्ये स्वात्मानमभिव्यनक्ति । अनेन चैतदभिप्रेयते यत् ताभिः क्रियाभिरेव तस्य साक्षात्कारः कर्तव्य इति । किन्तु यदि कश्चित् तद उपयातुं, तस्य स्वरूपं तत्त्वतोऽनुशीलयितुं च यतते तर्हि तत् ग्रहीतुकामाद् विचारात् तद् अन्तर्धीयते असदिव च सञ्जायते ( मन्त्र १ ) ।

अगस्त्योऽधुनापि एतदवबोद्धुं न प्रभवति यत् तेनानुसृते लक्ष्ये इन्द्रेण तस्येदृक् प्रबलो विरोधः कुतः क्रियते यतस्तल्लक्ष्यं तावत् सत्तामात्रस्य— सर्वभूतानां— चरमोद्देश्यम्, तदेव च तस्य सर्वे विचाराः सर्वेऽप्यनुभवाश्च प्रार्थयन्ते । द्वितीयमन्त्रे निर्दिष्टा 'मरुतो' नाम दिव्यविचारस्य ( धियः ) शक्तयः । ताः अद्यावधि निर्मिताः रचनाः (वस्तुरूपाणि) स्वप्रगतेः । प्रबलतयाऽऽपातविनाशिन्या गत्या विचूर्णयन्ति, नवीनरूपाणामुपलब्धौ च सहायका भवन्ति । विशुद्धप्रज्ञाशक्तिस्वरूप इन्द्रो मरुतां भ्राता । स सत्तादृष्ट्या तेभ्यो ज्यायान् सन्नपि स्वप्रकृत्या तेषां सजातीयः । तस्मादिन्द्रेण मरुत्सा-

हाय्येन तत् पूर्णत्वं सम्पादनीयमेव यदर्थमगस्त्यो यत्नपरायणः । तेन शत्रुणा न भाव्यम्, नापि स्व-मित्रस्यागस्त्यस्य तल्लक्ष्यप्राप्तिनिमित्तकेऽस्मिन् भीषणसङ्घर्षे वधः कर्तव्यः । ( मन्त्र २ )

इन्द्रः प्रतिवदति यदगस्त्यो मम सखा भ्राता च उभयोरपि एकस्यैव परमपुरुषस्य पुत्रत्वादगस्त्य आत्मतः, आत्मिकदृष्टचा इन्द्रस्य भ्राता, उभयोरपि समानप्रयाससहयोगित्वात् स तस्य सखा, मानवे-श्वरयोरेकीकारके दिव्यप्रेमणि च तावभिन्नौ । अनेन सख्येन सहयोगित्वेन चासौ स्वकीये उत्तरोत्तरवृद्धिशीले पूर्णत्वे वर्तमानावस्थामध्यगात् । परं सम्प्रति स इन्द्रमत्रकोटिकशक्तिमेव मन्यते, तद्वदेव च तस्मिन् व्यवहरति, तस्य देवस्य राज्ये संसिद्धि-मलब्ध्वैव च तस्मात् परतो गन्तुमिच्छति । स स्वकीयाभिवृद्ध-विचारशक्तीः स्वलक्ष्य प्रति प्रेरयि-तुमीहते न तु विराट्प्रज्ञायै समर्पयितुम् । वस्तुत-स्तेन तास्तस्यै समर्पणीया येन सा तदद्वारा ( अगस्त्यद्वारा ) सम्पूर्णमानवजातौ स्वकीयसं-सिद्धीः समृद्धीकर्तुं, तञ्च परम 'सत्यस्य' मार्गेण पुरो नेतुं समर्था स्यात् । अहम्भावपूर्णः प्रयत्नः परित्यक्तव्य एव महान् यज्ञः पुनरप्यारब्धव्यः, दिव्यशक्तेर्ज्वालाभूतो अग्निश्च तस्य यज्ञस्य पुरोहितत्वेन, यात्राया अग्रणीत्वेन च स्वपुरतः प्रज्ज्वालनीयः । तथा सति इन्द्रोऽगस्त्यश्च अर्थात् विराट्शक्तिर्मानवात्मा च उभावपि सम्भूय सङ्ग-तिपूर्वकं विशुद्धप्रज्ञायाः स्तरे फलप्रसविनीमन्तः क्रियां निष्पादयिष्यतो व्यापकतया, येन मानवात्मा तत्रात्मानं सुसमृद्धं कृत्वा ततः परतरं लक्ष्यं प्राप्तुं पारयेत् । यतो हि दिव्यक्रियाः प्रति अवर (निम्न) सत्ताया उत्तरोत्तरमात्मसमर्पणेनैव मर्त्यस्य सीमि-ताऽहम्भावपूर्णा च चेतना स्वलक्ष्यभूतमनन्तममृतत्वं प्रति प्रबुद्धचते । (मन्त्र ३–४)

इन्द्रदेवस्येच्छां शिरसा धृत्वाऽगस्त्य स्तस्मै आत्मसमर्पणं करोति । तेन सहैकमतः सन् स स्वी करोति यत् तस्य क्रियास्वपि परमदेवः प्रत्यक्षीका-र्यश्चरितार्थताञ्च नेय इति । यत्सत्यम्, सत्ताया जीवनस्य वा तत्त्वानि ( वस्तूनि ) देहप्राणमनसां त्रिवृल्लोकद्वारा यद्विधान्यपि अभिव्यज्यन्ते तद्वि-धानां तेषां परमाधिपतिः स इन्द्रः शास्ति तानि स्वकीयलोकात् । अतो विश्वे स्वात्माभिव्यञ्जकस्य दिव्यसत्यस्य संसिद्धये स विश्वप्रकृतेर्गतौ अस्य त्रिवृल्लोकस्य रचना उपयोक्तुं प्रभुः । अस्मि-न्नेव त्रिविधलोकेऽभिव्यज्यमानयोः प्रेमानन्दयोरपि परमाधिपतिरसौ । अतश्चैता रचनाः प्रकृतेः स्तरे स्तरे सुसमञ्जसतया स्थापयितुं सामर्थ्यसम्पन्नो-ऽसौ । एतत् सर्वं विज्ञाय अगस्त्यः स्वकीयाः सर्वाः अपि संसिद्धीर्यज्ञस्याहुतीरिवेन्द्रस्य हस्तयोः समर्पयति येनासौ ता अगस्त्यस्य चेतनायाः सुप्रतिष्ठप्रदेशेषु धारयितुं, नवीनरचनानिष्पत्तये क्रियायां प्रवर्तयितुं च प्रभवेत् । सकृत् पुनरपीन्द्रेणागस्त्यस्य सत्ताया ऊर्ध्वमुखाभीप्सा – शक्तिभिः (मरुद्भिः) साकं मैत्रीसंलापः करणीयः, तस्य महर्षेर्विचारनिचये तस्मिञ्ज्योतिषि च सामञ्जस्यं स्थापनीयं यज्ज्योति-रस्माभिर्विशुद्धप्रज्ञामाध्यमेन प्राप्यते । एवं सती-न्द्रशक्तिः परतरसत्येन सुविरचितं शासितं च यथार्थवस्तुविधानम्[१] अनुसरन्ती अगस्त्ये यज्ञहवींषि समुपभोक्ष्यते । (मन्त्र–५ )

**अनुवादकः – श्री जगन्नाथो वेदालङ्कारः ।**

---

१. ऋतुथा–ऋत्वनुसारम् । ऋतुश्चात्र ऋतम् ऋतविधानं वा । 'ऋत'–'ऋतु' शब्दयोः समान-धातुव्युत्पन्नत्वात् ऋतुशब्दोऽत्र ऋतस्य ऋतुं कालं क्रमं वा संकेतयति प्रतीकात्मकतया । —०—

# 'शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते'

**श्री प्रो० वेदप्रकाशो वेदालंकारः, एम. ए., विद्यावाचस्पतिः (डी. ए वी. कालेज, अम्बाला)**

निर्विवादं ब्रह्मबलं क्षात्रबलात् उत्कृष्टतरं परं ब्रह्मबलस्य उपयोगः यदि भौतिकपरिस्थिति-विजयाय क्रियते तदा महान् खलु तस्य दुरुपयोगः। महार्हं हि ब्रह्मबलम्। यदि सामान्यशाकक्रयाय कश्चित् स्वर्णमुद्रां ददाति तदा तस्य शाकप्राप्तिस्तु भविष्यति परमसौ मूर्ख एव मंस्यते। लवणासुरः त्रस्तः पीडितश्च यदा तपस्विनो रामस्य समीपे शरणार्थिनो भूत्वा समायातस्तदा कविकुलगुरुः कालिदासः कथयति—

**'अवेक्ष्य रामं ते तस्मिन् न प्रजहुः स्व तेजसा।**
**त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम्॥**

अतः भारतीय वर्णाश्रमव्यवस्थायां क्षात्रधर्म-स्यापि सुदृढा व्यवस्था। यथा ऋग्वेदे पुरुषसूक्ते—

**'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः।**
**ऊरु तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत॥**

साम्प्रतं बाह्वोः अभावे शरीरस्य रक्षा न सम्भवति। निर्विवादं मुखे मस्तिष्के च महती ज्ञान शक्तिस्तथापि यावत् भुजबलेन शत्रोः पराभवो नस्यात् राष्ट्रञ्च सर्वथा सुरक्षितं न स्यात् न तावत् केनापि कथमपि आध्यात्मिकचिन्तनं कर्तुं शक्यते। 'शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते' इति।

भारतस्य इतिहासोऽपि अस्य साक्षी। यदाऽस्माकं शस्त्रबलं ह्रसितं वयञ्च पराधीना जाताः। अस्माकं शास्त्रविकासोऽपि रुद्धः। वैदिकआर्याः शस्त्रास्त्रसम्पन्नाः सदैव अश्वारोहिणः महावीराः योद्धारो बभूवुः, तैरेव उत्कृष्टवैदिकवाङ्मयस्य रचना व्यधायि। अतः यस्मिन् समये क्षत्रियवर्गः क्षतत्राणनिरतः, देशसीमारक्षणतत्परः तिष्ठति तस्मिन् समये शास्त्राध्येतारः नवीनविचारणां विदधति। अत एव यदा खैबरमार्गात् आक्रान्तारः निरन्तरं समाययुः सर्वे पञ्चनदप्रदेशवासिनः युद्ध-निमग्नाः जाताः, तेषु दिवसेषु सर्वशास्त्रविकासः दाक्षिणात्यदेशे जातः यत्र आक्रान्तृभयं नासीत्। अद्यैव दृश्यतां पाकिस्तानदेशः भारतं आक्राम्यति अस्माकं सर्वापि शक्तिस्तत्र जाता। एतादृशे वातावरणे कीदृशी दर्शनचर्चा शास्त्रचर्चा वा। विद्यालयेषु महाविद्यालयेषु अपि सर्वत्रैव एन. सी. सी. शिक्षायाः तथा सैनिकशिक्षायाः महद्वातावरणम्। सत्यमेव क्षत्रियेण विना ब्राह्मणः अरक्षितः। ब्राह्मणेन विना क्षत्रियः पशुर्भवति। अत एवोक्तं—

'अग्रतश्चतुरो वेदान् पृष्ठतः सशरं धनुः'।

किञ्च रोमदेशस्य विषये कः खलु न जानाति यत्र भौतिकक्षेत्रे आध्यात्मिकक्षेत्रे वा अपूर्वैव उन्नति र्जाता। तस्य ज्ञानसूर्यस्य प्रकाशः सर्वत्र प्रसृतः आसीत्। परं सैव रोमसभ्यता राष्ट्रस्य रक्षाऽभावे विनाशगर्तं सम्प्राप्ता। एवं इतिहासेन ज्ञायते यत् ताः सर्वाः अपि संस्कृतयः सभ्यताश्च राष्ट्रस्य सुरक्षाऽभावे विलीनाः जाताः।

अद्य अमेरिकादेशे भूशास्त्रस्य महती चर्चा विद्यते। महान्तो विश्वविद्यालयास्तत्र ये खलु दर्शनस्य गवेषणादिकार्यनिरताः, यतः असौ देशः अणुबमरक्षितः। अस्माकञ्च देशे सर्वत्र पाकिस्तान-आक्रमणचर्चा चीनी आक्रमणचर्चा वा विद्यते। सामान्यपठने एव अपि विद्यार्थिनां मनो न रमते। सर्वत्र सैनिकशिक्षावर्धनस्यैव उपदेशः नेतृभिर्दीयते।

एवं दृश्यते यत् यदा राष्ट्रं शस्त्रास्त्रैः सर्वथा सुरक्षितं भवति यदा च तत्र निश्चिन्ततायाः साम्राज्यं जायते तदैव सर्वविधा उन्नति र्भवति आध्यात्मिकक्षेत्रे भौतिकक्षेत्रे वा। अतः एतस्मिन् राष्ट्रस्य संकटकाले अस्माकं सर्वेषामपि शास्त्राध्येतॄणां इदं कर्तव्यं यत् तन्वा, धनेन, मनसा, स्वजीवनेन, स्वजीवनस्य एकैकेन क्षणेन, स्वदेहस्य च एकैकेन कणेन राष्ट्रस्य रक्षायै सततं प्रयत्नशीलाः भवेम। तदैव अस्माकं शास्त्रचिन्ता अपि प्रवर्तमाना भविष्यति।

—०—

# क्षमा

आचार्यः श्री दत्तात्रेय बालकृष्ण कालेलकरः

महाभारत-प्रणेता भगवान् बादरायणः यदा सत्यस्य त्रयोदश प्रकारान् परिगणयितुं आरेभे तदा तस्य चेतसि सत्यनारायणस्य कथं विधः साक्षात्कारः समभवत् ? सत्यस्य कोदृग् विराट्दर्शनमसौ लेभे ?

समतया साकं सत्यस्य संबधः सर्वथा सुस्पष्टः । अमात्सर्यं, दमः तथा मुदिताऽपि सत्येन सह सम्यक् समन्वयं भजन्ते पर विस्मयावहः प्रश्नस्तावदयं समुदेति यत् सत्येन साकं क्षमायाः संबन्धः कथं संपद्यते, संस्थाप्यते वा ।

सत्येन सार्धं वयं सदैव न्यायनीतिं योजयामः। प्रतिपाद्यते च यत् सत्यं तु नितरां कठोरं भवति तत् खलु क्षमां न जानीते । मुनिः दुर्वासा यदा राज्ञे अम्बरीषाय क्रुध्यति तदा ब्रूते—

नाहं दयालु-हृदयः, न च मां भजते क्षमा ।
अक्षान्ति-सार-सर्वस्वं, दुर्वाससमवेहि माम् ।।

सत्यनिष्ठं, जनं वयं सदैव सुकठोरं न्यायनिष्ठं, तपोनिष्ठं च मन्यामहे । तस्य हस्ते समानतायाः तुला, न्यायस्य च खड्गो भवति । परन्तु भारत-प्रणेता तावत् क्षमां सत्यस्य एकां पारमितामेव प्रतिपादयति । तस्याश्च गौरवं अवगन्तव्यमेव अस्माभिः । महाभारतस्य उद्गातुः सत्यं तावत् जीवनस्य सत्यम् । स हि पौनःपुन्येन प्रतिपादयति—

सत्यस्य वचनं श्रेयः, सत्यादपि हितं वदेत् ।
यद्भूतहितमत्यन्तं, एतत् सत्यं मतं मम ।।

भूतानां एकान्त-हिताय यत् कल्पते तदेव, सत्यम् इति वयं अनुशुश्रुमः, जानीमः मन्यामहे च । अत्र भारतकारः तर्कं अनुसंधत्ते—

स्खलितः स्खलितो वध्यः, इति चेत् निश्चितं भवेत् ।
छिन्ना यद्येव शिष्येरन्, बहु-दोषा हि मानवाः ।।

तस्मात् प्राणिमात्राणां त्राणाय, कल्याणाय च क्षमा परमावश्यका ।

अपरया दृष्ट्यापि अत्र अस्माभिः आलोचनीयम् । यदा वयं कस्यापि कमपि दोषं विलोकयामः तदा तदुपरि अमर्षः आक्रोशो वा सहसैव विधीयते । तस्मिन् विद्यमानानि अतिशुभानि तत्वान्यपि अस्माभि स्तदा विस्मृयन्ते । परिणामतया च तस्य विषये स्वीयेन न्यायविषयकेण अधिकारेण वयं वंचिताः भवामः । यश्च न्यायाधिकार-विहीनो जायते स वै कथं न्यायं विधास्यति ? तस्मान्मुनयो ब्रुवते यदा वयं यस्य कस्यापि दोषं पश्येम तदा समकालमेव तस्य उदात्तगुणा अपि अस्माभिः अवलोकनीयाः । येन गुणदोषाणां गणना युगपदेव संभवेत् । दोषान्वितस्य च वास्तविकं चित्रं लोचन-गोचरं भवेत् ।

सर्वेषां जनानां सकलाः गुणाः समकालमेव समग्रतया ध्यानविषयाः न जायन्ते । तस्मात् तत्र क्षमावृत्तिः सेवनीया । येन अस्मद्-हेतोः कोपि अन्यायभागी न भवेत् । अत्र भगवान् व्यासदेवः वक्ष्यति— "कठोरः न्यायस्तु न्याय एव नास्ति ।"

न्यायधर्मस्य प्रथमं लक्षणं तावत् सर्वमांगल्यं—सर्वकल्याण-कारिता । तस्य च आधारः क्षमैव भवितुमर्हति । अत्युग्रः कठोरश्च न्यायः कदापि शीतलो न भवति, स तु दाहको भवति । तस्माद् एवं विधस्य न्यायस्य क्षमया शीतलीकरणं आवश्यकं भवति । सत्यस्य न्यायस्य च जीवननिष्ठता, कल्याणकारिता, सर्वोदय-कारिता च निकामं आवश्यका ।

( भाषान्तरकर्त्ता–शंकरदेवो विद्यालंकरः ) ।

— ० —

# सम्पादकीय टिप्पण्यः

## युद्धम्

युद्धमनिवार्यं न केवलमनिवार्यं परमावश्यकम्। योऽसौ महेश्वरो रुद्रनाम्ना वेदेषु प्रथितस्तस्य तद् रूपं घोरमिति व्याचक्षते विचक्षणा भाष्यकोविदाः। परं शिवोऽपि स एवेति जोघुष्यते तैः। एकया दृष्ट्या घोररूपोऽन्यया च शिवरूपोऽसौ परिदृश्यते इत्यस्ति पारदृश्वनां तत्त्वचिन्तकानां व्याहरणम्। अहो! कीदृशी विचित्रैषा निर्माणचातुरी सर्वसमर्थस्य सृष्टिकर्त्तु र्यद् विरूपयो विभिन्नगुणपरिणामयोरेकत्र समवस्थायित्वम्। योऽसौ घोरो महेश्वरः प्राणिनः संहरते स तेषां कल्याणायैव। प्रजासु यद् युद्धं प्रसृतं भवति मनुष्येषु व्याधिर्वोपजायते तत्तेषामुपकारायैवेत्याकलनीयम्। बहुप्रजा निर्ऋतिमाविवेश इति श्रुति दृशा विचारे कृते सति निर्ऋतेः पापदेवताया अपाकरणाय प्रजानां विनाशस्तासां सुखसंवर्धनायैव मन्तव्यः। यदि भूतलाद् युद्धस्यात्यन्तं समूलोच्छेदः सम्भाव्येत तन्महद्भयं समुपस्थितमित्यूह्यम्। क्षत्रियजातेस्तु युद्धं चरमोद्देश्यं परमं पावनं स्वर्ग्यं शास्त्रेषु प्रतिपादितम्। ये च सर्वेभ्योऽहिंसाया आचरणमावश्यकं मन्यन्ते तथैव प्रचार च विदधति प्रकृतिविरुद्धं तेषां तत् कार्यम्। स्वप्नलोकविहरणं च तेषा तदूहनीयम्। लोकेषु प्रसृतयोः रजस्तमसोस्तद् दोषाणां वा निहन्तृ युद्धमिति जोघुष्यतेऽस्माभिः। युद्धेन विघटनप्रवृत्तिं विहाय संघटयते लोकः। पाकिस्तानस्य चीनस्य वाऽऽक्रमणे सति विविधवेशभूषाभाषावतां नानाधर्मानुयायिनां सहसैकत्वप्रदर्शनं किं न प्रत्यक्षीकृतं लोकैः? एवं विपत्तौ सत्यां मर्त्ये सद्गुणाः प्रकटीभवन्ति। युद्धे यै र्मृत्युर्यमो वा स्वयंवृतस्तैः पृथिव्या मोहः शरीरादिमोहो वा परित्यक्त इति। न तेषु रजो रागमलो वाऽवशिष्टः। तांल्लक्ष्यीकृत्यैव व्याहृतं शास्त्रकारैः—

सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स ह्यव्ययात्मा।

महाभारते—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राट् योगयुक्तश्च रणे वाऽभिमुखो हतः॥

## युद्धविरामः

एष युद्धविरामो न खलु भारतपाकिस्तानयोर्मध्ये शान्तिकरणाय समजायत, अपितु आंग्लाऽमेरिकीयानां कपटनीतिनिपुणानां दुरभिसन्धिरयं युद्धविराम इति भारतीयजनसामान्यस्याभिमतमिदम्। भारतवर्षं धूलिसात् कर्तुं नापामादिघातकशस्त्राणां प्रयुञ्जानेन पाकिस्तानेनामेरिकादेशो न वञ्चितः परं कम्युनिस्ट प्रतिरोधव्याजेन चीनपांसवो भारतस्याक्षिषु पातिता अमेरिकादेशेनेति मन्तव्यम्।

## राष्ट्रमण्डलम्

राष्ट्रमण्डलनिर्माणावसरे डिण्डिमोद्घोषेण समुद्घोषितमासीत् यद् राष्ट्रमण्डलान्तर्वर्तिदेशानामनेन साम्यं परस्परोपकारं साहाय्यं वा भविष्यति अत्र न कस्यापि निघ्नत्वमुन्नतत्त्वं वा विद्यते। परमस्मन्मते नैषा वास्तविकी स्थितिः। अद्यापि ब्रिटेनस्य केन्द्रीभूता स्थितिरन्येभ्यो देशेभ्य प्रकृष्टपदवी च विलोक्यते। एतत्तु मनोवैज्ञानिकं तथ्यं यदनेन राष्ट्रमण्डलसम्बन्धेन पूर्वं भारतीयजनमनस्सु प्रसृता दासमनोवृत्तिर्न कथमप्यपयास्यति। अतो भारतवर्षायेदमेव हितं युक्तं च पदं यदसौ राष्ट्रमण्डलाद् बहिर्निस्सरेत्। अस्मन्मते तु अस्मिन्नेशियाक्षेत्रे तां केन्द्रीभूतां स्थितिं भारतं नूनं लप्स्यते। भारतवर्षमग्रे निधायान्ये तमनुसरिष्यन्तीति निश्चप्रचमिव निगद्यतेऽस्माभिः। तत् कुतः परमुखप्रेक्षणं परप्रभावायत्तत्वं युक्तमिति निभाल-

यन्तु नीतिविदः प्रणेतारः । यदि केषाञ्चिन्मते राष्ट्रमण्डलकक्षातो बहिः पदनिधानं नोपकारकारि भविष्यति तदन्यदेशैः सह मिलित्वा सम्यक् परामृश्य चैष प्रयत्नो विधेयो यद् राष्ट्रमण्डलस्य प्रधानपीठमन्यत्र भवेत् । एतदवधातव्यं यत् रूसदेशेनास्माकं निर्व्याजसाहाय्यं विहितम् । अतः कान्यस्माकं मित्राणि कानि नेति विचार्य विदेशनीतौ परिवर्तनं कर्तव्यम् ।

## दीपावलिः

अहो ! महदाश्चर्यम् अमावस्यायामन्धे तमसि पर्वणः सत्ता स्वीकृता पूर्वैः पूर्वजैश्च । दीपावल्यां प्रज्वालिताः मृण्मयाः प्रदीपाः पन्थानं प्रकाशयिष्यन्ति, हर्म्ये स्थितानि वस्तूनि प्रकटीभविष्यन्तीति कृत्वा न दीपावलिर्मन्यते । नेमे मृत्प्रदीपाः, तमःस्तोमनीला साऽऽसुरीशक्तिर्यदा पारमेश्वरीं चेतनां हठात् संवृणोति तदा हृदि संनिलीना ज्योतिरुद्बुध्य प्रदीपवत् प्रकाशते बलवद्दुर्वृत्तस्यापि पुरुषस्येति भावोऽत्र गुम्फितः । एवमेव यदा जगच्चेतना तमोबहुलया तामसिक्या वृत्या प्राव्रियते, तमसि लीनाः प्रसुप्ता जायन्ते मानवास्तदा साग्निपुरुषाणां संसर्गादन्येऽपि प्रज्वलन्ति । अतः प्रज्वलितः प्रदीपोऽन्येषां संज्वलने हेतुर्भवति । "अग्निनाऽग्निः समिध्यते ।" इति श्रुतेश्चरितार्थता जायते । अपरमप्येकमाश्चर्यं यन्मानवाः गाढान्धतमसे श्रीरागमिष्यतीत्यतिशयभक्तिभरितेन वचसा स्तुवन्त्यौत्सुक्येन प्रतीक्षन्ते च । परं प्रश्नोऽयं किमसुरेभ्यो भीतभीता प्रच्छादितवेषा साऽऽगच्छतीति न मन्तव्यम् ।

अत्रेदं शास्त्रवचनं स्मर्तव्यम् -- "अन्नं वै वाजः । यदा वै गौरश्वः पुरुषोऽन्नस्य सुहितो भवत्यथ स वाजी भवति । देवासुरा अन्नाद्येऽस्पर्धन्त । ते देवा अकामयन्त वृञ्जीय ह्यन्नाद्यमसुराणामिति । त एतत् सामापश्यन् । तेनाऽस्तुवत । ते वाजजिगीवा विश्वधनानीत्येवासुराणां यद् धनं ये पशवो यदन्नाद्यमासीत् तदवृञ्जत तदेव वाजजितो वाजजित्वम् । जै. ब्रा. ३. २९९ ।

अतः शास्त्रवचनानुसारेण चीनपाकिस्तानयोः सकाशात् अस्माकं राष्ट्रे श्रिया आगमनं दीपावल्याः सत्यं स्वरूपमस्ति । तदेव वाजजितो वाजजित्वमिति मन्तव्यम् ।

महर्षिदयानन्दस्वामिनो निर्वाणदिनमप्येतद् विद्यते तेषां सर्वशरीरव्यापिविटिका अध्यात्मप्रकाशकरा सञ्जाताः ।

# साहित्य-समीक्षा

## संगमनी (त्रैमासिकी)

सम्पादकः--श्री प्रभात शास्त्री ।

सहसम्पादकौ—श्री तारिणीश झाः । व्याकरण वेदान्ताचार्य, श्री जयशङ्कर त्रिपाठी, साहित्याचार्यः, एम. ए. ।

प्रकाशकः—संस्कृत साहित्य परिषद्, दारागञ्ज, प्रयाग । वार्षिक मूल्यम् ५ ०० रु. ।

त्रैमासिकी संगमनी नाम्नी पत्रिका समालोचनार्थं समधिगता । पत्रिकाया अङ्कद्वयमस्माकं समक्षे विद्यते । अस्याः पत्रिकाया उद्देश्यं तत्रत्यैः शब्दैरित्थं — "संगमनीपत्रिकाऽनेनैवोद्देश्येन परिषदा प्रकाश्यते यत् संस्कृतभाषायां तस्या विशालवाङ्मये चाभिरुचिं गृह्णन्तो विद्वांसोऽस्या माध्यमेन यदा तदा संस्कृतवाङ्मयस्य विभिन्नेष्वङ्गेषु स्वल्पमनल्पं वा गवेषणात्मकमनुशीलनात्मकं च विचारं व्यक्ती

करिष्यन्ति · · संगमनी पत्रिकाया अपरापीयं योजना यत् संस्कृतस्याप्रकाशितग्रन्थानां प्रकाशनं क्रमशोऽस्यां भविष्यति ।"

सदुद्देश्यं साधुसमारम्भश्चास्याः पत्रिकायाः पठनेन ज्ञायते । अप्रकाशितग्रन्थानां प्रकाशनयोजनाऽपि महान्तमानन्दं जनयति । अङ्कद्वये प्रकाशिताः सर्वा अपि कृतयः सुरुचिराः पाण्डित्यपूर्णाश्च विद्यन्ते । संस्कृतभाषायाः प्रचाराय संस्कृतवाङ्मयस्य संवर्धनाय च पत्रिकेयं बद्धपरिकरा सती सततमुन्नतिपथमधिगच्छेदित्यस्त्यस्माकं कामना अस्या पत्रिकायाश्च सम्पादकमहाभागाः श्री प्रभातशास्त्रिप्रभृतयः धन्यवादार्हा अभिनन्दनीयाश्च ।

## सुधारक

### प्राणायामविशेषांकः

सम्पादकः – श्री भगवानदेव आचार्यः ।

सहसम्पाकः— श्रीदयानन्दो व्याकरणाचार्यः ।

सुधारक पत्रस्यायं प्राणायामविशेषाङ्कोऽस्माकं हस्ते विद्यते । अस्य पत्रस्यानेकेषां विशेषाङ्कानामस्मिन् स्तम्भे पूर्वमप्यस्माभिः समालोचना विहिता । अस्य पत्रस्य सर्वातिशायि वैशिष्ट्यमिदमेवास्ति यत् पत्रमिदं मर्त्यस्य स्वजीवनपथे पदे-पदे मार्गावरोधकारिणीः बाधाः, देहप्रभ्रंशकारिणश्चारित्रिकान् दोषान् अन्यांश्च कण्टकप्ररोहान् समालम्ब्य विशेषांकान् प्रकाशयति येन स्याद्दुल्वणो निष्कण्टकश्च तस्य जीवनमार्गः । सदुद्देश्यमिदमूरीकृत्य "ब्रह्मचर्य के साधन" अस्मिन् शीर्षस्तम्भे आसननिद्रादिविशेषांकयुतानि बहूनि साधनानि समये समये पुरतः स्थापितानि सम्पादकमहाभागैः । अस्मिन्नङ्के शास्त्रेषु निगदितानि प्राणापानादीनां महत्वप्रदर्शकानि वचनान्युद्धृत्य विस्तरेण विविधाः व्याध्यादीनां विनाशकाश्च प्राणायामाः, तेषां प्रक्रियाश्च प्रदर्शिताः । राजर्षिसमकक्षस्य श्री आचार्य भगवानदेव महाभागस्य सच्छिष्य इन्द्रदेवोऽस्यांकस्य निबद्धा । वयं सम्पादकमहाभागाय धन्यवादं श्री आचार्य भगवानदेवाय श्रद्धाञ्जलिपुरस्सरमभिनन्दनं कुर्मः । सर्वैः जनैरयमङ्कोऽवश्यं ग्राह्यः । वयं देशविदेशेषु प्रभूतं प्रचारं कांक्षामः ।

## पुण्यलोक ( मासिक )

सम्पादकः—श्री वेदमुनि परिव्राजकः ।

व्यवस्थापकः—वैदिक संस्थान, बालावाली, जि. बिजनौर ( उ प्र. ) । वार्षिकं मूल्यम्, देशे ५ रु., विदेशे ८ रु. ।

गङ्गातटवर्तिबालावालीप्रदेशात् प्रकाश्यमानं पुण्यलोकाभिधं मासिकं पत्रं सम्प्राप्तम् । पत्रमेतत् प्रमुखरूपेण धार्मिकं विद्यते । राष्ट्रे सांस्कृतिक सामाजिक राष्ट्रीयचेतनानामुद्बोधनमप्यस्य सदुद्देश्यं विद्यते । धर्मद्वेषिष्वसद्वृत्तप्रचारप्रवणेषु गुणेष्वपि दोषाविष्कर्तृषु नैतिकताविहीनेषु सरितादिपत्रेषु प्रकाशितानां मिथ्याप्रचाराणां खण्डनमप्यत्रावलोक्यते । आर्यसंस्कृतिसंरक्षणपरायणा लेखा अत्र स्थानं लभन्ते । वेदादिशास्त्रसंबद्धा गवेषणात्मकाः प्रबन्धा अप्यत्र प्रकाश्यन्ते । अस्य सम्पादकमहाभागाः श्रीमन्तो वेदमुनि परिव्राजकाः विद्यन्ते । एते वीतरागसंन्यासिनः सन्ति । वैदिक धर्मप्रचार एव येषां प्रमुखं जीवनोद्देश्यमस्ति । एवमेव यदि सर्वे भारतीयाः संन्यासिनः धर्मसमाजराष्ट्रोन्नत्यै कटिबद्धाः स्युस्तद्राष्ट्रमिदमुन्नतेः सर्वोच्चशिखरमधिरूढं कथं न स्यात् । एते सन्यासिवर्याः सम्पादकमहाभागाः साधुवादार्हाः । वयं पत्रस्यास्य प्रभूतं प्रचारं कामयामहे ।

भगवद्दत्तो वेदालङ्कारः एम. ए. ।

---

